श्रीशिवः शरणम्

...र्थ-वर्ष Special Republic Number. संख्या ५

# मञ्जूषा

111128

संस्कृतभाषामयी मासिक-पत्रिका

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः



Office : 81 Shyambazar Street, Calcutta—4
Annual Subscription : Rupees Six only.
Foreign : Rupees Eight.

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस् प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जू प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भा देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथा आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धा व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा, मीमांसा च पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादा पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, सभाष्यम् ऋग्वेदो मुद्र्यन्ते।
सागरः" क्रमशः प्रकाशयिष्यते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत। चैत्रतः शोधनादीनां समीचीना व्यवस्था भविष्यति।


श्रीविश्वनाथ चट्टोपाध्यायः।

८१ श्यामबाजार ष्ट्रीट्, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone: B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| | | |
|---|---|---|
| January, 1950. | १८७१-शकीयमाघस्य ४र्थ-वर्षस्य ५म-संख्या | Vol. IV No. 5 |


## स्वाधीनतादिवसे शान्तिपाठः

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥
मधु नक्तमुतोषसो मधुमत् पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥

ऋक्संहिता १।९०।६-८

वेङ्कट-व्याख्या ।

वाता मधु क्षरन्त्यस्मै सत्यमिच्छति यो नरः ।
तद्धि सूर्यसमं ज्योतिस्तदिच्छन्निह सिध्यति ॥
यत् सम्भरन्ति सरघाः पुष्पेभ्यस्तन्मधु स्मृतम् ।
अस्मै सत्यविदे सर्वं तत् क्षरन्तीति कीर्त्यते ॥

मधुसत्यः ओषधयश्च अस्माकं भवन्तु ॥६॥

रात्रौ मधु भवत्वस्माकम्। अपि च। उषसश्च। मधुमान् भवतु पार्थिवो लोकः। मधुमती द्यौरस्तु अस्माकं पितेति ॥१॥

मधुमान् अस्माकम् वनस्पतिर्वृक्षाधिपतिः सूर्यश्च। मधुमत्यः गावश्च भवन्तु ॥८॥

आ ब्रह्मन्, ब्राह्मणो ब्रह्मवर्चसी जायताम्। आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः, पुरन्धिर्योषा, जिष्णू रथेष्ठाः, सभेयो युवा। आस्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु, फलवत्यो न ओषधयः पच्यन्ताम्। योगक्षेमो नः कल्पताम्।

वाजसनेयिसंहिता २२।२२

व्याख्या। हे ब्रह्मन्, राष्ट्रे अस्मद्देशे ब्रह्मवर्चसी यागाध्ययनशीलः अत एव ब्रह्मतेजःसमिद्धः। राजन्यः क्षत्रियश्च शूरः पराक्रमी इषव्यः इषुषु साधुः अस्त्रशस्त्रकुशलः इत्यर्थः, अतिव्याधी नितरां शत्रुभेदनशीलः। "शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः" इति सनातनीं नीतिं समनुसृत्य शत्रूणां समूलम् उन्मूलयिता। महारथः विशालरथः एक एव सहस्रशः शत्रूणां समुत्सारणे समर्थः इत्यर्थः। दोग्ध्री प्रभूतपयःप्रदात्री धेनुः गौः अनड्वान् वृषभः च वोढा भूरिभारवहनक्षमः, सप्तिः घोटकः आशुः अतिजवः राष्ट्रे आजायतामित्यनुषङ्गः। योषा नारी पुरन्धिः गृहकर्मदक्षा सौन्दर्यसौशील्यगृहकर्मकुशलत्वादिगुणसम्पन्ना वा, रथेष्ठाः रथारोही योद्धा जिष्णुः जयशीलः, युवा तरुणः सभेयः सभायां साधुः राष्ट्रे आजायतामित्यनुषङ्गः। अस्य यजमानस्य वीरः शूरः पुत्र आजायतामित्यनुषङ्गः। निकामे निकामे नः यदा यदा यथैवास्माकमभिलाषो भवेत् तदा तदा तथैवेत्यर्थः पर्जन्यः वर्षतु। ओषधयः नः अस्माकं यवाद्यानि फलपाकान्तानि शस्यादीनि पच्यन्ताम् स्वयमेव परिणता भवन्तु। नः अस्माकं योगक्षेमः अलब्धानां भूमिहिरण्यादीनां लाभः योगः, लब्धानां तेषां परिपालनं क्षेमः नः अस्माकं कल्पताम् क्लृप्ता भवतु समृध्यतामित्यर्थः।

## स्वाधीनता

अहो नु खलु कोऽप्ययं भाग्येयोदयो भारतवर्षस्य यद् बहोः कालादनन्तरमंशतोऽनेन विमोचित आत्मा वैदेशिकनिगड़-बन्धनात्। कामम् अद्यापि भूयान् भागो वैदेशिककर्बले वर्तते तथापि विमुक्तयानया स्वर्गादपि गरीयस्या जनन्या जन्मभूम्याः कस्य न प्रमोदते चेतः सहृदयस्य। परं यथेयं मुक्तिः पारमार्थिकी स्यात् न पुनः प्रातिभासिकी तथा सर्वैरस्माभिः सर्वात्मना सर्वशक्त्या सर्वथा प्रयतनीयम्। आदौ तावत् कामक्रोधादिरिपुषट्कान्मोचयितव्य आत्मा, ततश्च सर्वात्मना स्वं स्वं कर्म कर्तव्यम्—मातरि वर्तितव्यम्, पितरि शुश्रूषितव्यम्, भ्रातरि स्वसरि च सखिभावेन वर्तितव्यम्, पुत्रे दुहितरि च स्वकर्तव्यं पालनीयम्, दासीदासे परिचारकवर्गे च स्निग्धं व्यवहर्तव्यम्। परापवादतः परानिष्टचिन्तनतश्च विरन्तव्यम्—किं बहुना यो यत्रापि वर्तताम् सर्वैः स्वधर्मः पालनीयः निवर्तनीयश्च कामकारतः। सर्वथा न विस्मरणीयं स्वाधीनता भिद्यत एवोच्छृङ्खलतात इति। सर्वेष्वेव मनुजेषु काचन पशुप्रकृतिर्वर्तते काचन पुनर्दैवप्रकृतिः। तत्र सर्वथा पशुप्रकृतिपरिहारेण देवप्रकृतेरेव परिपोषः साधनीयः। मायाविषु च मायया वर्तितव्यम्, व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः। ये च पिशाचचेष्टं चेष्टेरंस्तेषां शासनं विधेयम्—शास्येत् प्रत्यपकारेण नोपकारेण दुर्जन इति।

स्वस्मिन् अधि इति स्वाधीनः, स्वं च आत्मा। आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः। सर्वदा स्मर्यताम्—

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्॥

इति।

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।

इति च।

## राशिवडेकरः अप्पाशास्त्री विद्यावाचस्पतिः

अद्यास्मिन् सुदिवसे स्वत एवास्माकं मनोरथगुरोरप्पाशास्त्रिणो नाम स्मरणसरणिमनुप्राप्नोति। अनेन हि आङ्गलवङ्गहिन्दीमाराठी-प्रभृति-विविधभाषासु व्युत्पन्नेन न केवलं संस्कृतचन्द्रिका नाम मासिकपत्रिका भाषासौष्ठवेन श्रेष्ठपाश्चात्त्यपत्रिकाणां समकक्षतां नीता, अपि तु भारतवर्षस्य स्वाधीनतालाभाय भाषणानि प्रदत्तानि, पुनः पुनश्च व्यापारिता लेखनी। अस्माभिर्मञ्जूषायां महात्मनोऽस्यामृतमयानि पत्राणि प्रकाशयिष्यन्ते। येषां सविधे अप्पाशास्त्रिणः पत्राणि वर्त्तन्ते तैः कृपया मूलानि पत्राणि वा तेषां प्रतिलिपयो वा प्रेष्यन्ताम्। मूलपत्राणि मुद्रणानन्तरमवश्यमेव प्रतिप्रेषयिष्यन्तेऽस्माभिः। वाचकमहाभागेषु कैश्चित् अप्पाशास्त्रिणो जीवनचरितं विलिख्य प्रेष्यते चेदस्माभिः सानन्दं मुद्रयिष्यते। यस्य च लेखः शोभनतमः स्यात् तस्मै दश रूपकाः प्रदीयेरन्। अप्पाशास्त्रिणाम् Arabian Nights इत्यस्य संस्कृतभाषामयोऽनुवादः कस्यचित् सविधे स्याच्चेत् कृपयास्मभ्यं मुद्रणार्थं प्रदीयतामिति नः प्रार्थना। सूनृतवादिनी-पत्रिकामपि वयं मूल्यप्रदानेन क्रेतुमिच्छामः। यैर्विक्रेतुमिष्यते ते मूल्यादिकं सूचयन्तु।

---

## अनात्मज्ञत्वम्

[ अप्पाशास्त्रि-विद्यावाचस्पतिः ]

अतिक्रान्तः कियांश्चित् समयः। तदा किल कश्चिज्जयप्राणीयः* पान्थः कलिकातामुपागतो दिदृक्षाकुलः काञ्चित् पाठशालां प्रविष्टः कञ्चन कुमारकं पप्रच्छ, वत्स कस्यैतद्भारतं वर्षमिति। अनुयोग-

---

* Japanese.

समनन्तरमेव प्रतिजगाद कुमार इंग्रेजानामिति। निशम्य चैतन्नितान्तमेव व्यस्मेष्ट जयप्राणीयः। अब्रवीच्च यद्यस्मद्देशे कश्चिदर्भक एवमनुयुज्येत कस्य जयप्राणदेश इति, तदा सोऽयमविलम्बितमेव प्रतिब्रूयान्ममेति। स्थाने किलैवं विस्मयो जयप्राणीयस्य स्थाने चैतन्महामोहकवलीकृतानामस्माकमनात्मज्ञत्वम्।

---

## इंग्रेजानामनुशासनस्य गुणा दोषाश्च

[ अप्पाशास्त्रि-विद्यावाचस्पतिः ]

"It is better to follow the real truth of things than an imaginary view of them." Machiavelli.

आसीत् किल प्राक् कोऽपि तथाविधः समयो यत्र भारतवासिन एव पुरुषा निखिलानामपि भूमण्डलवासिनां मानुषाणामाचार्यपदवीमारोहन्। सम्प्रति पुनरमी आत्मनः पुराकृतानां वा दोषेण दैवस्य वा दुर्विपाकेण सर्वथा पराधीनाः परकृपायत्तजीविताश्च संवृत्ताः। इत्थं किल कवयः कथयन्ति। कः स्वातन्त्र्येण विना जीवनमिह वाञ्छति मनुष्यः [ "स्वाधीनता-हीनताय के वाँचिते चाय हे"-वङ्गीय-कविः रङ्गलालः ] इति। इंग्रेजेष्वेव चान्यतमो मेकाले-महोदयः प्राह—The heaviest of all yokes is the yoke of the stranger इति। तदेवं नास्ति किल पारतन्त्र्यतोऽभ्यधिकं किमपि दुःखं नाम। तथापि सुखयत्येवास्मानिदानीम् इंग्रेजानां राज्यम्। सुज्ञा ह्येते। वरं च मूर्खाणामाधिपत्यापेक्षया सुज्ञानां दास्यमिति खल्वभियुक्ताः प्राहुः। अनुभूयते च सर्वाङ्गीणमवितथत्वमिंग्रेजानां राज्ये वचनस्यैतस्य। अतीतः किल भूयान् समयः पारतन्त्र्यबन्धने दृढं प्रविष्टस्य भारतवर्षस्य। तथापि प्रशस्यतमैव प्राचीनायाः

परतन्त्रतायाः साम्प्रतिकी परतन्त्रतैतस्येति नात्र सन्देहः। वैदेशिका अपि भूयोभिर्गुणगणैः समुज्ज्वला इंरेजाः, मूर्धन्याश्चैते सभ्यानाम्। भवतु वा न वान्यत् किमपि तथापि ये किलेदानीमपेक्ष्यन्ते ये च शिक्षणीया गुणगणा भारतवर्षीयैस्तेऽमी विद्यन्ते एव भूयांस इंग्रेजेषु। तदिदानीमिंग्रेजैः समं संसर्गमापन्ना भारतवर्षीया भूयांसमेव लाभमधिगच्छन्तीति नात्र सन्देहावसरः। तत एव चैतदेव प्रार्थ्यते भगवतश्चरणारविन्दयोरस्माभिर्यद्‌ यावान्‌ किल पारतन्त्र्यणैवातिवाहनीयः समयो भारतवर्षीयैस्तावानमीषामिंग्रेजैरेव परवताम् अपयायादिति। ( क्रमशः )

---

# गेटे-कवि-सुभाषितानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ३ )

राष्ट्रशासने खलु न केवलं सामैवोपासनीयम्, प्रयोजनानुरोधेन साम दानं भेदो दण्ड इति नीतिचतुष्टयमपि समाश्रयणीयम्। मुमुक्षुभिस्तावदेकस्मिन् गण्डे चपेटां पातयितृभ्योऽपरो गण्डः प्रसारयितुं शक्यते, राष्ट्राणां कर्णधारायमाणैरेवं क्रियमाणं सर्वनाशायैव भवतीत्युक्तं गेटे-महोदयेन—

"Du musst herrschen und gewinnen,
Oder dienen und verlieren,
Leiden oder triumphieren,
Amboss oder Hammer sein."
"Thou must either rule and win,
Or submissively give in,
Triumph, or else yield to clamour :
Be the anvil or the hammer."

'प्रभुत्वं कुरु त्वं विजयं लभस्व,
नो चेत् सेवनं पराजयं स्वीकुरुष्व ।
अनुभव दुःखं गौरवं वा,
भव त्वं सूर्मी वायोघनो वा ॥' ( क्रमशः )

---

# आभाणक-रत्नानि

१। (ब) कृष्ण केमन ? यार मन येमन।
कृष्णस्तु कीदृशो ब्रूहि—मनो यस्य हि यादृशम् ।
२। (ब) नाचिते ना जानिले उठानेर दोष ।
अनभिज्ञा नर्तनस्य रङ्गमञ्च' विनिन्दति ।

(श) "Es ist schlecht Wasser", sagte der Reiher da konnte er nicht schwimmen.

सन्तरणानभिज्ञः सारसः सलिलस्य दोषमुदभावयत् ।

(ला) Ardea culpavit undas, male quando nativit.

A bad workman quarrels with his tools.

मन्दः कर्मकरो लोके साधनानि विनिन्दति ।

३। He must have iron nails that scratches a bear.

यो हि भल्लूकं नखैर्निर्घर्षति तस्य लोहमया नखा अपेक्ष्यन्ते।

४। Refuse a wife with one fault, and take one with two.

एकदोषां कन्यां प्रत्याख्याय द्विदोषामुपयच्छते ।

५। Follow the river and you'll get to the sea.

(फ) Suivez la riviere et vous gagnerez la mer.

सरितमनुसर, सागरं प्राप्स्यसि।

६। Flee, never so fast you cannot flee your fortune.

( ब ) तुमि यावे वङ्गे कपाल यावे सङ्गे।

द्रुततमं पलायमानोऽपि भाग्यात् पलायितुं न प्रभविष्यसि।

७। Call Minerva to aid, but bestir thyself.

(ग्रो) Zun Athenei kai kheira kinei.

देवीमवसे प्रार्थयस्व, स्वात्मना पुनः प्रयत्नमातिष्ठ।

---

## षपीया नीतिकथा

( संयुक्ताक्षरवर्जिता )

[ श्रीपञ्चाननराय-काव्यतीर्थ-ज्योतिर्विनोदः ]

### शृगालो दारुफलानि च

कदाचित् आतपतापिते दिवसे फेरुरेको दारुफलेषु लुलुभे। तानि सालशिरसि दोलायमानानि आसन्। अहो! चारूणि परिणतानि दारुफलानि। नूनमेतानि भृशं मधुराणि—गोमायु-मनसि इति भावना जाता। ततः स तानि नेतुं साटोपमुत्पपात, परं यतमानोऽपि नेदयितुं न शशाक। स आह—कथमपि मया फलानि नेयानीति। अत आगामिनि निमेषे निखिलनिजबलयोगे-नापि स तानि नानेदयत्, पुरुजवा अपि विफलाः, दारु-फलानि नाधिगतानि। सुचारुसुरसानि तानि तं वृथा लोभया-मासुः। विषादेन हताशः स पलायितः। तदैव तदीयः परिचितः

फेरुरेको नयनपथमागतः। स एतं चतुरं पुरातनपापिनं निखिले-नायासेनापि विफलमवलोकितवान्, उवाच च—भो दायाद! कथं भवान् एतानि सुमधुरफलानि न नयति? गोमायुराह—अहो, अधुनापि अपरिणतानि फलानि परुषाणि एव। तेषामादाने वृथा कालनाशं न करोमीति। विरसानि हि दारूणीति।

## वृकसारसौ

एकदा भोजनकाले वृकगलगुहायां कीकसमविशत्। दारुणया यातनया परितो धावमानः स यमेवावलोकितवान् तमेवानुकूलनायानुरुरोध, भोः, मां जीवय, जीवय। याचेऽहं गलदेशात् आढिकं मोचय। अहं सहायकाय कनकमयं भाजनं ददामि। इति स सरुतमुवाच। सुचिरं तं निकषा कोऽपि भयेन नागमत्। अवसाने आतुरः स पणसहायेन तथान्वेदितवान् यत् करुणया एकः सारसः कीकसमोचनेऽभिमतमददात्। वृकगलकुहरे सारस आयतां सृपाटिकाम् आवेशयत् तनुकीकसं च बहिरानयत। ततः स सारस उवाच—देवः अधुना भवताघोषितं कनकभाजनरूपमुपहारं ददातु। तदानीं वृकः सकलाहितरहित आसीत्। अतः स आह—भो मूढ़! अपि मे मुखविवरात् शिरसो बहिरानयने तव तोषो न जायते परमुपहाराहरणेऽपि लालसा भवति? विषादेन सारसः पलायितः। कनकभाजनं तेन नैवासादितमिति। कदापि कितवे नाशापरो भवेत्।

---

# सुभाषितसागरः

[ पण्डित एस्, पार्थसारथिः ]

## सज्जनपद्धतिः

अचिन्त्याः पन्थानः प्रकृतिमहतामन्धकरिपो-
यदक्ष्णोऽभूत्तेजस्तदकृत कथाशेषमदनम् ।
मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह
प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ १ ॥

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ २ ॥

अणुरपि मणिः प्राणत्राणक्षमो विषभक्षिणां
शिशुरपि रुषा सिंहीसूनुः समाह्वयते गजान् ।
तनुरपि तरुस्कन्धोद्भूतो दहत्यनलो वनं
प्रकृतिमहतां जात्यं तेजो न मूर्तिमपेक्षते ॥ ३ ॥

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥ ४ ॥

---

१। अन्धकरिपोः शिवस्य। अक्ष्णः—तृतीयात् नेत्रात्। कथाशेषमदनम् अकृत—अत्र छन्दोऽनुरोधेन कविना 'कथाशेषं मदनम्' इत्यस्य स्थाने कथाशेषमदनम् इति विलिखितम्। सूक्ति-मुक्तावल्यादिषु 'कथामपत्रमदनाम्' इति पाठ उपलभ्यते, ततस्तु कवेरभिप्रायो न स्फुरति, मदनस्य नामापि लोकतः समुत्सारितम् इत्यर्थप्रतीतेः, मदनो नामशेषतामनायि इत्यस्य च कवेर्विवक्षितत्वात्। अत्रेः मुनेः नेत्रात् यत् ज्योतिः अजनि—चन्द्रः। प्रतेने—विहितः। घनज्योतिरिति सूक्ति-मुक्तावल्यां पाठः।

२। शार्ङ्गधरपद्धतावयं पाठः। सूक्तिमुक्तावल्याम्—प्रायः सुमनसां प्रीतिरित्युपलभ्यते। मन्येऽनुप्रासप्रियेण कवयित्रा तदेव विलिखितम्। सुमनसां कुसुमानां समुन्नतचेतसां च।

४। योगेन उपायेन, रासायनिकप्रक्रियया च। प्रणिपात-प्रतीकारः संरम्भो हि महात्मनाम्। शार्ङ्गधरपद्धतौ, सुभाषितावलौ सुभाषितार्णवे चायं श्लोकः।

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे।
अम्भोनिधिर्वहति दुःसहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ५ ॥

अनुकुरुतः खलसुजनौ अग्रिमपाश्चात्त्यभागयोः सूच्याः।
विदधाति रन्ध्रमेको गुणवानन्यस्तु पिदधाति ॥६॥

अधमं बाधते भूयो दुःखावेगो न तूत्तमम्।
पाणिपादं रुजत्याशु शीतस्पर्शो न चक्षुषी ॥ ७ ॥

अन्तः कटुरपि सद्वृत्तं यः पुमान्न सन्त्यजति।
स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ ८ ॥

अन्त्यावस्थोऽपि बुधः स्वगुणं न जहाति जातिशुद्धतया।
न श्वेतभावमुज्झति शङ्खः शिखिभुक्तमुक्तोऽपि ॥ ९ ॥

अपकारिषु यः साधुः स साधुः सद्भिरुच्यते।
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ॥ १० ॥

---

६। शार्ङ्गधरपद्धतौ गोपभट्टस्येदं पद्यम्, सूक्तिमुक्तावल्यां पुनर्गोभटस्य। "एकः कुरुते छिद्रं गुणवानन्यश्च पिदधाति" इति तत्र क्वचिद् द्वितीयार्धस्य पाठः। शार्ङ्गधरपद्धतौ अन्यस्त्वपिदधाति इति पठ्यते चतुर्थश्चरणः।

गोभटस्य पद्यान्तरं सूक्तिमुक्तावल्यां—

सूचीदण्ड इवासौ कुपितः सुजनो मुखे परं तीक्ष्णः।
छिद्रपिधानैकपरः प्रगुणः पश्चात् परं भवति ॥

७। दृष्टान्तशतके "पादद्वयं रुजत्याशु शीतस्पर्शो न चक्षुषी" इति पाठः।

९। "अन्त्यावस्थागतोऽपि महान् स्वगुणान्जहाति न शुद्धतया" इति पञ्चतन्त्रे पाठः

१०। पञ्चतन्त्रादिषु प्रथमद्वितीयार्धयोर्व्यत्यासः सन्दृश्यते।

अपकुर्वन्नपि प्रायः प्राप्नोति महतः शुभम् ।
और्वं दहन्तमप्यग्निं सन्तर्पयति वारिधिः ॥११॥

अपि विभवविहीनः प्रच्युतो वा स्वदेहा-
न्नहि खलजनसेवां प्रार्थयत्युन्नतात्मा ।
ननु तृणमुपभुङ्क्ते न क्षुधार्तोऽपि सिंहः
पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥ १२ ॥

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदालोकहिते युक्ता रत्नदीपा इवोत्तमाः ॥ १३ ।

अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् ।
विधोर्विधुन्तुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ १४ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित् क्वचिन्मण्डिता वसुधा ॥१५॥

---

११। शार्ङ्गधरपद्धतौ 'और्वं दहन्तमेवाग्निम्' इति पाठः, नीतिचन्द्रिकायाम् 'दहन्तमप्यौर्वमग्निम्' इति। शुभमित्यत्र 'फलम्' इति पाठो बहुत्र।

१२। प्रार्थयति—प्रार्थयत इति साधु।

१३। स्नेहं सख्यं तैलादिकं च। पात्रं योग्यपात्रं भाण्डादिकं च। दशान्तरम् अवस्थान्तरं वर्तिकाविशेषं च। सदा लोकहिते युक्ताः निरन्तरमेव परहितेष्वभिनिविष्टाः, पक्षे शोभनः आलोकः सदालोकः, स एव हितं तत्र युक्ताः अभिनिविष्टाः। "अपेक्षते....सदा परोपकाराय रत्नदीप इवोत्तमः" इति शा० पा०।

१४। कुसुमदेव-प्रणीताद् दृष्टान्तशतकाद् गृहीतम्।

१५। भर्तृहरेर्नीतिशतकतो गृहीतम्।

अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो
　　विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।
अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचय-
　　प्रबन्धः साधूनामयमनतिसन्धानमधुरः ॥ १६ ॥

अम्बरमनूलङ्घ्यं वसुन्धरा सापि वामनैकपदा ।
अब्धिरपि पोतलङ्घ्यः सतां मनः केन तुल्यं स्यात् ॥ १७ ॥

अयं निजः परो वेति विकल्पो लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ १८ ॥

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगताच्छायां नोपसंहरति द्रुमः ॥ १९ ॥

अर्थः सुखं कीर्त्तिरपीह मा भू-
　　दनर्थ एवास्तु तथापि धीराः ।
निजप्रतिज्ञामनुरुध्यमाना
　　महोद्यमाः कर्म समारभन्ते ॥ २० ॥

अवृत्तिभयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानान्तु सत्त्वानामवमानात् परं भयम् ॥ २१ ॥

---

१६। मुरारिकवेरनर्घराघवतो (६।६) गृहीतमिदम् । 'कुमुदम्' कर्त्तृ । 'उदरे' अभ्यन्तरे 'स्थितवतः' वा 'विपक्षात् अम्भोजात्' वा 'उपगतवतः' 'मधुलिहः' भ्रमरान् 'अभेदेन्' तुल्यतया 'उपास्ते' समाराधयति । तथाहि 'साधूनाम्' स्वपरपरिचर्यापरिचयप्रबन्धः स्वस्य आत्मीयस्य परस्य अन्यस्य च परिचर्या पूजा तत्परिचये ज्ञाने समूहे वा प्रबन्धः अनुबन्धः अपर्याप्तः अनिवारितो भवति । मधुरो मनोज्ञः ।

१८। विकल्पः—गणनेति पाठान्तरम् ।

१९। छेत्तुः पार्श्वगतां छायाम् इति पाठान्तरम् । दृष्टान्ते 'गृहमागते' इति विशेषणमनुरोधेन दार्ष्टान्तिकेऽपि 'पार्श्वगतात्' इति विशेषणं युज्यत एव । अत एवास्माभिः स्वीकृत एव पाठः समीचीनतया प्रतिभाति ।

अशठमलोलमजिह्ममत्यागिनमनुरागिणं विशेषज्ञम् ।
यदि नाश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तत्र ॥ २२ ॥

असत्सङ्गाद्धि साधूनां भवन्ति विपदोऽनिशम् ।
तस्मादसाधुसंसर्गं दूरतः परिवर्जयेत् ॥ २३ ॥

असतां सङ्गदोषेण साधवो यान्ति विक्रियाम् ।
दुर्योधनप्रसङ्गेन भीष्मो गोहरणे रतः ॥ २४ ॥

असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनम् ॥ २५ ॥

असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो
न सङ्गाद्दौर्जन्यं न हि सुजनता कस्यचिदपि ।
प्ररूढे संसर्गे मणिभुजगयोर्जन्मजनिते
मणिर्नाहेर्दोषान् स्पृशति न सर्पो मणिगुणान् ॥ २६ ॥

अहो किमपि चित्राणि चरित्राणि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते तद्भरेण नमन्त्यपि ॥ २७ ॥

आः किमर्थमिदं चेतः सतामम्भोधिदुर्भरम् ।
इति क्रुधेव दुर्वेधाः परदुःखैरपूरयत् ॥ २८ ॥

आकोपितोऽपि कुलजो न वदत्यवाच्यं
निष्पीड़ितो मधुरमेव वमेत् किलेक्षुः ।
नीचो जनो गुणशतैरपि सेव्यमानो
हासेषु तद्वदति यत् कलहेषु वाच्यम् ॥ २९ ॥

---

२२। शार्ङ्गधरपद्धतौ अशठमलोभमिति पाठः, सुभाषितार्णवे च अशठमजिह्ममलोलमिति ।

आदिमध्यनिधनेषु सौहृदं
सज्जने भवति नेतरे जने ।
छेदताड़ननिघर्षतापनै-
र्नान्यभावमुपयाति काञ्चनम् ॥ ३० ॥

---

# निष्कृतिः

[ शरच्चन्द्र-चट्टोपाध्यायः ]

( २ )

हरिशस्य पत्नी नयनतारा विदेशे न्युष्य सविशेषं पाश्चात्यभावमशिक्षत । सा खलु वैदेशिकवेषपरिधानमन्तरेण पुत्राणां बहिर्गमनं नाभ्यमन्यत । अद्य प्रातः सिद्धेश्वरी जपोपासनार्थं समुपविष्टा, कन्या नीलाम्बरी भेषजोपकरणानि समादाय प्रमुख एवोपविष्टासीत् । अस्मिन्नन्तरे नयनतारा गृहं प्रविश्यावादीत्, आर्ये, तुन्नवायोऽतुलस्य कोटं निर्मायानीतवान्, विंशती रूपकास्तावत् प्रदेयाः ।

सिद्धेश्वरी नित्यजपं विस्मृत्य सविस्मयमवोचत्, कश्च कस्य मूल्यं विंशती रूपकाः ? इति ।

नयनतारा विहस्याभाषिष्ट—आर्ये ! एषा त्वतिलघीयसी मात्रा । मदीयातुलस्यैकैकसुटनिर्माणे षष्टिसप्तता अपि रूपका अपेक्ष्यन्ते ।

सुट्शब्दं तावत् सिद्धेश्वरी नावबुद्धवती, सा नेत्रे विस्फार्य स्थिता । नयनतारा बोधयित्वावदत्, कोट्-प्यान्ट नेकटाइ—एतत् सर्वमस्माभिः सुट् इति व्यपदिश्यते इति ।

सिद्धेश्वरी संक्षुब्धोक्तवती, नीले, आहूय तावत् तव पितृव्य-पत्नीम्, सार्थं पेटिकातो बहिष्कृत्य प्रयच्छतु।

नयनतारयोक्तम्—ननु मह्यं कुञ्चिकां देहि, मयैव बहिष्कृत्य गृह्यते इति।

नीला तावदुत्थाय दण्डायमाना स्थिता। तयोक्तम्—कुतो वा जनन्या लभ्येत। लौहपेटिकायाः कुञ्चिका सदैव पितृव्यपत्न्याः समीपे तिष्ठति। इत्युक्त्वा सा चलिता।

वचनमिदमुपश्रुत्य तवत्या नयनताराया वदनकमलं लोहितभावमभजत्। सावदत्, आर्ये, कनिष्ठा वधूरियती दिवसानत्र नासीत्, अपि नाम तत एव पेटिकायाः कुञ्चिका कतिचिद्दिनानि भवत्याः समीपे स्थिता।

सिद्धेश्वरी खल्वाह्निकमनुष्ठातुमुपक्रान्ता, अत एवोत्तरं न दत्तवती।

उपदशेभ्यो निमिषेभ्य ऊर्द्ध्वं यदा तावदर्थनिष्कासनाय शैलजा प्रकोष्ठं प्रविष्टा, तदातुलस्याभिनवं कञ्चुकमधिकृत्य सविशेषं समालोचनं सम्प्रवृत्तम्। कञ्चुकं परिदधानोऽतुलस्तस्य कर्तन-प्रकारादिकं व्याख्याति स्म, तस्य माता हरिचरणश्च मुग्धनेत्रे समुन्मील्य भूषाप्रकारमन्तरेण ज्ञानमर्जयति स्म। अतुलेनोक्तम्, कनिष्ठार्ये! दृश्यतां तावत् कथमेतन्निर्मितम् इति।

शैलजा संक्षेपेण 'सम्यक्' इत्युक्त्वा पेटिकामुद्घाट्य विंशतिं रूपकान् गणयित्वा तस्य पाणौ प्रायच्छत्।

नयनतारा तत्रत्यान् सर्वाञ्छ्रावयित्वा पुत्रं समुद्दिश्य समभ्यधत्त—तव तावत् पेटिकोत्प्लावी परिच्छदस्तथापि कथमपि तृप्तिं नाधिगच्छसि इति।

पुत्रेणाधीरं प्रत्युक्तम्—कति वारान् वा ते वक्ष्यामि मातः। अद्यत्वे तावदयमेव वेषप्रकारः, अवरत एकमपीदृशं कञ्चुकं न स्याच्चेत् लोका हसिष्यन्ति ननु। इत्युक्त्वा रूपकानादाय बहिर्गच्छन्न-कस्मादवस्थाऽलोकितवान्—अस्माकं हरिचरणार्यो यत्परिवर्हेण बहिर्गच्छति तद्दर्शनेन ममैव लज्जा समुदेति चेतसि। अत्र तात्र-लुठ्यमानं वर्तते, तत्र तावत् सङ्कुचितं वर्तते, धिक् धिक् कियद् वा विश्रीकं न दृश्यते इति। ततो विहस्य पाणिपादं सञ्चाल्यावोचत्—पार्श्वोपाधानमेकं प्रचलतीति प्रतीयते।

पुत्रस्य भङ्गिदर्शनेन नयनतारा खिल्खिल् इति जहास, नीलापि मुखं परावर्त्य हासं स्तम्भयितुं प्रयतितवती।

हरिचरणः सकरुणं खुल्लतातपत्न्या मुखे नेत्रे पातयित्वा लज्जयाधोवदनः स्थितः।

सिद्धेश्वरी नामत एवाह्निकं निर्वर्तयति स्म, पुत्रस्य वदनं सन्दृश्य नितरामद्रूयत, समुपजातक्रोधा चावदत्, सर्वथा सत्यमेवैतत्। किमेतेषां मनःसुखस्पृहाप्रमोदादिभि र्न स्थातव्यं शैलजे। वत्सानां कानिचन कञ्चुकादीनि निर्माप्य दीयतां ननु।

अतुलः परिवृढ इव पाणी सञ्चाल्यावदत्, मह्यमेवार्थं प्रयच्छार्ये मदीयेन तुन्नवायेन यथायथं सर्वं निर्मापयिष्यामि। अहो! न खलु मां प्रतारयितुं कस्याप्यस्ति शक्तिः।

नयनतारा तनयस्य सविशेषसावधानतामधिकृत्य किमपि वक्तु-मुद्युक्तासीत्, परं ततः पूर्वमेव शैलजा दृढमन्द्रस्वरेणावोचत्, अलं वत्स धृष्टतया। त्वं तावत् स्वीये चक्रे तैलमर्पय (स्वं नियोग-मशून्यं कुरु)। अमीषां कञ्चुकनिर्मापणाय जना वर्तन्ते। इत्युक्त्वाञ्चलकोणनिबद्धं कुञ्चिकागुच्छं झनत्कारपुरःसरं पृष्ठे निक्षिप्य निष्क्रान्ता।

२

नयनतारा सकोपमवदत्, अन्तिके, श्रुतं त्वया कनिष्ठवध्वा वचनम्। ननु पृच्छामि किं वान्यायमुक्तमतुलेनेति।

सिद्धेश्वरी प्रत्युत्तरं न ददौ। मन्ये इष्टमन्त्रं जपन्ती नैवाशृणोत्। शैलजया पुनः श्रुतमेव। सा हि कतिचित् पदानि प्रत्यावृत्य मध्यमयातुर्मुखे दृष्टिं निबध्यावदत्, अन्तिकया तावद्बहुशः श्रुतं कनिष्ठवध्वा वचनम्, त्वयैव न श्रुतम्। अतुलस्तावत् कनीयानपि हरिं यथा विडम्बितवान्, त्वं च खिल् खिलिति हसितवती, स चेन्मदीयोदर्य्योऽभविष्यदहं तं जीवन्तमेवाप्रोथयिष्यम्। इत्युक्त्वा सा स्वकार्याय प्रचलिता।

गृहेऽवस्थिताः सर्व एव स्तब्धा अतिष्ठन्। कियतश्चित् कालादूर्ध्वं नयनतारा दीर्घं निःश्वस्य ज्येष्ठयातरं सम्बोध्यावदत्, अन्तिके, अद्य ममातुलस्य जन्मवारः, कनिष्ठवधूश्च यदेव तस्या रसनाग्रे समागतं तदेवोक्त्वा तस्मै गालिमददात्।

सिद्धेश्वरी कनीयस्योर्यात्रोः कलहस्य सूचनया निःशङ्कमेव भीतभीतेष्टनाम जपन्त्यवर्तत।

नयनतारा प्रत्युत्तरमनधिगम्य पुनरपि प्राह—त्वं चेत् स्वयं किमपि न विदधासि, अस्माभिरेव यः कोऽप्युपायोऽनुष्ठेयः। तथापि सिद्धेश्वरी तूष्णींमेवावतस्थे। तदा नयनतारा पुत्रसमभिव्याहारेण शनैः शनैर्विनिष्क्रान्ता। [क्रमशः]

## सङ्करः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( १ )

महाभारतस्यादिपर्वणो द्वितीयाध्याये सन्दृश्यते—

एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन्।

तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥ १० ॥

इति ।

अत्र नीलकण्ठ-टीका—निषिषिधुर्निषिद्धवन्तः । अक्षराधिक्यमार्षम्, अभ्यासलोपो वार्षः । सिषिधुरिति पाठे शशासुः । हिंसातो विरमस्वेति शिक्षितवन्त इत्यर्थः ।

अत्र विरमस्वेति पदं व्यक्तमेव प्रामादिकम्, व्याङ्परिभ्यो रमः [ १।३।८३ ] इति विपूर्वाद्रमतेरात्मनेपदस्मरणात्, मूले च विररामेत्यत्र परस्मैपदस्य देदीप्यमानत्वात्। कथमीदृशस्य प्रमादस्य सम्भव इति विचारयन्तो नूनं विद्वत्प्रवरस्य मानसे युगपदेव विरम निवर्तस्व इत्यनयोराविर्भावात् तयोः सङ्करेण विरमस्वेति पदं प्रादुर्भूतम् इति प्रतिपद्येरन् भवन्तः । विरम + निवर्तस्व = विरमस्व ।

( २ )

आदिपर्वणि सप्तदशेऽध्याये दृश्यते—

मन्थध्वमुदधिं देवा वेत्स्यध्वममृतं ततः [ १।१७।१३ ] इति । अत्र टीकाकृता नीलकण्ठेनोक्तम्—वेत्स्यध्वं लप्स्यध्वम् इति । अत्र भविष्यदनुज्ञयोः सङ्करेण 'स्यध्वम्' विभक्तेरुत्पत्तिः सञ्जाता । (लटः) स्यध्वे + (लोटः) ध्वम् = स्यध्वम् ।

अत्र प्रकरणाद्विदेर्लाभार्थत्वमवसीयते, लाभार्थकस्तु विन्दतिः सेडेव । अत एव—

'वेत्स्यसि + वेदिष्यथ + विन्दध्वम् = वेत्स्यध्वम् ।

यदि टीकागतो लप्स्यध्वमिति पाठः प्रामाणिकः स्यात् तर्हि मूलवासनावासितचित्तेन व्याख्याकारेण "वेत्स्यध्वम्" इत्येतस्यानुरोधेन "लप्स्यध्वम्" इति विलिखितम् इति वक्तव्यम् । यथा पुनरस्माभिर्दृश्यते तथा टीकाकृता 'लप्स्यध्वे' 'इति' इत्यनयोः सन्धौ 'लप्स्यध्व इति' इति विलिखितम् । केनचन लिपिकरेण पत्रस्थं बिन्दुमनुस्वारत्वेन सम्भाव्य स्वरवर्णे परेऽनुस्वारस्य प्रामादिकत्वात् मकारो विलिखित इति । ऋग्वेदस्य नवममण्डलान्तर्गत-सप्तविंशसूक्तस्य प्रथममन्त्रगत-तोशते इत्येकवचनान्तपदस्य भाष्ये क्वचित् गच्छंतीत्यर्थं इति दृश्यते ।

# आँग्लदेशीयस्य संस्कृतप्रणयिनो जीवितमद्वयम् ।

[ आल्फ्रेड्-विल्यम्स्-संस्मृतिसन्दोह: ]

ब्लाक्वेलप्रकाशकानां लेख: ।

सौभाग्यवत्या क्षमा-देव्या अनूदित:

केभ्यश्चित्संवत्सरेभ्य: प्राक् पत्रवाहकसंस्थाद्वारा मम सविधे स्पर्शमुद्राङ्कितं पत्रमेकं समुपनतम् । हरितहरितवर्णेषु प्रतनुपत्रेषु याऽऽक्षरावलिरुट्टङ्किता स्पर्शमुद्रणयन्त्रस्य सा तद्यन्त्रस्य जीर्णत्वं जर्जरत्वं च स्फुटं प्रकटीचकार । लेखेन च पत्रमेकं क्रोडीकृतं यत्र प्रबन्धस्य तस्येतिहास: समासत: समुदीरित: । तथा हि—पञ्चतन्त्रस्य नाम प्रसिद्धसंस्कृतलघुकथासंग्रहस्यांग्लभाषानुवादोऽयम् अस्य प्रस्तावनोक्षतीर्थ-( Oxford )वास्तव्येन संस्कृताध्यापकेन प्रणीता प्रशंसति ग्रन्थकर्तुर्भाषापाटवं लेखनशैलीं तथा कथावस्तु-कमनीयत्वम् । अस्य ग्रन्थस्य प्रकाशनं चेत्परमकृपया भवद्भिरङ्गीक्रियते सचित्रं तत्प्रकटयितुमस्माकं सविधे सन्नद्धो विद्यते चित्रकर्मनिपुण: कोऽपि तरुण इति । पत्रप्रेषकस्य नामाभिधानस्वहस्ताक्षरपंक्ति:—“आल्फ्रेड् विल्यम्स” इति निर्दिदेश ।

पुस्तकस्यास्य प्रस्तावनायामनुवादकृत्प्रयत्नं मुक्तकण्ठं प्रशंसन्त प्राध्यापका मॉक्डॉनेलमहाशया मन्वते—निर्विवादं नूनं यदांग्लभाषा-नुवादोऽयं ‘पञ्चतन्त्रस्य’ प्रथिततमस्य संस्कृतकथासंग्रहस्य सर्वथा सर्वकालमनोहरो न तु केवलं प्रासङ्गिक: । पञ्चतन्त्रं पृथिवीतल-गतासु तासु तासु भाषासु प्रकटितमुत्तरोत्तरं चारुतरं रूपं धत्ते स्म । आशियाखण्डस्य पश्चिमदिक्परिसरवर्तिदेशेषु विविधवेष-भूषां प्रकल्पयन्तीयं प्राचीनतमपौरस्त्यवाणी देशाद्देशान्तरं पर्यटन्ती विभ्रमेण मोहयन्ती मध्यकालीनयुरोपखण्डसाहित्यमण्डनं विदधती यथा जनमन:संस्कारक्षमा जाता न तथाऽन्या काऽपि । अतो हेतो-

नेदं पुस्तकमवधीरणीयमतिपरिचयदोषात्, प्रत्युत सादरं सावधानं च समीक्षणीयम्। पुराणान्तर्गता दृष्टान्तरूपा यथा हृदयङ्गमाः सम्भवन्ति कथास्तथा चेमाश्चारुतरा मनोहराः। प्रज्ञागाम्भीर्यसम्पन्ना अपि प्राकृतजनमनो हर्तुं समर्थाः शिशूनां च मृदुलमनः संस्कर्तुं सरलसरलैः शब्दविन्यासविभ्रमैः क्षमा निःसंशयमिति। तथापि काचित्कथावस्तुरचनाऽत्र प्रौढमतिग्रहणसाक्षिणी। ईसापाख्यायिका वा लाफान्तेनकृतकृतयो वा यथा सर्वथा शिशुजनमनोहारिण्यस्तथेमा वरेण्या अपि विदुषामेव मनोमोहिन्यो भवेयुरिति।

बाह्यलङ्कृतश्च पत्रस्य दक्षिणमार्स्टनाख्यस्य कस्यापि खेटकस्य स्विण्डनाभिध-पुरपरिसरवर्तिनो बोधं विदधे। ग्रन्थकृद्दर्शनं चेदपेक्षितं, ग्रन्थप्रकाशनमुद्दिश्य कश्चिदूहापोहश्चेद् विधेयस्तदा भवद्भिरेव कृपयात्रोक्षप्रस्तर-(Oxford) नगरमागन्तव्यमिति तत्सविधे निमन्त्रणप्रेषणमेव शोभनतरो मार्गं इति मया पुनर्मनसि कृतम्। तथा कृते च तथेति तदुत्तरं करतलमागतम्। सोऽपि सुजनो यथानियुक्तकालं निश्चिते दिने संप्राप्तः। उपपञ्चाशवर्षदेशीयः स्मितविकसितवदनारविन्दो मन्दं मन्दं यावन्मम मन्दिरं प्रविवेश, तावन्मम मनसि समजनि एवंविधविचारः। अभूतपूर्वः कोऽप्येष नयनातिथिरद्य मे पुरतो विद्यते, प्रायो विरला जना ईदृशा इति। प्रसन्नस्मितमनोहरं सौम्यं तन्मुखं समीक्ष्य सदाचारशीलतां च तदीयां सञ्चिन्त्यापि न तद् हृद्गतं मया विशदेमवेदि तदा। आवयोः संवादो निराबाधः प्रववृते। मदीयसूचनानुसारं च स्वलेखपरिवर्तनं तेन स्वीकृतम्। सप्ताहेन यदा स पुनरागमिष्यति तदैव पुस्तकप्रकाशनं चित्रसनाथं विधातुं चित्रकरं कमपि सूदने मम प्रत्यक्षीकरिष्यति, प्रकाशनात् पूर्वो विचारविनिमयो ऽपि विधेयः सोऽपि तदवसरे सम्भविष्यतीति मया विनिवेदितः स सर्वमनुगृहीतोऽस्मीति वचनरचनया प्रत्यपद्यत।

मध्याह्नसमये गृहं प्रति गन्तुमुद्यतः स मया प्रार्थितः—उपाहारवेलेयम् अशनप्राशनादिकम् अनुररीकृत्य नेतः प्रस्थातुमर्हति भवानिति। स चाह ससम्भ्रमं सप्रश्रयातिशयञ्च कृपया क्षन्तव्योऽहमिति। मया पुनः पृष्टः का खलु वेला धूमयानस्येति, स प्रत्यवोचत् प्राप्तोऽस्मि द्विचक्रीं मे समारुह्येति। तेन सप्तविंशतिक्रोशार्धाध्वश्रमपरिहारार्थं तथा पुनस्तादृशक्लेशविशेषसहकर उपाहार उपकारकः किमु न स्यादिति निर्बन्धनिवेदितोऽपि भृशमनुगृहीतोऽहमनुज्ञायतामयं जनो निजसदनं प्रति निवर्तनायेति भूरिप्रश्रयभरसमाक्रान्तस्वान्तः श्रान्तोऽपि प्राञ्जलिः प्राह। यदाहं पुनर्दर्शनदिवसं तस्मै निवेदितवान् तदा तु ददृशे दृशीस्तस्य कापि वेदनाच्छटा स्फुटा आवेदयन्ती तन्मनोऽव्यथाम्। तथापि समनःक्षोभं सौम्यविलोचनः स आहभवद्भिः प्रस्तुतादपरेद्युर्यदि वारो निश्चितः स च यदि भवतामनुकूलस्तर्हि समीचीनं स्याद् यतो दैवदुर्विपाकात् पत्नी मे मांसार्बुदचिकित्सार्थं रुग्णालयस्था तस्मिन्नेव वासरे गृहे प्रत्यागमिष्यतीति करुणकरुणं किमपि निवेदयामास। भवतु तथैवास्त्वित्यभ्युपगते मयि सार्धद्विवादनवेलायां भविता भूयो दर्शनमावयोरिति वदन् निर्गतः किन्तु दारुणा खलु कर्मणो गतिः।

मध्याह्ने पूर्वनिर्दिष्टाहे हृद्विदारणो दारुणः कोऽपि तन्त्रीसन्देशः ह्य एवाल्फ्रेडविल्यम्सः प्रसुप्तो हि दिवं गत इति सविधे मम समागतः। सन्देशप्रेषकनामधेयसनाथोऽपि सङ्केतविरहितः स आसीत्।

* * * *

समतीतेषु द्वित्रेषु दिनेषु कोऽपि सुजनो मद्दर्शनाकाङ्क्षी सदनं मे समायात आल्फ्रेडविल्यम्सवृत्तान्तमिमं मे निवेदयितुम्। प्रवेशितश्च प्रकोष्ठं मे दृष्टो मया हन्त दृष्टिविकलः स तन्त्रीसन्देश-

प्रेषकः। आसने समुपवेशितः स बाष्पस्तम्भितकण्ठः कथं कथमपि व्याजहार—आल्फ्रेडो मे बहिश्चराः प्राणाः, निःशेषं तद्वृत्तं भवते निवेदनीयमिति मत्वा पादमूलं प्राप्तोऽस्मि तमाखुविपणिं विहाय, विश्रान्तिकल्पं सर्वप्रथमवासरमिममेव कृच्छ्रेणास्माकं स्विण्डनस्थ-व्यवसायिनां मत्वा भवद्दर्शनार्थमुक्षप्रत्तर-( Oxford )मित्रकार्यार्थं चेति। स चान्धः सर्वमेतदननुभूतपूर्वशान्त्या शनैः शनैस्तथा करुण-करुणं जगाद यथा न केवलं कर्णौ दीर्णावपि तु हृदयमपि विदीर्णम्।

मया पुनर्जिज्ञासितं—किं हृदयदौर्बल्यवशात् सहसैव हृदयक्रिया स्तब्धा? प्राणाश्च निर्गताः? इति।

स प्रत्याह—आं तदेव भिषङ्मतम्। अहं पुनर्मन्ये केवलम-नशनात् प्रत्यहं च वृत्त्यर्थं स्विण्डनं प्रति द्विचक्रारोहणाद् रुग्णा-लयस्थितां व्याधिग्रस्तां कान्तां च द्रष्टुं प्रत्यहं पर्वतारोहणात् स्फुटितं तद्धृदयमिति। प्रमाणं चात्र प्राप्तं मया तद्धनन्यास-पुस्तके यत्र षड्विंशतिमिताः स्वर्णमुद्रा एव व्ययीकृता दृश्यन्ते खिस्तजन्मनः प्रभृत्यद्य यावदत्यल्पं चावशिष्टं तत्र। तथापि स्तोकमात्रं सञ्चितमेव परिरक्षितम्। पुस्तकाधारचलसंपुटे राज-मुद्राङ्कितस्वर्णमुद्रामूल्यपत्रं प्राप्तम्। यच्च पत्रखण्डे कण्टकाग्रेण कीलितम्। इदं मेरीदेव्याः कृते मधुराणां मदिरां क्रेतुमित्यक्षराणि च तत्र व्यलसन् तद्धस्तप्रणीतानि। नूनं रुग्णालयस्थितनिजपत्नीं व्याधिग्रस्तां सुखयितुं स दारवत्सलो निजाहारं परिजहार। अपि सा तत्कान्ता कुशलिनी? का आशा मासार्बुदहतायाः? गृह-मागन्तुं समुत्सुका सा भर्त्रा प्रतिश्रुते भृगुवासरे तदध्वनि दत्तेक्षणा वातायनोपकण्ठ आसीना तस्थौ। यावत्तत्पतिः शयनस्थो हि स्वर्गं गत इति वार्ता रुग्णालये प्रसृता। किन्तु न कोऽपि तां हृदय-

विदारिणीं प्रवृत्तिं तस्यै निवेदयितुं समर्थः। सा सुचिरं प्रतीक्षमाणा पत्यागमनं—इत्यर्धोक्ते सोऽन्धः कण्ठबाष्पकीलितवाग् बभूव। प्राह च—वराकी साऽधुना सद्मं समागता। सर्वथा मयान्धेन शयनान्तिकवर्तिना परिचर्यते। कथाचित्तस्याः श्वासोच्छ्वासः तथा क्षीणक्षीणो भवति यथा कृतप्रयत्नोऽपि कृच्छ्रेण श्रोतुं पारयामि तत्स्वनम्। तदा पुनः प्रश्नयामि ताम् अयि श्वसिषि न वेति। नीचैः पुनः सा मन्दभागा वदति—आमिति।

एवमन्धाननात् स्खलदक्षरादक्षरशो मेरीविलयरसकरुणकथा कर्णे कृता। सा तु समस्ततः श्रूयताम्—

बभूव कोऽपि ग्रामीणः कुमारः। स तु सर्वथाऽज्ञातव्यक्तिः क्षेत्रकर्मणि नियुक्तः। ज्ञानामृतपिपासाविवशः स स्विण्डनपुरं गत्वा तत्रस्थे धूमयानयन्त्रकार्यालये भृत्यो बभूव। दिवा स्विन्नगात्रः श्राम्यल्लँब्धविश्रान्तिक्षणे ग्रीकभाषां तथा लाटिनभाषामध्येतुमारेभे। न केवलं दिनावसानेऽध्ययनपरोऽपि तु बाष्पमुद्गरबन्धे कठिनीखण्डेन ग्रीकवर्णमालां विलिख्य तां कण्ठे कुर्वाणः कैश्चिद्दिनैः काव्यनिर्माणपाटवं प्राप्तवान्। प्रकाशं गते तत्काव्ये स्फीतं यशः प्रथितं तस्य मुद्गरकवेः। यथाक्रमं च लोहपिण्डदण्डनकर्म समुत्सृज्य साहित्यसुधासिन्धुतरङ्गसङ्गतान्तरङ्गस्तद्ग्रामतरुणीसहृयहृदयरङ्गेऽनङ्गरूपः समजनि। तां च परिणीय शून्यप्रायेऽस्मिन् संसारे स्निग्धशीतलच्छायाबहुलकल्पवल्लरीं गृहनिर्माणक्लेशैरपि सुखं लेभे। यतस्ताभ्यां द्वाभ्यामिष्टका एकैकशः सञ्चित्य ततो निकटस्थं खेटकं नीत्वा निकेतं निरमायि। तयोर्द्वयोरेव तद्विविक्तं जगदासीत्। न कोऽपि प्रातिवेशिकोऽभिजानाति तौ। वाग्देवीपरिचर्यापरायणः सः, सा च तत्काव्यमकरन्दमर्मज्ञा मधुकरी।

महायुद्धात्पूर्वमपि काव्यविक्रयोऽभवत्स्वल्प एव। वृत्तपत्रलेख-

व्याख्यानैश्चोपार्जितं वित्तं केवलं वृत्तयेऽलं यथोपमातुरर्भके वात्सल्यं केवलं प्राणधारणायैव न पुष्टये। रसेन्दुग्रहसुधांशुसम्मिते संवत्सरे विल्यम्सोऽनतिक्रान्तसमुचितवयोऽवधिः स्वेच्छासैनिकताधिगमे विदधे प्रयत्नम्, किन्तु स्वास्थ्यसंपत्तिवैधुर्यादवधीरितः प्रथमतः। तथापि पुनः सप्रयत्नं स शतघ्नीसैनिकानीकान्तर्भूतो यदृच्छया भारतं प्रेषितः। तत्र पौरस्त्यसाहित्यपारावारपरम्परां गाहमानः संस्कृताध्ययनपरः समजनि। आंग्लभुवं पुनः प्रत्यागतोऽमरवाणीपरिशीलनं न परिजहार, प्रत्युत तस्यैव फलं मह्यं यदर्पितं पुस्तकं पञ्चतन्त्राभिवादकम्।

अयं मुद्रकरः कश्चिल्लण्डननगरे बहुभिर्बहुमानितः। यतः स आल्फ्रेडोऽन्धमित्रं सप्ताहात्प्रागेवाब्रवीत्। मुख्यमन्त्रिणाहं तथा सम्भावितो यथास्मात् तत्करकमलप्रणीतपत्रात् सर्वं विशदं भवेत्। इति। पत्रे च शुभवार्ता निवेदिता यत् सर्वाकारेण सेवानिवृत्तिहेतोर्वृत्त्यर्थमाजीवं वेतनसमं विनिश्चितम्। पञ्चाशत्स्वर्णमुद्राज्ञापकं वेतनावाप्तिपर्यन्तं प्राणयात्रार्थं पत्रे क्रोड़ीकृतमभूत्। इति।

तथाप्यनेन सर्वकालविहितबहुभावेन नासौ परितुष्टो यतः स भाविनीं विपदं मनश्चक्षुषा प्रत्यक्षीचकार। सहसैव समुपसृत्य मां सुदृढं स्वकराभ्यां गृहीत्वा सद्यर्घरारावबाष्पावरुद्धकण्ठः प्राह—मित्र हरे! मत्पत्नीस्वास्थ्यमाशातीतपथं गतमासीत्।

इदानीं पुनस्तपस्विन्यास्तत्साध्व्या नान्या कापि चिन्ता विहाय भर्तृग्रन्थसंग्रहस्य पत्रे दानम्। तदा मया सोऽन्धो विज्ञापितः "ग्रन्थव्यवस्थायां मम साहाय्यं चेदपेक्षितमर्हं तत् कर्तुं समुत्सहे। साध्वीसान्त्वनार्थं च तां द्रष्टुं समीहे। इति। तथा चेत् कृपया विधीयते समीचीनं ममेदं सर्वमित्युक्तोऽहं दिनद्वयेन तां सतीं द्रष्टुं गतः। दक्षिणमार्स्टनग्रामे मेरीविल्यम्साभ्यां स्वकराभ्यां विनिर्मितं

तत्स्वल्पं गृहमद्राक्षम्। मुखप्रकोष्ठकं प्रवेशितोऽहं स्वल्पं निर्मलं केवलं भोजनासनादिकार्य्यहेतुकवस्तुसम्भारसुभगं च तथापि गिरिकन्दरगततपःस्थलीव सुखोपभोगजातविधुरं तच्छून्यशून्यमपि पवित्रं तद्‌मंसि। वातायनसमीपस्थे ग्रन्थवाहके फलके व्यलसन्नष्टौ वा दश वा संस्कृतस्य तस्य प्रेमसर्वस्वरूपिणो ग्रन्थाः। संस्कृतग्रन्थान् विहाय न केऽप्यन्ये तत्र दृष्टिपथं गताः। ते च पुनर्विक्रीय ग्रीकलाटिनग्रन्थान् क्रीता इति स्फुटमेव। द्वितीयां भूमिकां गृहस्य शय्यागारं च व्यलोकयम्। यथाधस्तनी व्यवस्था तथात्रापि। आपादचिबुकं चीवरैरावृता शयनगता पाण्डुक्षामासन्नमरणा च तपस्विनी कविपत्नी विपत्नी मेरी दन्तिदन्तच्छविपाण्डुरवर्णशीर्णशरीरकान्तिर्ददृशे। केवलं शुष्कचर्मास्थिमयी कन्धरयावसन्ना। नेत्रे तावत्क्षीणक्षीणे मीनप्राये चले दृष्टे। सोऽन्धः शय्यान्तिके निषण्णः। तं च तां चान्तरा मेरीदेव्याः सर्वस्वमञ्जूषा भूमौ निहिता ददृशे। उद्घाट्यतामियमित्युक्ते अहं तथा कृतवान्। दृष्टश्च तत्र स ग्रन्थो यथादिष्टं परिष्कृतः। निराकृतानि तस्यैव पत्राणि परिहृत्य न तत्रान्यत् किमपि विलोकितम्। स ग्रन्थ एव तत्र मञ्जूषागतस्तद्‌गृहस्य सर्वस्वमिति सर्वथा मतिरजायत तदा।

तस्यास्तपस्विन्या नान्या कापि चिन्ता ग्रन्थान् विहाय। मया पुनः प्रतिज्ञया निवेदितं—पात्र एव ते दीयन्त इति। ततो ग्रन्थानधिकृत्य संक्षिप्तं सम्भाषणमावयोः समजनि यतः प्रकोष्ठेऽस्मिन् प्रत्येकः शब्दः परममूल्यवानित्यहं सर्वथाऽऽज्ञासिषम्। ग्रन्थोऽयं शीघ्रमेव प्रकाशमेष्यतीति मया प्रतिश्रुतम्। अव्याजसरलं सर्वमावयोर्भाषणमभूत्। तथापि तन्निर्दिष्टैहिकवासने शान्तं प्रसन्नगभीरं बभूव। अन्ततश्च तामामन्त्र्य निष्क्रामन्ननुग्रहभराक्रान्तस्वान्तो

निजहृद्गतं तस्यै न्यवेदयम्। अयि साध्वि! तव आर्यपतिचरण-दर्शनलाभस्मृतिर्मम कृतज्ञे हृदये चिरन्तनी स्थास्यति। यतः सोऽभूद् भूतभावनः कोऽपि कोटिष्वेक एव यस्य समागमः क्षणान्तरे वरीयांसं विधत्ते नरं सत्सङ्गपुण्यप्रमृष्टदुरितमिति।

आकर्ण्य चेदं पतिविषयकं मम हृद्गतं साध्व्या नयनपटले वैशाखे यथा करिकराकारधारासारेण वृष्टिर्भवति तथा बाष्पगङ्गाप्रवाहो दुर्निवारो ददृशे। अश्रुभिः सार्धं स्वरमार्दवेन सोवाच—वरिष्ठेष्वपि सोऽद्वयः कोऽपीति। मन्ये एतान्यक्षराणि चरमाण्येव तदधरनिर्गलितानि। आवयो वियोगावसरसाक्षी चक्षुर्विकल इति न मनो मे दूयते। तदावसथं परिहृत्य प्रस्थितोऽहं वाहनमारूढः। किन्तु दुःखजड़ं मद्धृदयं ग्रीष्मापराह्णवेलायां नितान्तशान्तं क्षणं मां दिव्यघनी मकरन्दपरिमलसञ्चिदानन्दं किमपि निन्ये इति मन्ये। सन्ति क्षणा ईदृशा द्वित्रा न पुनर्बहुलाः शून्यप्रायेऽस्मिन् संसारे यदाऽपात्रमपि मानुषं स्वान्तं निर्मलं दिव्यनभोमण्डलं सञ्चरति—गलति च स्वार्थमूलः सर्वथा।

---

# रसमञ्जरी।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विशुद्ध-सनातनधर्मविद्यालय-समीक्षणाय परिदर्शकः समागतः। छात्राः सर्वे नितरां पर्याकुलाः सञ्जाताः, शिक्षकाश्च भयत्रस्त-मनसः कथमपि स्वं स्वं कर्म निर्वाहयन्ति। पञ्चमश्रेणीं प्रविश्य परिदर्शकेन पृष्टं किं वा भवद्भिरधीयत इति। मधुसूदनेनोक्तं—

सुभाषितमिति । ततः पुरतः समुपविष्टो गदाधरचन्द्रः परिदर्शकस्यादेशेन श्लोकमिममपठत्—

चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥

इति ।

परिदर्शकः । सम्यक् । ब्रूहीदानीं तिष्ठति-पदं कथं निष्पन्नमिति ।

गदाधरः । आर्य ! स्थाधातोर्लटि तिपि शपि तिष्ठादेशे रूपम् ।

परिदर्शकः । एतत् प्रामादिकमिति वक्तुं न पार्यते, परं सम्यग् न सञ्जातम् । एतत् खलु शिरोवेष्टनपूर्वकं नासिकाप्रदर्शनमित्युच्यते । सर्वदा स्मरणीयं श्रीमद्भिः प्रक्रियागौरवं विषवत् परित्याज्यमिति । ( पार्श्वोपविष्टं वनमालिनं प्रति ) त्वया तावत् किं वा मन्यते ?

वनमाली । आर्य ! पित्रा मे समुपदिष्टं—स्थाधातोर्लटि तिपि द्वित्वे रूपं तिष्ठतीति । प्राचीनग्रीसीयभाषायां histesi-रूपेणायमेवावतिष्ठते ।

परिदर्शकः । वत्स ! साम्प्रतं बहवो भारतीया महता व्याधिना समाक्रान्ताः केवलं ग्रीसीय इति वा लाटिन इति वा आङ्ल इति वा प्रलपन्ति । ग्रीसीयभाषायां यत् histesi-पदमुपलभ्यते तदस्माकमेव हिष्ठाः-पदस्य विकृतं रूपम् । अपि न स्मर्यते श्रीमता सन्ध्यावन्दनमन्त्रे—"आपो हिष्ठा मयोभुवः" इत्यत्र हिष्ठा-शब्दः । जानीहि वत्स ! दृढतरं विजानीहि—संस्कृते खलु तत् सर्वं यद् ग्रीके यच्च लाटिने । यथा तथा वा भवतु, श्रीमत उत्तरं पूर्वतः समीचीनतरम् । द्विर्बद्धं सुबद्धं भवतीति न्यायेन द्वित्वं सञ्जातम्, तावता पतनाशङ्का कथञ्चिन्निवृत्ता । ( मधुसूदनं प्रति दृष्टिं पातयित्वा ) वत्स !

प्रतिभाभास्वरं तव वदनारविन्दं सन्दृश्यते। तिष्ठति-शब्दस्य व्युत्पत्तिमधिकृत्य त्वया स्वाभिमतं विव्रियताम्।

मधुसूदनः ( ऋजु दण्डायमानः सहेलम् ) ष्ठ-धातोः पुरस्तादेका तिः, परस्तादपरा तिः।

परिदर्शकः ( सावेगम् ) साधु साधु सुष्ठु सुष्ठु! वत्स! न खलु त्वयेदमुक्तम्, स्वयं सरस्वत्या प्रियतनयस्य तव मुखकमलेनेदमुपदिष्टम्। यथा भोगे रोगभयम्, यथा पाठे परीक्षाभयम्, तथावस्थानेऽपि पतनभयं सर्वथा मानसमाकुलयति, अत एवावलम्बनं किञ्चनापेक्ष्यते। अत्र च यष्टिरेव शोभनं सुलभं चावलम्बनम्। यष्टिशब्दस्यान्ते यष्टिकार उपलभ्यते, स परमार्थतस्तिकार एव, संसर्गजा दोषगुणा भवन्तीति न्यायेन मूर्धन्यषकारसंसर्गेण मूर्धन्यभावमधिगतः टिकारः सम्पन्नः। अत एव यथा समासस्यैकदेशः सः समासमवबोधयति ( राजाऽसे इति गणसूत्रं स्मर्यताम्), तथा यष्टेरेकदेशस्तिरपि यष्टिमभिदधाति। अग्रत एका यष्टिः, पृष्ठतश्चैका यष्टिः, मध्ये च देहयष्टिरित्थं पतनशङ्का सुदूरमस्तमियात्, सुखेन चावस्थानं घटेतेति ष्ठ-धातोः पुरस्तादेका तिः, उपरिष्टाच्चैका तिः संयोजिता।

वत्साः! सर्वथा नैव विस्मर्तव्यं श्रीमद्भिर्यद् वयं ( scientific age ) वैज्ञानिके युगे वर्तामहे इति। कार्यकारणज्ञानं च विज्ञानस्य जीवितम्। अत एव—

Theirs not to reaon why,
Theirs not to make reply.
Theirs but to do and die.

विचारणाया अवकाशो नास्ति, पर्यनुयोगस्यावकाशो नास्ति, केवलमादेशः पालनीयो मृत्युश्च वरणीय इति नीतौ जलाञ्जलिं दत्त्वा सर्वत्रैव कारणान्वेषणपरैर्भवितव्यम्। Seek and you

will find अन्विष्य, अधिगमिष्यसि इति जागर्त्येव महाजनवाक्यम्। वत्साः, एवं वर्तन्तां श्रीमन्तः श्रीश्च सिद्धिश्च विभवश्च ध्रुवमेव श्रीमतो वरयिष्यन्ते।

---

## ऋग्वेदीय-ऋग्गणना।

[ युधिष्ठिरो मीमांसकः ]

कदाचिदासन् ऋग्वेदस्यैकविंशतिः संहिताः। तथा च श्रूयते—"एकविंशतिधा बाह्वृच्यम्" इति। तत्रैकविंशतिशाखाभिन्न ऋग्वेदे केवलमेकैव संहितेदानीमुपलभ्यते। प्राचीनपरम्परासंरक्षकाणां भारतीयविदुषां जागरूकप्रयत्नेन न्यूनान्न्यूने पञ्चसहस्राब्दादियं संहिताऽविकृतैवोपलभ्यते। तत्र नैकोऽपि वर्णो विकृतिं प्राप, न्यूनाधिक्यपाठान्तरवार्तायास्तु का कथा। एवं परमप्रयत्नेन संरक्षितायामपि तदृक्परिमाणे प्राचीना अर्वाचीनाश्च वैदिकवाङ्मयविदो मिथो विप्रवदन्ते। तथाहि—

शौनकोऽनुवाकानुक्रमण्याम् १०५८० ऋचः पादश्चैकः, छन्दःसंख्यापरिशिष्टकारः १०६०२ ऋचः, सर्वानुक्रमणीटीकाकृज्जगन्नाथः १०५५२ ऋचः, चरणव्यूहटीकाकारो महिदासो बालखिल्यसहिताः १०५५२ ऋचः, तदुद्धृतश्लोकानुसारं १०६१९ ऋचः, ऋग्भाष्यरचयिता वेङ्कटमाधवः १०४०२ ऋचः, स एव द्विपदापक्षे १०४८० ऋचः, स्वामी दयानन्दः १०५८९ ऋचः, परं तदुल्लिखितप्रतिमण्डलयोगे १०५२१ ऋचः, अध्यापकमेकडानलः १०४४२ ऋचः, स एव द्विपदापक्षे च १०५६९ ऋचः, पण्डितसत्यव्रतश्च १०५२२ ऋच इति संगिरते।

किमत्र वैमत्ये कारणमित्यत्र विवेचयामः। शतपथे ऋचां परिमाणमेवमुल्लिखितम्—

"स ऋचो व्यौहत द्वादशबृहतीसहस्राणि, एतावत्यो ह्यृचो याः प्रजापतिसृष्टाः" (श० १०।८।२।२३) इति।

एतदनुसृत्य द्वादशबृहतीसहस्राणां-(१२००० × ३६ =) ४३२००० चतुर्लक्षाणि द्वात्रिंशत्सहस्राणि च ऋचामक्षरमानं जायते। तच्च शौनकीयानुक्रमण्यापि संवदति। वर्तमानायामृक्संहितायां तु व्यूहे कृतेऽपि ३९७२६५ त्रिलक्षाणि सप्तनवतिसहस्राणि पञ्च-षष्ट्यधिकद्विशतान्येवाक्षराणि भवन्ति। अतो जायते सन्देहः—किमियं शातपथी ऋगक्षरमात्रा दाशतयीनामृचामुत वेदचतुष्टयान्त-र्वर्तिनीनां सर्वासामृचामिति? अत्रैवं पश्यामः—शतपथस्योक्त-प्रकरणे ऋग्यजुःसाम्नामेवाक्षरमानमुच्यते नाथर्वाङ्गिरससहितानाम्। वैदिकवाङ्मये यत्र क्वचिदपि ऋग्यजुःसाम्नां त्रयाणामेवोल्लेखस्तत्र ऋगादीनि पदानि मन्त्रविशेषपराण्येवाश्रीयन्ते, न ग्रन्थपराणि। यथोक्तवान् जैमिनिः—"तेषामृग् यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः" (मीमांसा २।१।३५-३७) इति। अत एवं सम्भाव्यते—उक्तशातपथी गणना वेदचतुष्टयान्तर्गतानां सर्वासामृचामेव। तत्रैतावान् सन्देहोऽवशिष्यते—यच्छौनकेनानु-वाकानुक्रमण्यां पारायणे १०५८० अशीत्यधिकपञ्चोत्तरशतदशसहस्र-मृचः पादश्चैक इति ऋङ्मानमुक्त्वा शतपथवत् ४३२००० चतु-र्लक्षाणि द्वात्रिंशत्सहस्राणि चाक्षराणीत्युक्तम्, तत्तु ऋग्वेदीयर्चामेव कथमुपपद्यत इति देवो वेत्ति।

ऋक्संहितान्तर्वर्तिनीनामृचां संख्यामुपक्रम्य विदुषां वैमत्यं प्रागुक्तम्। किं तद् वास्तवमुत ऋग्गणनापद्धतिभेदमूलकमुत भ्रम-प्रमदादिजन्यमिति सम्प्रति विचार्यते—

## विशिष्टा ऋग्गणनापद्धतिः

दृश्यन्ते हि दाशतयीषु केचनेदृशा मन्त्रा ये कदाचिद् द्विपदा जायन्ते, कदाचिच्चतुष्पदा इति। तेषां द्विपदात्वेन चतुष्पदात्वेन च परिगणने ऋक्संख्यावैभिन्यमसंशयम्। अतस्तदेव तावद् विवेचनीयम्—

सन्त्यृग्वेदे १५७ सप्तपञ्चाशदधिकशतं द्विपदा ऋचः, तासु सप्तदश नित्याः चत्वारिंशदधिशतं नैमित्तिका उच्यन्ते। इमाश्चत्वारिंशदुत्तरशतमृचो यज्ञे शंसनादिषु द्विपदात्वेन विनियुज्यन्ते। तथाच ब्राह्मणं भवति—"द्विपदाः शंसति" इति। सूत्रते च भगवताश्वलायनेन "पश्वा न तायुमिति द्वैपदम्" (८।१२) इति। एता एवाध्ययनकाले चतुष्पदा भवन्ति। तदुक्तमृक्सर्वानुक्रमण्याम्—"द्विर्द्विपदास्त्वृचः समामनन्ति" (परि० १२।१०) इति। षड्गुरुशिष्यः सूत्रमिदमित्थं व्याचख्यौ—"ऋचोऽध्ययने त्वध्येतारो द्वे द्वे द्विपदे एकैकामृचं कृत्वा समामनन्ति समामनेयुः अधीयीरन्। म्ना अभ्यासे, लिङर्थे लेट्, शपि मनादेशः। द्वे द्विपदे यासां ता ऋचो द्विर्द्विपदाः। समामनन्तीति वचनाच्छंसनादौ न भवति। तेन 'पश्वा न तायुम्' (ऋ० १।६५) इति शंसने दशर्चत्वम्, आसां चाध्ययने पञ्चर्चत्वं भवति" इति। अयमेवाभिप्राय ऋग्वेदस्य प्रथममण्डलान्तर्वर्तिपञ्चषष्टितमसूक्तभाष्यारम्भे सायणाचार्येणोपवर्ण्यते। महिदासोऽप्यासां विषय आह—"हवन एकैका अध्ययने द्वे द्वे आमनन्ति" (पृष्ठ १९) इति।

(क्रमशः)

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 2232*



---

Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

४र्थ-वर्षे Special Shivaratri Number. संख्या ६

# मञ्जूषा

संस्कृतभाषामयी मासिक-पत्रिका

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Next Month.

Panini-Darshana of Madhavacharya with Notes and Translation.



Office : 81 Shyambazar Street, Calcutta—4
Annual Subscription : Rupees Six only.
Foreign : Rupees Eight.

## MANJUSHA—OLD VOLUMES

A few sets of Manjusha Vols. I, II and III are still available. Price Rupees five for all three volumes. Postage extra.

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, सभाष्यम् ऋग्वेदो मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत। चैत्रतः शोधनादीनां समीचीना व्यवस्था भविष्यति।

श्रीविश्वनाथ चट्टोपाध्यायः।

८१ श्यामबाजार ष्ट्रीट, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone: B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

February, 1950. — १८७१-शकीय फाल्गुनस्य ४र्थ-वर्षस्य षष्ठ-संख्या — Vol. IV No. 6

## ॥ श्रीभगवत्पादस्तवः ॥

[ विद्याभास्करः, विद्वान् एम्० रामकृष्ण भट्टः, एम्० ए ]

शोणशैलनिवासमीश्वरमाशुतोषमघापहं
दीनबन्धुमुपास्महे गिरिजाश्रितार्द्धकलेवरम् ॥ ध्रुवम् ॥
ताण्डवेऽतुलपण्डितं परिखण्डितासुरदोर्मदं
चाण्डजेशरथाशुगं करमण्डनायितशूलकम् ।
इन्दुखण्डविभासुरारुणकेशमण्डलमव्ययं
सुन्दराननमन्धकासुरगन्धसिन्धुरसिंहकम् ॥ १ ॥

पावनं सुकुमारमानसमश्मसंहतिविग्रहं
तापसव्रजपादपङ्कजरेणुवासितकाननम् ।
दुःखितार्तिनिवारणोद्यतमिन्दुशेखररूपिणं
सर्वमङ्गलदायिनं शरणं व्रजाम्यरुणाचलम् ॥ २ ॥

क्रौञ्चदारणसन्निभं भवसिन्धुवैशसयादसां
पीडया मुनिवर्यमर्यमतेजसं बहु सीदताम् ।
तारणोत्सुककर्णधारमतन्द्रितं रमणाभिधं
सप्ततिं शरदामतीतमिहाद्य नौमि जगद्गुरुम् ॥ ३ ॥

ऊर्ध्वरेतसमुद्धृतान्तरवैरिणं ह्यमरेश्वरं
नित्यसिद्धसमाधिमाधिविहीनमानतमानवम् ।
अद्वये महसि प्रतिष्ठितमुत्तमं स्थितधीगुरुं
ब्रह्मवर्चसशेवधिं भुवनावनाय जनिश्रितम् ॥ ४ ॥

शैशवे सहसैव लब्धविरक्तिबोधसमुद्भवो
यो विहाय निजं निकेतनमागतो जगतां पितुः ।
सन्निधिं गिरिशस्य चारुणपर्वते तपसा चिरं
सिद्धिमापदनुत्तमां प्रणतोऽस्मि तं गुरुमव्ययम् ॥ ५ ॥

ब्रह्म सत्यमथो जगन्न तथेति यः श्रुतिभाषितं
सार्थकं निजजीवितेन निरञ्जनेन दर्शितवलम् ।
यादृशो न बभूव नास्ति भविष्यतीह कदापि नो
सर्ववित्करुणार्द्रचित्तमृषिं शरण्यमुपैमि तम् ॥ ६ ॥

योऽरुणाचलपादमेत्य पवित्रमन्यदगान्मुनिः
स्थानमेव न, कन्दरोदरमीशमन्दिरके चिरम् ।
आश्रितस्तपसे च षड्वदनाश्रमं गिरिमूर्धनि
त्यक्तमौन उपादिशच्च सतो नमामि तमीश्वरम् ॥ ७ ॥

दक्षिणामुखकल्पमाशु यमागमन्मुनिपुङ्गवं
शान्तहृद्यसदाश्रमस्थितमुत्सुका जनता मुहुः ।
वेदितुं परमार्थमीप्सितदायिनं स्मितधारया
मौनरत्नशलाकयैव तमाश्रये रमणं गुरुम् ॥ ८ ॥

मोक्षवर्त्म सुधामयैर्वचनैरबोधयदञ्जसा
यो बहून्विदुषो गणेशमुखांश्च सर्वसमेक्षणः ।
भक्तिमान्निजमातरि ध्रुवमातनोच्च मनोहरं
मातृभूतमहेश्वरालयमाश्रमेऽखिलभद्रदम् ॥ ९ ॥

शान्तये मनसोऽपि पश्चिमदेशजाः सुधियो मुहु-
र्यस्य पुण्यतमाश्रमे निवसन्ति विस्मृतवैशसाः ।
श्वापदा अपि सौहृदेन मिथो वसन्त्यथ सन्निधौ
यस्य, चित्रचरित्रमद्य तमानमामि जगद्गुरुम् ॥ १० ॥

अप्रमेयतपोनिधेर्जनुषात्र यस्य हि भारतं
प्राभवं प्रतिपद्यते महदद्य चामृतवीक्षणात् ।
उत्सवे वयमद्य यस्य च जन्मनो मिलिताः समे
शङ्करं प्रणिपत्य सद्गुरुमङ्गलं तु वृणीमहे ॥ ११ ॥

श्रेयसे जगतामसौ भगवानृषिः कुशली चिरं
वर्धतां जनताहृदो भयशोकतापसमुद्भवम् ।
कालिमानमपोह्य, साधुजनाश्च मङ्गलशालिनः
शान्तिसौख्ययुता भवन्तु च जन्तवोऽत्र समे भुवि ॥ १२ ॥

॥ ॐ तत्सत् ॥

---

# आभाणकरत्नानि

१ । Good things are hard.
(ग्रो) Khalepa ta kala.
शोभनानि वस्तूनि कठिनानि ।

२ । The danger past and God forgotten.
The river past and God forgotten.

अतिक्रान्ता विपद्, विस्मृतश्च परमेश्वरः ।
तीर्णा नदी, विस्मृतश्च भगवान् ।

३। I see, and approve, the better course ; [ but ] I follow the worse.

(ला) Video meliora proboque ; Deteriora sequor.

उत्कृष्टतरं पन्थानं पश्यामि प्रशंसामि च, निकृष्टतरं पुनरनुसरामि ।

४। One has always strength enough to bear the misfortunes of one's friends.

(फ) On a toujours assez de force pour supporter le malheur de ses amis.

शक्तिः सोढुं सुहृद्दुःखं सदा सर्वस्य वर्तते ।
"महदपि परदुःखं शीतलं सम्यगाहुः ।" विक्रमोर्वशीयम् ।

५। One doth the scathe, and another hath the scorn.

अनिष्टमाचरत्यन्यः, अन्यो गच्छति वाच्यताम् ।
"खलः करोति दुर्वृत्तं नूनं फलति साधुषु ।
दशाननोऽहरत् सीतां बन्धनन्तु महोदधेः ॥"

६। He that builds a house by the highway side, it is either too high or too low.

(शा) Wer am Wege baut, hat viele Meister.

(ला) Aedificans habet artificis prope compita plures.

(ला) Multis propter iter consurgunt tecta magistris.

(फ) Lou, qui bastis au bourd d'un camin sera crtiioat.

( इज) Chi fabrica la casa in piazza, o che è troppo alta o troppo bassa.

यो हि राजपथे गृहं विनिर्माति [ तस्य ] तत् अत्युच्चं वा भवति, अतिनीचं वा भवति।

[ पथचारिणां सर्वेषां समालोचनास्पदं भवति तन्निकेतनम्, कैश्चिदुच्यते अहो अत्युन्नतिदुष्टमिदं गृहम्, अपरैः कथ्यते अहो अतिनिम्नत्वदूषितमिदं भवनमिति । ]

---

# सुभाषितरत्नानि

सर्वं तद् भद्रं यद्वन्ति देवाः । ऋग्वेदः ।

"If it by Thy will I should be in darkness, be Thou blessed ; and if it be Thy will I should be in light, be Thou again blessed. If thou vouchsafe to comfort me, be thou blessed ; and if Thou wilt have me afflicted, be Thou even, equally blessed." THOMAS A KEMPIS.

"यदि तवेच्छा—अहं तमसि वर्तेयेति, त्वं धन्यो भवतात्, अथ तवेच्छा—अहं ज्योतिषि वर्तेयेति, तथापि त्वं धन्यो भवतात्। यदि त्वं कृपया मां सान्त्वयसि त्वं धन्यो भवतात्, यदि त्वं दुःखेन मां सन्तप्तमिच्छसि तथापि त्वं तथैव धन्यो भवतात्।"

"बाँचान बाँचि, मारेन मरि, बल भाइ धन्य हरि !
धन्य हरि भवेर नाटे, धन्य हरि राज्यपाटे,
धन्य हरि श्मशानघाटे, धन्य हरि धन्य हरि !
सुधा दिये मातान यखन, धन्य हरि धन्य हरि,
व्यथा दिये काँदान यखन, धन्य हरि धन्य हरि ;

आत्मजनेर कोले बुके, धन्य हरि हासिमुखे,
छाड़ दिये सब घरेर सुखे, धन्य हरि, धन्य हरि !
आपनि काछे आसेन हेसे, धन्य हरि धन्य हरि,
फिरिये वेड़ान देशे देशे, धन्य हरि धन्य हरि ;
धन्य हरि स्थले जले, धन्य हरि फुले फले,
धन्य हृदय-पद्मदले, चरण-आलोय धन्य करि ।"

—रवीन्द्रनाथः

जीवयति जीवामि, मारयति म्रिये, ब्रूहि भ्रातर्धन्यो हरिरिति। धन्यो हरिर्भवनाट्यमन्दिरे, धन्यो हरी राजासनचत्वरे, धन्यो हरिः श्मशानावतारे, धन्यो हरिर्धन्यो हरिः । सुधया मादयति यदा धन्यो हरिर्धन्यो हरिः, व्यथया रोदयति यदा धन्यो हरिर्धन्यो हरिः, स्वजनस्य क्रोड़े वक्षसि यदा सहासवदनो ( ब्रूहि ) धन्यो हरिर्धन्यो हरिः, सर्वस्मिन् गृहसुखे दत्तजलाञ्जलिः ( तदापि ब्रूहि ) धन्यो हरिर्धन्यो हरिः । स्वयमेव विहसन् समीपमुपसर्पति—धन्यो हरिर्धन्यो हरिः, देशे देशे पर्याटयति ( तदापि ) धन्यो हरिर्धन्यो हरिः । धन्यो हरिः स्थले च जले च, धन्यो हरिः पुष्पे च फले च, धन्यो हृदयपद्मदले ( वर्तमानः ), चरणालोकेन धन्यं विदधानः ( तत् हृत्पद्मदलम् )।

---

## पर्जन्यवल्लक्षणप्रवृत्तिः

यथा हि पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति, एवं व्याकरणस्य सूत्राण्यपि सति सम्भवे सर्वत्रैव प्रवृत्तिमर्हन्ति, न पुनरद्[illegible]मनुवर्तन्ते । तथाहि "ह्रस्वः" इति सूत्रेणाभ्यासस्य

स्वरस्य ह्रस्वो विहितः। यत्राभ्यासे स्वत एव ह्रस्वः स्वरो वर्तते तत्रापि ह्रस्वस्यैव ह्रस्वो विधीयते। उक्तञ्च महाभाष्ये [ १।२।९, ६।१।१२७ ] —

न दीर्घाणां दीर्घाः प्राप्नुवन्ति।

किं कारणम् ?

न हि भुक्तवान् पुनर्भुङ्क्ते, न वा कृतश्मश्रुः पुनः श्मश्रूणि कारयति।

ननु च पुनः प्रवृत्तिरपि दृष्टा। भुक्तवांश्च पुनर्भुङ्क्ते, कृतश्मश्रुश्च पुनः श्मश्रूणि कारयति।

सामर्थ्यात् तत्र पुनः प्रवृत्तिर्भवति, भोजनविशेषाच्छिल्पविशेषाद् वा। दीर्घाणां पुनर्दीर्घत्ववचने न किञ्चित् प्रयोजनमस्ति। अकृतकारि खल्वपि शास्त्रमग्निवत्। तद् यथाग्निर्यददग्धं तद्दहति।

कृतकारि खल्वपि शास्त्रं पर्जन्यवत्। तद् यथा पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति।

( १ )

प्रभुः। प्रतिदिनमेव भवनस्य पुरस्तात् सलिलं सेक्तव्यम्।

भृत्यः। यथाज्ञापयत्यार्यः।

अथ कदाचिन्मुसलधारेण वृष्टिः प्रवृत्ता।

प्रभुः। किमित्यद्य त्वया जलं न सिक्तम् ?

भृत्यः। आर्य ! अद्य वृष्टिः सञ्जाता।

प्रभुः। किमिति वृष्टिवारणाय छत्रं नाग्रहीः ?

( २ )

आरोग्यशालायां भिषजा रुजा कातरस्य रोगिणः कृते स्वापजननं भेषजं व्यवस्थापितम्, प्रतियाममेका मात्रा सेवनीया इति तेन निर्दिष्टम्।

सेविका। (सुखसुप्तं रोगिणं ताडनेन प्रबोध्य) जागृहि जागृहि। कालोऽयं स्वापसञ्जननं भेषजं सेवितुम्।

रोगी। किमिति स्वपन्तं मां प्रबोधितवती। अहं खल्वन्तरेणैव भेषजं सुप्त आसम्।

सेविका। भिषजो निर्देशस्त्ववश्यमेवानुमान्यः। प्रतियामं रोगी स्वापभेषजं पाययितव्य इति हि तस्यादेशः, इति हि तस्यानुशासनम्।

---

## प्रामाणिकप्रवरः पतञ्जलिः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत्तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥

इत्यादितः सुप्रथितवचःपरम्परातो योगसूत्रकारस्य महाभाष्यकारस्य चरकसंहिताकारस्य चाभिन्नत्वं प्रतीयते। तच्चाभिन्नत्वं प्रमाणसिद्धं वा नामगतसादृश्यैकमूलं वेति साम्प्रतं विचार्यते।

अत्र प्रथमतस्तावदिदमेव स्मृतिपथमधिरोहति यत् नञ्सूत्रभाष्ये (२।२।६) महर्षिणा पतञ्जलिना 'अनेक'शब्दस्य एकवचनत्वमेव व्यवस्थापितम्। तथा च तद्वचनम्—

"इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सति संगृहीतं भवति।

किम् ?

अनेकमिति।

किमत्र संगृहीतम् ?

एकवचनम्।

कथं पुनरेकस्य प्रतिषेधेन बहूनां सम्प्रत्ययः स्यात् ?

प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति। तद् यथा। आसय शायय भोजयानेकमिति।

यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्र क्रियागुणौ प्रसज्येते, यत्र खलु न प्रसज्येते तत्र कथम्। अनेकस्तिष्ठतीति।

भवति चैवंजातीयकानामप्येकस्य प्रतिषेधेन बहूनां सम्प्रत्ययः। तद् यथा। न न एकं प्रियम्। न न एकं सुखमिति।"

न केवलं महर्षिणानेकशब्दस्यैकवचनं प्रतिपादितम्, प्रयोगोऽपि सर्वत्रैवैकवचनान्तस्यैव विहितः। सूत्रकारस्य वार्त्तिककारस्य चाप्येतदेव सम्मतम्। तथाहि—

'अनेकमन्यपदार्थे' [ पा० २।२।२४ ]।

छन्दस्यनेकमपि साकाङ्क्षम् [ पा० ८।२।३५ ]।

इति सूत्रद्वितय एवानेकशब्दस्य प्रयोगोऽष्टाध्याय्यामुपलभ्यते, उभयत्रापि च विस्पष्टमेवैकवचनं सन्दृश्यते।

अनेकमपीति तु वचनात् सिद्धम् [ वार्त्तिक १। २।३९।३ ]।

प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् [ वा० १।२।६४।१ ]।

प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभिधानादप्रत्यर्थमिति चेत् तदपि प्रत्यर्थमेव [ वा० १।२।६४।३० ]।

यावतामेवाभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनाप्यनेकस्याभिधानम् [ १।२।६४।३१ ]।

आचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात् सन्देहः [वा० ६।२।३६।१]।

स्वार्थेऽवधार्यमाणेऽनेकस्मिन् [ वा० ८।१।१२।४ ]।

इति वार्त्तिकेष्वप्यनेकशब्दस्य सर्वनामत्वमेकवचनत्वञ्च समवलोक्यते।

एक इन्द्रोऽनेकस्मिन् क्रतुशत आहूतो युगपत् सर्वत्र भवति [ भा० १।२।६४ ]।

अथवैतर्ह्यनेकमनुबन्धशतं नोच्चार्यम् [ भा० १।१।१ ]

नैकेन घटेनानेको युगपत् कार्यं करोति, एवमिमम् कारं नानेको युगपदुच्चारयेत् [ भा० १ १।१ ]।

न चैकस्याः प्रकृतेरनेकस्य युगपत् परत्वेन सम्भवोऽस्ति [भा० १।१।४४ ]।

इत्यादिष्वधिकषष्टेषु वाक्येषु भाष्यकृताप्येकवचनं सर्वनामत्वञ्चास्थितम् ।

निरुक्तेऽप्यनेकशब्दस्यैकवचनमेवोपलभ्यते । यथा 'तत्र काष्ठा इत्येतदनेकस्यापि सत्त्वस्य नाम भवति' [ २।१५ ] इति ।

शतपथब्राह्मणे 'अनेककामः अनेकाक्षिन्' इत्यादयः शब्दाः सन्दृश्यन्ते शुद्धस्त्वनेकशब्दो नोपलभ्यते ।

तैत्तिरीयारण्यकेऽपि 'अनेकेन साम्ना' इत्यत्रैकवचनमेवोपलभ्यते ।

श्वेताश्वतरोपनिषदि पुनः 'वर्णाननेकान्' [ ४।१।१४ ] इत्यत्र बहुवचनान्तोऽनेकशब्दः प्रथमतो नयनपदवीमवतरति ।

शाबरभाष्येऽपि 'अनेकस्मिन्नवधार्यमाणे भिद्येत वाक्यम्" [ मी० सू० १।१।४ भाष्य] इत्यादिष्वेकवचनमेव प्रयुक्तम् ।

योगसूत्रे 'प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्' [ ४।५ ] इत्यत्र विस्पष्टमेवानेकशब्दस्य बहुवचनान्तत्वमुपलभ्यते ।

एवञ्च यास्कपाणिनिकात्यायनमतानुवर्तिना पतञ्जलिनानेकशब्दस्यैकवचनत्वस्याङ्गीकारात् प्रतिपादनात् प्रयोगाच्च तस्यैव शब्दस्य बहुवचनं प्रयुक्तवतो योगसूत्रकारादन्यत्वं वज्रलेपायत इति शम् । ( क्रमशः )

---

# छात्री वा छात्रा वा

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

साम्प्रतं खलु बहवः स्त्रियः—बालाश्च तरुण्यश्च प्रौढ़ाश्च पाठशालास्वधीयानाः सन्दृश्यन्ते। ताश्छात्री-शब्देन व्यपदेश्या आहोस्विच्छात्राशब्देनेत्यत्र समुन्मिषति संशयो विदित-वेदितव्य-स्यापि मानसे। तथाहि "छत्रादिभ्यो णः" [४।४।६२] इति सूत्रेण छत्र-प्रभृतिभ्यः शब्देभ्यो ण-प्रत्ययो विहितो महर्षिणा पाणिनिना, न पुनरण्। णाणोश्चायमं भेदो यदण्णन्तानां स्त्रियां "टिड्ढाणञ्—" [४।१।१५] इति सूत्रेण ङीप् भवति, णान्तानां पुनः "अजाद्यतष्टाप्" [४।१।४] इति टाब् भवति। "छत्रादिभ्यो णः" इति सूत्रे भाष्ये छात्रशब्दस्यार्थ इत्थमुपवर्णितः*—

किं यस्य छत्रधारणं शीलं स च्छात्रः? किं चातः? राज-पुरुषे प्राप्नोति। एवं तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्यः। छत्रमिव-च्छत्रम्। गुरुश्छत्रम्। गुरुणा शिष्यश्छत्रवच्छाद्यः शिष्येण च गुरुश्छत्रवत् परिपाल्यः। इति।

कार्मस्ताच्छील्ये [६।४।१७२] इति सूत्रभाष्ये पुनर्विस्पष्टमेवोक्तम्—

किमर्थमिदमुच्यते, न "नस्तद्धिते" [६।४।१४४] इत्येव सिद्धम्। न सिध्यति। "अनणि" इति [६।४।१६७] इति प्रकृतिभावः प्रसज्येत। अणीत्युच्यते, णश्चायम्। एवं तर्हि सिद्धे सति यन्निपातनं करोति तज्ज्ञापयत्याचार्यस्ताच्छीलिके णेऽण्-कृतानि भवन्तीति। किमेतस्य ज्ञापने प्रयोजनम्? चौरी तापसीत्यणन्तादितीकारः सिद्धो भवति।

अत्र कैयटः। किमर्थमिति। कर्म शीलम् अस्य 'छत्रादिभ्यो णः' इति णे कृते सिद्धष्टिलोप इति भावः। ताच्छीलिक इति। एवं च

---

* तस्माद् ब्रह्मचारिण आचार्यं गोपायन्ति। श ब्रा ३।६।२।१५

"छत्त्रादिभ्योऽण्" इति लाघवाय कर्तव्यम्, णवचने प्रयोजनाभावात्। "प्रज्ञाश्रद्धा—" [५।२।१०१] इति, "ज्वलितिकसन्तेभ्यः—"[३।१।१४०] इति, "तदस्यां प्रहरणम्" [४।२।५७] इति णवचने ङीबभावः प्रयोजनम्।

अत्र नागेशः। भाष्ये अणन्तादितीकार इति। "अणो द्व्यचः" [४।१।१५६] इति फिञपि फलान्तरं बोध्यम्। अत एवोपक्रमभाष्ये अण्-कृतानि भवन्तीति बहुवचनप्रयोगः इत्याहुः। एवं चेति—ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्छात्रे ति सिध्यतीति चिन्त्यमिदमित्यन्ये। अन्यत्र ण-वचने प्रयोजनमस्तीत्याह—प्राज्ञे त्यादि।

"कार्मस्ताच्छील्ये" इति सूत्रे वामनकाशिकायामप्युक्तम्—एतज् ज्ञापयति—ताच्छीलिके णेऽण्कृतानि भवन्तीति, तेन चौरी तापसीति णान्तादपीकारः सिद्धो भवति।

अत्र न्यासः—यदि तर्हि ताच्छीलिकेष्वण्कृतमिष्यते, अणेवच्छत्त्रादिभ्यः कस्मान्नोच्यते, तत्राप्ययमर्थः। ज्ञापनार्थं निपातनं कर्तव्यं न भवति। युक्तमेतदुक्तवानसि। वैचित्र्यार्थं त्वण् कृतः।

पदमञ्जरी। एवं च "छत्त्रादिभ्योऽण्" इति लाघवाय कर्तव्यं, णवचने प्रयोजनाभावात्। ताच्छीलिके इति। तुल्यजातीयविषयत्वाज् ज्ञापनस्यैतल्लभ्यते, तेन "तदस्यां प्रहरणम्" "प्रज्ञाश्रद्धार्च"त्यादिके णे ङीब् न भवति।

"टिड्ढाणञ्—" [४।१।१५] इत्यत्र जयादित्यकाशिकायामुक्तम्—"णेऽपि क्वचिदण्कृतं कार्यं भवति। चौरी। तापसी।" इति। अत्र क्वचिद् इत्यधिकं वर्तते। तत्र न्यासः—क्वचिदिति वचनात् क्वचिन्न भवतीत्युक्तं भवति। क्व पुनर्णेऽप्यण्कार्यं भवतीति? ताच्छीलिके।

"कार्मस्ताच्छील्ये" इत्यत्र कौमुद्यामपि भट्टोजिनोक्तम्—न स्तद्धित इत्येव सिद्धेऽण्कार्यं ताच्छीलिके णेऽपि। तेन चौरी तापसी-

त्यादि सिद्धम्। प्रौढ़मनोरमा-तत्त्वबोधिनी-बालमनोरमा-लघुशब्देन्दुशेखरेषु विशिष्य किमपि नोक्तम्। गणरत्नमहोदधावुक्तम्—"छत्त्रादेण" इत्यनेन "तदस्य शीलम्" इत्यर्थे णो भवति। छादनादावरणात् छत्त्रम्। गुरुकार्येष्ववहितस्तच्छिद्रावरणप्रवृत्तः। छत्त्रशीलः शिष्यः छात्त्रः। अन्ये त्वाहुः—छत्त्रशीलः छात्त्रः। छत्त्रस्येव शीलमस्येत्यर्थः। छत्त्रं यथा धार्यमाणं वातातपवर्षत्राणाय भवति पुरुषस्य, एवमुपाध्यायो धार्यमाणः शिष्यस्य रागद्वेषक्रोधमोहत्राणाय भवति। स शिष्यं धर्मं ब्रूते। एवमसावुपाध्यायश्छत्त्रमिव छत्त्रम्। तच्छीलानुकारिशीलः शिष्यश्छात्त्र इत्युच्यते। गुरुशील इत्यर्थः।... शाकटाङ्गजस्तु चौरी तापसीत्यादौ ङीविधानार्थं "छत्त्रादेरञ्" इत्यनेनात्राञमाह। अस्मन्मते तु गौरादि-पाठाश्रयणान् ङी प्रत्ययः सिद्धः। इति। [ ७।३८५ वृत्तिः ]।

चन्द्रेणाप्यत्र पाणिनिमतमनुसरता णप्रत्यय एव विहितः, तथाच तदीयं सूत्रम्—छत्त्रादिभ्यो णः [३।४।६३] इति। तत्र च वृत्तिः—छत्त्रादिभ्यस्तदस्य शीलमित्यस्मिन्नर्थे णो भवति। छत्त्रं शीलमस्य छात्त्रः। छत्त्रमिव गुरोः सुखहेतुरित्यर्थः।

जैनेन्द्रव्याकरणे "छत्त्रादेरञ्" [ ३।३।२१७ ] इत्यत्राञ्-प्रत्यय उपलभ्यते। "इञ्-टिड्ढाणञ्ठण्ठञः" [ ३।१।१८ ] इति सूत्रेण चाञ्-प्रत्ययान्तेभ्यः स्त्रियां ङी विहितः।

शाकटायनव्याकरणेऽपि "छत्त्रादेरञ्" [३।२।६३] इति सूत्रम्। तत्र च यक्षवर्मविरचिता वृत्तिः—छत्त्रादिभ्यस्तदस्य शीलमित्यर्थेऽञ् भवति। छत्त्रं शीलमस्येतिच्छात्त्रः। गुरुकार्येष्ववहितश्छत्त्रवच्छिष्य उच्यते। "टिट्ठण्ढेञणञ् गौरादिभ्यः" [ १।३।१४ ] इति सूत्रेण शाकटायनेनाप्यञन्तेभ्यः स्त्रियां ङी विहितः।

हेमचन्द्रेणापि "अङ्गस्थाच्छत्त्रादेरञ्" [६।४।६०] इत्यञेव विहितः।

अत्र च स्वोपज्ञबृहद्वृत्तिः—अङ्प्रत्ययान्तात् तिष्ठतेश्छत्त्र इत्यादिभ्यश्च 'तदस्य शीलम्' इत्यस्मिन् विषयेऽञ्-प्रत्ययो भवति। आस्था शीलमस्य आस्थः, सांस्थः आवस्थः, सामास्थः। वैयवस्थः। नैष्ठः। वैष्ठः। "उपसर्गादातः" [ ५।३।११० ] इत्यङ्। आन्तस्थः। भिदादित्वादङ्। छत्त्रादि। छत्त्रं शीलमस्य छात्त्रः। छत्त्रशब्देन गुरुकार्ये व्यवहितस्य शिष्यस्यच्छत्त्रक्रियातुल्या गुरुच्छिद्राच्छादनापायरक्षणादिका क्रियोच्यते उपचारात्। शिष्यो हि च्छत्त्रवद् गुरुच्छिद्रावरणादिप्रवृत्तश्छात्त्र इत्युच्यते। अभ्यासापेक्षापि क्रिया शीलमित्युच्यते। यथा शीलिता विद्येति। चुराशीलः चौरः। तपःशीलः तापसः। कर्मशीलः कार्मः। स्त्रियां छात्त्री। चौरी। तापसी।

भोजराजेन सरस्वतीकण्ठाभरणे—"छत्त्रसत्यानृतविशिखाभ्यो गुरूपसदनादिवृत्तिभ्यो णः" [ ४।४।११९ ] इति सूत्रं विहितम्।

क्रमदीश्वरेण "णश्छत्त्रादेः" [ तद्धित १८८ ] इति सूत्रं प्राणायि। तत्र "छत्त्रं छादनमावरणं शीलमस्य छात्त्रः" इति वृत्तिः। 'छत्त्रशब्दस्यावरणं प्रवृत्तिनिमित्तम्। तच्छीलो हि शिष्यो गुरोर्दोषापवारणे वर्तते' इति टीका। क्रमदीश्वरमतेन छात्त्रशब्दस्य स्त्रियां छात्त्रा स्यादिति प्रतीयते। तथाच "युवातपोभ्याम्" [तद्धित ७९०] इति सूत्रं व्याचक्षाणेन गोयीचन्द्रेणोक्तम्—"छत्त्रादौ पाठे कर्तव्ये पृथग्लक्षणकरणं टित्त्वादीप्रत्ययार्थम्। चौरी, तापसी।" इति।

मतमिदमनुसरता मुग्धबोधटीकाकृता रामतर्कवागीशेन वार्त्तिकं सूत्रं विहितम्—"छत्त्रादे र्णः" [पृः ५१०] इति, "तपश्चुराभ्यां ष्णः" इति च।

पद्मनाभदत्तेन सुपद्मे "छत्त्रादिभ्यो णः" [ ५।३।२५१ ] इति सूत्रं निर्माय वृत्तावुक्तम्—गुरुदोषाच्छादनं छत्त्रम्, तच्छीलमस्य छात्त्रः। छात्त्रा स्त्री। शैक्षः। तापसः। पञ्जिकायामुक्तम् पाणिनीये ण-

कार' कृत्वा ताच्छीलिकेऽण् कृतं कार्यं भवतीति परिभाषया ङीप-मिच्छन्ति" इति । मकरन्दे तु विशिष्य किमपि नोक्तम् ।

"छत्त्रादिभ्यः केशवणः" [ हरिनामामृत ७।६५९ ] इति सूत्रेण हरिनामामृते टित् णकारः प्रत्ययो विहितः । तेन छात्त्रशब्दस्य स्त्रियां छात्रीत्येव स्यात् । टित् केशवसंज्ञः [हरिनामामृत ६।११॰] इति ।

( क्रमशः )

---

# संशोधनम्

[ आङ्गलभाषातः ]

श्रीयुक्त-"समीक्षक"-सम्पादक-महोदय-समीपे ।

मान्या महोदयाः,

"समीक्षक"स्य व्यतीतसंख्यायां प्रकाशिते परममनोरमे सुतथ्य-समुज्ज्वले वीरनगरवाटिका-समाख्ये प्रबन्धे लेखकः पुरन्दरमहोदय-स्तुच्छमेकं विषयमधिकृत्य प्रमादपङ्के निमग्नः । स हि पल्लवपुरस्थस्य प्राचीनस्य कुसूलस्य ( साम्प्रतं नामशेषतामापन्नस्य ) जीर्णं प्राच्यं प्राकारं नगरतोरणतः क्रोशार्द्धार्द्धेऽवस्थितमिति समुल्लिखितवान् । १८३५-शाकस्याश्विनमासे मया सप्ताहद्वयं पल्लवपुरेऽवस्थितम् । तदानीं च कतिचिद्वारान् नगरतोरणं च प्राच्यं प्राकारं च समति-क्रान्तवानिति विस्पष्टमेव स्मरामि । तौ ह्यवरतः क्रोशपरिमाणेन व्यवहितौ ।

पुरन्दरमहोदयस्य परममनोज्ञेन प्रबन्धेनातिमात्रमाकृष्टोऽहमासम् । ऐतिहासिकसत्यानुरोधेन विषयेऽस्मिन् स्वीयप्रमादसंशोधनमसौ मर्षयिष्यतीति मे प्रतीतिः ।

हरचन्द्रफेनकः

( २ )

श्रीयुक्त-"समीक्षक"-सम्पादक-महोदय-समीपे

मान्या महोदयाः,

इच्छाम्यहम्, अनुमतश्चेद् भवताम्, "समीक्षक"स्य व्यतीत-संख्यायामध्यापकफेनकमहोदयस्य लेखन्याः स्खलनमेकं निर्देष्टुम्। "जीवनीकोष"तो विज्ञायतेऽध्यापकफेनकमहोदयः १८२२ तमशाकस्याषाढ़मासे धराधामावतीर्ण इति। अतः १८३५ तम शाकस्याश्विन-मासे यदा तेन पल्लवपुरेऽवस्थितम् तदा तस्य वयःक्रमस्त्रयोदशवत्सरा आसन्, न पुनर्द्वादश।

यस्य खलु सुसावधानस्तथ्याभिनिवेशः परमा सम्पदैतिहासि-कानां स श्लोकस्यास्य स्खलितस्य संशोधने मदीयां धृष्टतां मर्षयिष्य-तीति मे द्रढीयान् प्रत्ययः।

विद्युत् वसुः

( ३ )

श्रीयुक्त"समीक्षक"-सम्पादक-महोदय-समीपे।

मान्या महोदयाः,

"समीक्षक"स्य व्यतीत-संख्यायां विद्युन्महोदयस्य पत्रं नितरां चित्ताकर्षकं सञ्जातम्, परं तेनाध्यापकमहोदयस्य लेखन्याः स्खलनमिति यदुक्तं तदनभिज्ञजनस्य मानसे भ्रान्तिमुपजनयेत्। अतीतवर्षकतिपयानि यावदध्यापकः फेनकः सर्वं पत्त्राादिकं सुनिपुणाय लेखनसचिवाय लेखनार्थमनुकथयति। ततश्च तत् स्पर्शमुद्रा-यन्त्रयोगेण सम्मुद्र्यते।

सत्यशरणः

( ८ )

श्रीयुक्त-"समीक्षक"-सम्पादक-महोदय-समीपे ।

मान्या महोदयाः,

भवदीय-पत्रलेखकेन सत्यशरणेन विद्युन्महोदयाया इति विलेखनीये विद्युन्महोदयस्येति विलिखता स्वयमेव स्खलितम् । विद्युन्महोदया हि "मन्दोदर्याश्चषकद्वयम्" इति-समाख्यस्य सुमनोहरस्य बालकपाठ्यस्योपाख्यानस्य रचयित्री ।

तस्या हि ग्रन्थो यावतीं प्रशंसामधिगता सर्वथा ततोऽतिमात्रमधिकामर्हति । विद्युन्महोदया वर्धमानप्रदेशान्तःपातिन्यां पविपल्ल्यामतिमञ्जुले कुटीरे निवसति, सा हि पूर्वसजातीयस्य ग्रन्थान्तरस्य विरचने व्यापृता वर्तते इति श्रूयते ।

सुधा तौलिः ।

( ९ )

श्रीयुक्त-"समीक्षक"-सम्पादक-महोदय-समीपे ।

मान्या महोदयाः,

न खलु पविपल्ली वर्धमानप्रदेशे वर्तते, परं पर्य्यन्तभुवि मेदिनीपुरे । अत्र च नगरसीमा पिच्छिलासमाख्यायाः स्तोकायाः सरितः सरणिमनुसरति, पविपल्ली च नयनलोभनीयाया अस्याः सरितः पश्चिमे तटे समवस्थिता ।

प्रतिभावत्या ग्रन्थकर्त्र्या विद्युन्महोदयाया ग्रन्थे सर्वेषां मानसं समाकर्षन्त्या सुधामहोदयया ( समाकर्षता सुधामहोदयेन वा ) शोभनमेवाचरितम् । जाने संशोधनं च मदीयमिदं येन भावेन विहितं सा तेनैव भावेन ग्रहीष्यति, न पुनरन्यथा सम्भावयिष्यतीति ।

मेदिनीपुरवास्तव्यः ।

( ६ )

श्रीयुक्त-समीक्षक-सम्पादक-महोदय-समीपे।

मान्या महोदयाः,

मेदिनीपुरवास्तव्येन पिच्छिला नदी नयनलोभनीयेति यदुपवर्णितं तत्र मयावश्यमेव प्रत्ययस्थेयम्। शबरक्षेत्रसविधे प्रभवादारभ्य शबरीनद्याः सङ्गमं यावत् सरिदियं सर्वथा विरहितैव सौन्दर्येण। अस्यास्तीरे कतिभ्यश्चिदेव वर्षेभ्यः पूर्वम् १८४०तमे शाके कश्चित् क्रौञ्चस्तत्रत्येन केनचन कर्षकेण निर्घृणं निहत इत्येवास्या एकमेव प्रतिष्ठानिदानम्। वरदाशङ्कर-व्याधः।

( ७ )

श्रीयुक्त-समीक्षक-सम्पादक-महोदय-समीपे।

मान्या महोदयाः,

१८५०तमे शाके पिच्छिलानद्यास्तीरे क्रौञ्चहननस्य कारणभूतः पुरुषो न खलु कर्षकः परं वन्यपशुपालकः। स हीदानीं वीरभूमौ निवसति, एतच्चातीव प्रशंसास्पदं यत् सोऽद्यापि स्वकृतेः कृतेऽनुशेते। व्याधमहोदयस्याभिमतं श्लाघनीयतमम्। यद्यपि हास्यरसात्मकेषु पत्त्रेषु तेऽन्तरान्तरानभिज्ञजनसुलभस्यासमीचीनस्य नर्मणः पात्रतामासादयन्ति, तथापि भारतीयाः कर्षकाः सामान्यतः पारमार्थिकमृगयाविहारिणो न्याय्यकारिणश्च इत्यस्माकं सावधारणं वचनमुपश्रुत्य नूनमसौ प्रमोदमेवाधिगच्छेत्।

रसः

( ८ )

श्रीयुक्त-"समीक्षक"-सम्पादक-महोदय-समीपे।

मान्या महोदयाः,

हास्यरसात्मकानि पत्त्राणि नित्यमेव भारतीयानां कर्षकाणां पारमार्थिकं मृगयाविहारित्वं न्याय्यकारित्वं च निराकुर्वन्ति इति ध्वनयन्

"रसो" नूनं भ्रान्त एव। अमीषामसन्तोषपरिदेवनप्रवृत्तिर्बहूनां नर्मणां विषयः सञ्जाता, परं चित्रमुखेण वाऽन्यथा वा हास्यरसपरिवेषकैरस्मदीयैः कर्षकाणां कुत्सितमृगयाविहारित्वेन तटस्थमृगयाविहारित्वेन वा चित्रणं न स्मर्यते मया।

अरन्तुदः मित्रः

[ एतया पत्त्रानुपत्त्या कयेदानीं विरन्तव्यम्। कथमेतस्याः प्रारम्भोऽभ्यनुज्ञात इति चिन्तयन्नपि नोपलभे। समीक्षक-सम्पादकः ]

---

# गेटे-कवि-सुभाषितानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ४ )

हस्तलिपिमधिकृत्य कति वा न प्रवादाः प्रचलिताः। तत्र नवोढयोः सुन्दर्य्योः संलापः सुप्रथित एव। एकेनोक्तम्—अहो भर्तुर्मे नैपुण्यम्, तेन यद्विलिख्यते केनापि पठितुं न पार्यते। द्वितीयया प्रत्युक्तम्—अहो मम पतिस्तमप्यतिशेते। स हि स्वयमपि स्वलिखितं पठितुं न प्रभवतीति। तथा चात्र श्लोकः—

चतुरः सखि मे भर्ता यल्लिखति स तत् परो न वाचयति।
तस्मादप्यधिको मे स्वयमपि लिखितं स्वयं न वाचयति॥

इति। गेटे-महोदयेनाप्युक्तम्—

*Der Deutsche ist gelehrt*
*Wenn er sein Deutsch versteht.*

'Clever is the German who understands his own German.'

'निपुणः स शर्मण्यो यः स्वां शार्मणीं भाषामवबुध्यते।'

कस्य वा न विदितं भारतीयस्य "ते हि नो दिवसा गताः" इति वचनम्।

भवभूतेरुत्तररामचरिते दृश्यते—

जीवत्सु तातपादेषु नवे दारपरिग्रहे।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः॥

इति। गेटे-महोदयेनापि लिखितम्—

*Die Zeiten sind vorbei!*

Those times are gone by.

धार्मिकस्यात्मतुष्टिर्भगवता मनुना धर्ममूलत्वेन व्यवस्थापिता। तथाच तद्वचनम्—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥ २।६

इति। व्याख्यातञ्चैतत् तन्त्रवार्त्तिके भट्टपादैः—

यथा रुमायां लवणाकरेषु मेरौ यथा नोज्ज्वलरत्नभूमौ।
यज्जायते तन्मयमेव तत् स्यात् तथा भवेद्वेदविदात्मतुष्टिः।
एवं च विद्वद्वदनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम्।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥

[ तन्त्रवार्त्तिक १।३।२ ]

इति। महाभारतेऽप्युक्तम्—

यत् कर्म कुर्वतोऽस्य स्यात् परितोषोऽन्तरात्मनः।
तत् प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत्॥ इति।
न मे वागनृतं प्राह नाधर्मे धीयते मतिः।
वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथञ्चन॥

[ आदिपर्व १९६।१३ ] इति च।

गेटे-कविनाप्येतदेवोक्तम्—

*Erlaubt ist, was gefällt.*

'Right is what pleases.'

'श्लाघ्यमेवावधार्यं तन्मनःप्रीतिकरं हि यत्' इति ।

आत्मसंयमस्तावत् परमो बन्धनविमोचक इति सहस्रशः समुद्घोषयन्ति शास्त्रकाराः । गेटे-महोदयेनाप्युक्तम्—

*Von der Gewalt, die alle Wesen bindet*
*Befreit der Mensch sich, der sich überwindet.*

या शक्तिरिह बध्नाति सर्वभूतानि भूतले ।
ततो विमुच्यते सोऽत्र येनात्मैवात्मना जितः ॥

Napoleon-महोदयेनाप्युच्यते स्म—

The greatest conqueror is he who has conquered himself. "स एव विजेतॄणां श्रेष्ठो येनात्मा विजितः" इति ।

योगवाशिष्ठेऽप्युक्तम्—

तरन्ति मातङ्गघटातरङ्गं
रणाम्बुधिं ये मयि ते न शूराः ।
शूरास्त एवेह मनस्तरङ्गं
देहेन्द्रियाम्भोधिमिमं तरन्ति ॥

इति । अश्वघोषेणाप्युक्तम्—

तथा हि वीराः पुरुषा न ते मता
जयन्ति ये साश्वरथद्विपानरीन् ।
यथा मता वीरतरा मनीषिणो
जयन्ति लोलानि षडिन्द्रियाणि ये ॥

[ सौन्दरनन्द ९।२३ ] इति ।

गेटे-कवेः सुहृदा च गुरुणा च Herder-कविनाप्युक्तम्—

*Tapfer ist der Löwensieger,*
*Tapfer ist der Weltebzwinger,*
*Tapfrer, wer sich selbst bezwang.*

'Brave, the man who lions can tame,
The world-subduer is the same,
But braver he who conquered self.'

शूरस्तावत् सिंहदमनः, शूरस्तावज्जगद्विजेता, शूरतरः स येन जितो ह्यात्मा। ( क्रमशः )

---

# ऋग्वेदे ऋक्संख्या

[ युधिष्ठिर-मीमांसकः ]

चत्वारिंशदुत्तरशतं नैमित्तिका द्विपदा महिदासेनैवं संकल्यन्ते—

"पश्वा न तायुम् ( ऋ० १।६५।१-१० ) दश, रयिर्न ( ऋ० १।६६।१-१० ) दश, वनेषु ( ऋ० १।६७।१-१० ) दश, श्रीणन् ( ऋ० १।६८।१-१० ) दश, शुक्रः शुशुक्वान् ( ऋ० १।६९।१-१० ) दश, वनेम पूर्वीः ( ऋ० १।७०।१-१० ) दश, अग्ने त्वं नः ( ऋ० (५।२४।१-४ ) चत्वारि, अग्ने भव ( ऋ० ७।१७।१-६ ) षट्, प्र शुक्रैतु ( ऋ० ७।३४।१-१० ) दश, राजा राष्ट्राणाम् ( ऋ० ७।३४।११-२० ) दश, क ईं व्यक्ता ( ऋ० ८।२६।१-१० ) दश, परि प्रधन्व ( ऋ० ९।१०९।१-१० ) दश, तं ते सोतारः ( ऋ० ९।१०९।११-२२ ) द्वादश, इमा नुकम् ( ऋ० १०।१५७।१-५ ) चत्वारि, आयाहि वनसा ( ऋ० १०।१७२।१-५) चत्वारि, इति नैमित्तिकद्विपदाश्चत्वारिंशोत्तरशतमिति ( १४० )" इति ( पृष्ठ १८ )।

नैमित्तिकेतराः सप्तदश नित्या द्विपदा उपलेखसूत्रे ( ६।१-२ ) परिगण्यन्ते ।

इदमत्रावधेयम्—प्रतिसूक्तमृक्संख्यानिर्देशे कात्यायनेन ऋक्-सर्वानुक्रमण्यामिमाः १४० चत्वारिंशदुत्तरशतं द्विपदा ऋचः द्विपदात्वेनैव निर्दिष्टाः ।

मैक्समूलरीयऋक्संस्करणे द्विपदा ऋचः

त्रिसप्तत्यधिकाष्टादशशते ख्रीष्टाब्दे मैक्समूलरेणातिपरिश्रमेण संशोध्य ऋग्वेदस्य प्रथमं संस्करणं मुद्रापितम् । विद्यमानास्वपि कतिपयासु महतीषु भ्रान्तिषु तदत्युत्तमं संस्करणमित्यत्र नास्ति विवादावसरः ।

तत्र मैक्समूलरेण प्रथममण्डले पञ्चषष्टितमसूक्तादासप्ततितमं षष्टिर्नैमित्तिका द्विपदा ऋचश्चतुष्पदीकृत्य त्रिंशन्मुद्रिताः, प्रतिचतुष्पदमृचि च मन्त्रसंख्या प्रदत्ता । पञ्चमे मण्डले चतुर्विंशतितमस्य सूक्तस्य चतस्रो द्विपदाश्चतुष्पदीकृत्य मन्त्रद्वयं मुद्रितम्, परन्तु प्रथमस्यान्ते १।२ एका द्वे च द्वितीयस्यान्ते ३।४ तिस्रश्चतस्रश्च संख्या निवेशिताः । शिष्टेषु मण्डलेषु परिशिष्टाः षट्सप्ततिनैमित्तिका द्विपदा द्विपदात्वेनैव मुद्रिताः । एवं नैमित्तिकद्विपदानामृचां मुद्रणे त्रयो विकल्पाः कृताः । तत्र प्रथमः—आद्यमण्डलान्तर्गताः ( ६५-७० सूक्तानां ) षष्टिर्नैमित्तिका द्विपदाश्चतुष्पदीकृत्य मुद्रिताः, तथैव तासु मन्त्रसंख्याप्यलेखि । द्वितीयः—पञ्चममण्डलस्य ( २४ सूक्तस्य ) चतस्रो नैमित्तिकद्विपदाश्चतुष्पदीकृत्य मुद्रिताः संख्या तु प्रतिमन्त्रान्ते द्विपदानुसारिण्येव द्वे द्वे विधृता । तृतीयः—अवशिष्टाः षट्सप्ततिर्नैमित्तिकद्विपदा द्विपदा रूपेणैव मुद्रिता इति । इत्थमनुमिनुमो • यन्मैक्समूलरेण नैमित्तिकद्विपदानां स्वरूपमेव सम्यङ् नाज्ञायि । तदेवोक्तदोषदूषितं मैक्समूलरीयमृक्संस्करणं

प्रमाणीकृत्योपयुञ्जाना आधुनिका विद्वांस ऋक्परिगणने भ्रान्ता इत्यनुपदं वक्ष्यामः।

अनुवाकानुक्रमण्या ऋक्संख्या

शौनकेनानुवाकानुक्रमण्यामृक्संख्या द्विरलेखि। तत्र तावत् प्रतिवर्गान्तर्गतर्गनुसारं वर्गान्निर्दिशन्नाह—

एकर्च एकवर्गः (१) स्याद्देकश्च (१) नवकस्तथा।
द्वौ (२) वर्गौ तु द्वृचौ ज्ञेयौ त्र्यूनं तृचशतं (९७) स्मृतम्॥
चतुष्कं शतमेकं च चत्वारः सप्ततिस्तथा (१७४)।
पञ्चकानां सहस्रं तु द्वे च सप्तोत्तरे शते (१२०७)॥
त्रीणि शतानि षट्कानां चत्वारिंशत् षट् च (३४६) वर्गाः।
शतमूनविंशतिः (११९) सप्तकानां न्यूना षष्टिर् (५९) अष्टकानाम्॥

एवमृग्वेदे षडधिकद्विसहस्रं वर्गाः, सप्तदशाधिकचतुःशतोत्तरदशसहस्रमृचो भवन्ति। सैषा ऋक्संख्या शाकलचरणान्तर्गतायाः शैशिरीयसंहिताया बोध्या, "तान् पारणे शाकले शैशिरीये वदन्ति" इत्युपक्रम्य वर्गसंख्यानिर्देशात्। अत्र बालखिल्या ऋचो न संकलिताः, न चापि नैमित्तिका द्विपदा द्विपदात्वेन परिगणिताः। वर्तमानर्क्संहितायामपि बालखिल्यसूक्तानि विहाय वर्गाः (२००६) षडुत्तरद्विसहस्रमेव, परं मन्त्रसंख्या तु भिद्यते, तत्र मन्त्रा (१०४०२) द्व्यधिकचतुःशतोत्तरदशसहस्रसम्मिताः। एतत् पञ्चदशमन्त्राधिक्यं शाखाभेदकृतमित्यनुमिनुमः। न चानुवाकानुक्रमण्यां पञ्चदशमन्त्राधिक्यं दृष्ट्वा संज्ञानसूक्तस्थाः पञ्चदश मन्त्रा अत्र संकलिता इति प्रत्येतव्यम्, तेषां संकलने तत्सूक्तस्य चत्वारो वर्गा अपि संगृहीताः स्युः, तथा सति वर्गसंख्या षडधिकद्विसहस्रस्थाने दशाधिकद्विसहस्रं भवेत्। तदनन्तरं च—

"ऋचां दश सहस्राणि ऋचां पञ्च शतानि च।
ऋचामशीतिपादश्च पारणं संप्रकीर्तितम्॥ इति।

अनेन श्लोकेन १०५८० अशीत्यधिकपञ्चशतोत्तरदश सहस्रमृचः पादश्चैक इति पारणे ऋक्संख्यां दर्शयति। इयं संख्या पूर्वनिर्दिष्टसंख्यातो नितरां भिद्यते। तत्रैवं समन्वयः—अस्मिन् श्लोके पारणपदेन तत्रभवाञ्छौनकाचार्यः शाकलचरणान्तर्वर्तिसर्वशाखागतानामृचां परिमाणं प्रतिपादयति। तथा चोक्तं लौगाक्षिस्मृतौ—

ऋचां दश सहस्राणि ऋचां पञ्चशतानि च।
ऋचामशीतिः पादश्च पारायणविधौ खलु॥
पूर्वोक्तसंख्यायाश्चेत्तु सर्वशाखोक्तसूत्रगाः।
मन्त्राश्चैव मिलित्वैव कथनं चेति तत्पुनः॥ इति।

("वैदिकवाङ्मयका इतिहास" ग्रन्थे उद्धृताः, भाग १, पृ०१३४)

शौनकोक्तमन्त्यमृङ्मानं चरणव्यूह-परिशिष्टेऽपि निर्दिश्यते। तथाहि—

"ऋचां दश सहस्राणि ऋचां पञ्च शतानि च।
ऋचामशीतिपादश्चैतत् पारायणमुच्यते॥" (पृ० १४) इति

श्लोकमेनं विवृण्वन् महिदासः १०५८०, अशीत्यधिक-पञ्चशतोत्तरदशसहस्रमृचः पादश्चैक इत्यङ्मानमित्थमुपपादयाञ्चकार।

एतत् पारायणं बालखिल्यैर्विना संख्यातम्। बालखिल्यानि पारायणे न सन्ति। (पृष्ठ १७)                (क्रमशः)

---

## व्याकरण-विमर्शः

( ५ )

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

मुग्धबोधम्। पुंस्त्रू स्त्रेः [ सर्वनाम्नः ] ३२१।

से [ समासे ] स्थितस्य स्त्रेः पुंवत् स्यात् त्ये [ प्रत्यये ] च परे।

सुपद्मम्। सर्वनाम्नो वृत्तिमात्रे तसादौ च। ४।७।३१

एकार्थे वृत्तिमात्रे सर्वनाम्नः स्त्री पुंवत्। सर्वासां प्रियः सर्वप्रियः। अन्यतनयः। तस्या मुखं तन्मुखम्। एकक्षीरम्। एकस्या आगतम् एकरूप्यम् एकमयम्। एकत्वम्। भवदीयम्। तसादौ च। तस्यास्ततः। तस्यां तत्र। कस्यां कुत्र। भवतीप्रसादादित्यपीष्यते।

सुपद्ममकरन्दः। वृत्तिरेकार्थीभावः। तमेव विवृणोति—एकार्थ्य इति। "न मानिनी संसहतेऽन्यसङ्गमम्" इति भट्टिः [२।७]। "प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः" इत्यमरः। मात्रग्रहणादनुत्तरपदेऽपि स्यात्। पट्वी भार्या यस्य सः पटुभार्यः। भवदीयमिति। भवत्या इदम् भवदीयम्। भवतष्ठक्छसौ तो दश्चेये [५।३।२०] इति ईयस्तो दश्च। एवं सर्वामिच्छति। तामिच्छति सर्वकाम्यति। तत्काम्यति। एतां करोति एतत्करः। तसादौ चेति। तसादावपि सर्वनाम्नः स्त्री पुंवद् भवति। तसादेर्विभक्त्यादेशत्वाद् वृत्तित्वं नास्तीति पृथग् लक्षितम्। 'भवतीप्रसादात्' इत्यपीष्यत इति आर्षत्वाद् बाहुल्याद् वा। तथाच "एकोऽहम्भवतीसुतक्षयकरः" इति वेणीसंहारः।

दुर्घटवृत्तिः। कथम् 'एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽस्य:" इति वेणी [५।९], "भवतीप्रसादात्" इति चण्डी [४।१५], सर्वनाम्नो वृत्तिमात्रे पुंवदिति वचनात्। उच्यते। पुंवदिति योगविभागसाध्यमिदं क्वचिदेव। अत एव वृत्तौ न लिखितम्। एवे चानियोगे इति च प्रायिकम्।

[ सर्वनाम्नो वृत्तिमात्रे पुंवद् इति वचनमनित्यम्, एवे चानियोगे इति वार्त्तिकवत्। अत एव काशिकायामिदं न लिखितम्। यत्र पुंवद्भावः प्रामाणिकस्तत्र "स्त्रियाः पुंवत्—" ६।३।३४ इति

सूत्रस्य "स्त्रियाः पुंवद्" "भाषितपुंस्कादनूङ् ..." इतिसूत्रद्वय-कल्पनेनेष्टसिद्धिः सम्पद्येत ।]

शब्दकौस्तुभः । सलिङ्गः सम्बोधनव्यभिचारी च भवत्वर्थः । भवतेर्डवतुरिति व्युत्पादितोऽयम् । यद्यप्यस्मात् स्मायादयो न सम्भवन्ति, 'सर्वनाम्नस्तृतीया च" [ २।३।२७ ] इति 'निमित्तकारण-हेतुषु सर्वासां प्रायदर्शनम्' इत्यनेनैव गतार्थम्, तथापि

फिञ्द्रिमयटः पूर्वनिपातष्ठक्छसौ तथा ।
आत्वैकशेषव्यञ्विरहा अकच्च भवतः फलम् ॥ (क्रमशः)

---

## सुभाषितसागरः

[ पण्डित एस् पार्थसारथिः ]

आदौ चित्ते ततः काये सतां सम्पद्यते जरा ।
असतान्तु पुनः काये नैव चित्ते कदाचन ॥ ३१ ॥

आदौ तु मन्दमन्दानि मध्ये समरसानि च ।
अन्ते स्नेहायमानानि सङ्गतानि बुधैः सह ॥ ३२ ॥

आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न सम्पत्सु ।
अगुरोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य* ॥ ३३ ॥

आपद्गतः खलु महाशयचक्रवर्त्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ।

---

३१ । सुभाषितार्णवे "आदौ वित्ते ··· संलीयते जरा" इति पाठः ।

३२ । "आदौ सुमन्दमन्दानि" इति पाठान्तरम् । स्नेहमुद्वमन्तीत्यर्थे 'स्नेहायमीनानि' इति कविना प्रयुक्तम् ।

* Virtue is like precious odours, most fragrant when they are incensed and crushed, for prosperity does best discover vice, but adversity doth best discover virtue. BACON, *Adversity*.

कालागुरुर्दहनमध्यगतः समन्ता-

ल्लोकम्पृणं परिमलं प्रकटीकरोति ॥ ३४ ॥

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।

महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ ३५ ॥

आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म ।

स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ ३६ ॥

इक्षोरग्रात् क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।

तद्वत् सज्जनमैत्री विपरीतानां तु विपरीता ॥ ३७ ॥

इदं हि माहात्म्यविशेषसूचकं

वदन्ति चिह्नं महतां मनीषिणः ।

मनो यदेषां सुखदुःखसम्भवे

प्रयाति नो हर्षविषादवश्यताम् ॥ ३८ ॥

इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता ।

उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ३९ ॥

इहानेके सन्तः सततमुपकारिण्युपकृतिं

कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः ।

कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो

विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ ४० ॥

---

३४। लोकम्पृणमिति पाठो भामिनीविलासे, रसगङ्गाधरे पुनः प्रतिवस्तूमाप्रकरणे लोकोत्तरमिति पाठः। "लोकम्पृणैः परिमलैः परिपूरितस्य कश्मीरजस्य कटुतापि नितान्तरम्या" इत्यत्रापि पण्डितराजेन लोकम्पृणशब्दः प्रयुक्तः।

३५। शिशुपालवधे २।७९।

४०। विपरीतार्थप्रतिपादकः श्लोको नीतिशतके—

एते सत्पुरुषाः परार्थघटकाः स्वार्थान् परित्यज्य ये

सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।

तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये

ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥

उत्तमं सुचिरं नैव विपदोऽभिभवन्त्यलम् ।
राहुग्रसनसम्भूता क्षणं विच्छायता विधोः ॥ ४१ ॥
उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः ।
मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥ ४२ ॥
उत्तमा आत्मना ख्याताः पित्रा ख्याताश्च मध्यमाः ।
मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥ ४३ ॥
उत्तमे तु क्षणं कोपो मध्यमे घटिकाद्वयम् ।
अधमे स्यादहोरात्रं चण्डाले मरणान्तिकम् ॥ ४४ ॥
उत्साहसम्पन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदञ्च
लक्ष्मीः स्वयं याति निवासहेतोः ॥ ४५ ॥
उदधिरवधिरुर्व्यास्तं हनूमांस्ततार
निरवधि गगनं चेत् काण्डकोशे विलीनम् ।
इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः
स तु निरवधिरेकः सज्जनानां विवेकः ॥ ४६ ॥

---

४२ । कुसुमदेवस्य दृष्टान्तशतकगतोऽयं श्लोकः । द्वितीयार्धे 'क्षमः सोढुम्' इत्यनुषञ्जनीयम् । तच्च समुद्वेजकमेव सहृदयानाम् ।

४३ । "अधमा मातुलख्याताः श्वशुराच्चाधमाधमाः" इति पाठान्तरम् । अनुष्टुपः श्लोको यथा—

स्वनामा पुरुषो धन्यः पितृनाम्ना च मध्यमः ।
मातृनामाधमः प्रोक्तः श्यालनामाधमाधमः ॥

४५ घ । "लक्ष्मीः स्वयं वाञ्छति ( मार्गति ) वासहेतोः" इति पाठान्तरम् ।

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं गणयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमो विजयते ॥ ४७ ॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ ४८ ॥

उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ ४९ ॥

उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमलौकिकम् ।
सज्जनानां स्वभावोऽयं केनेन्दुः शीतलीकृतः ॥ ५० ॥

उपकर्तुमप्रकाशं क्षन्तुं न्यूनेष्वयाचितं दातुम् ।
अभिसन्धातुं च गुणः शतेषु केचिद्विजानन्ति ॥ ५१ ॥

---

४७ घ । असीमा—पा

४८ क । अयधातोरात्मनेपदित्वेऽप्युत्पूर्वस्यास्य परस्मैपदप्रयोगः कविप्रयोगबाहुल्यात् कथञ्चित् सोढव्यः । वैयाकरणैस्तु कुशं काशं वावलम्ब्यास्य साधुत्वं संसाध्यते ।

४८ ग । पर्वतानां शिखाग्रे । घ । स्खलति न खलु वाक्यं सज्जनानां कदाचित् इति बहुत्र पाठः । "न चलति विधिवश्या भाविनी कर्मरेखा" इत्यपि पाठः क्वचिदुपलभ्यते ।

४९ । अयं पाठः काव्यादर्शे । "उदेति सविता रक्तो रक्त एवास्तमेति च" इत्यपि पाठो बहुत्र दृश्यते ।

५० । प्रियं कर्तुं ...स्नेहमकृत्रिमम् ..शिशिरीकृतः—इति पाठान्तराणि ।

# हा धिगाचार्यस्यापि प्रमादः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

आचार्यः शिष्याननुशास्ति, वत्साः प्रातरुत्थायावश्यमेव देवता समाराधनीया ।

मधुसूदनः । आर्य ! यदि भवाननुमन्यते किमपि वक्तुमिच्छामि ।

आचार्यः । स्वच्छन्दमुच्यताम् ।

मधुसूदनः । अत्रभवता 'देवता' इत्युक्तम्, तत्तु न समीचीनम् । अवतारशब्दे रेफो वर्त्तते, देवा एव मर्त्यलोकमवतरन्त्यवताररूपेण, अत एव देवताशब्दोऽपि सरेफः प्रयोज्यः दुर्भाग्यतया पुनरस्माकमापामरं सर्वत्र नीरेफ एव देवताशब्दः सुप्रचलितः ।

आचार्यः । वत्स ! तव वचनेनाद्य मे ज्ञानचक्षुरुन्मीलितम् । मया खलु गतानुगतिकतयैतावन्तं कालं देवतेत्युच्यते स्म, इदानीं पुनर्विमृश्यैतस्य प्रामादिकत्वमेवावधारयामि । एतदपि श्रीमद्भिर्न विस्मर्तव्यं यद् भारतीयाः, विशेषतो ब्राह्मणाः, शब्दानां वार्थानां वा वेदानां वा तत्त्वं निर्णेतुं कदापि न प्रभवेयुः । ते हि पक्षपातदुष्टा इति । एतत् खलु सहस्रशः समुद्घोषितं मुग्धानलादिभिः पाश्चात्त्यैर्मनीषिभिः । को वा निपुणोऽपि नटवटुः स्वस्कन्धमारोढुं प्रभवेत्, को वा श्येनदृष्टिरपि दार्शनिकः स्वनेत्रगतं सिकताकणं प्रत्यक्षीकर्तुं प्रभवेत्, को वा सुदक्षोऽप्यौदरिकः स्वकफोणिगतं गुडमास्वादयितुं प्रभवेत् । अत एव प्राच्यानां भाषादीनां याथार्थ्यमवधारयितुम् अवबोधयितुं च पाश्चात्त्या एव प्रभवन्ति, तैश्चावतारशब्दानुरोधेन देवतारशब्दः प्रयुज्यते । अत एव देवतार-शब्दस्य शुद्धत्वे देवताशब्दस्य चाशुद्धत्वे नास्ति लेशतोऽपि संशयः । किञ्च,

नटेषु निपुणतमा star-शब्देन व्यपदिश्यन्ते, देवताश्च मनुष्येषु श्रेष्ठा एव, star-शब्दे च रेफोऽस्ति, अत एव देवता-शब्देऽप्यवश्यमेवान्ते रेफेण भवितव्यम्। किं वा कृतमवदातं कर्म ष्टारेण वा तारया वा नक्षत्रेण वा नटानां परिष्ठेन यद्मीभी रेफो लब्धव्यः, किं वा कृतं कुत्सितं कर्म देवतया यदेतया रेफो नाधिगन्तव्यः। अतः सर्वथा देवतार इत्येव शब्दः साधुः। इत ऊर्ध्वं सर्वैरेव श्रीमद्भिः अग्नि-र्देवतारः, वायुर्देवतारः, आदित्यो देवतारः, पिता प्रत्यक्षो देवतारः, माता साक्षाद् देवतारा इत्येवं रीत्या वक्तव्यम्। दृश्यतामाङ्लानां पत्रे स्टेट्सम्यान-समाख्येऽपि वर्तते—

The author is completely out of his depths when describing Indian festivals and quotes extensively from well-meaning missionaries. He makes the very common error of referring to Krishna as the eighth Avatar of Vishnu, which will infuriate the orthodox Hindu, because Krishna is "Devatar" (God) and not "Avatar" (incarnation) ; the eighth Avatar is Balaram. (Statesman, 25th December, 1949).

---

## शोधनम्

पृः ११ पं १ "प्रज्वलय्य" इति पाठ्यम्।

पृः २४ पं ६ " विभाऽवरि" इति पाठ्यम्।

पृः २८ पं ४-६ " क्षैप्र इति व्यपदिश्यते। दुह्-धातोः कर्तरि तृच्-प्रत्ययेन दुहितृ-शब्दो निष्पन्नः। "चितः" ( ६।१।१६३ ) इत्यन्तोदात्तत्वम्। "आमन्त्रितस्य च" ( ८।१।१९ ) इति पदात् परस्यापादादौ वर्तमानस्यामन्त्रितस्य निघातः।" इति पठनीयम्।

पृः १४७ पं १८-१९

"अनिट्। अत एव

वेतुस्यध्वे + विन्दध्वम् = वेतुस्यध्वम्।" इति पाठ्यम्।

# प्रातः

( बालकानां कृते )

[ निबन्धकः—एन् कविरत्नम् ]

रात्रिर्गता समायातं प्रातरेतन्नवच्छवि ।
राजति पूर्वदिग्भाले सिन्दूरबिन्दुवद् रविः ॥
स्वस्वनीडं परित्यज्य चारुकूजनशालिनः ।
नानादिशः प्रगच्छन्ति रमणीयाः पतत्रिणः ॥
पतन्तः पल्लवाग्रेषु शिशिरोदकबिन्दवः ।
मुक्ताफलसमा भान्ति भानोरालोकपाततः ॥
उपारण्येषु पुष्पाणि प्रस्फुटन्ति शनैः शनैः ।
तानि प्रबोधयन्तीव भ्रमराश्चारुगुञ्जनैः ॥
उदितो रविरेकत्रापरत्रास्तमितः शशी ।
कुमुदानि निमीलन्ति पद्मवृन्दं प्रकाशती ॥
रुवन्ति मधुरं हंसा मूका भवन्ति पेचकाः ।
धातुः सृष्टिरहो ! चित्रा सुखदुःखविमिश्रिता ॥

प्रफुल्लपुष्पै र्नवभास्करेण
कूजद्विहङ्गै र्मृदुमारुतेन ।
प्रातः कृतं येन सुचारुशोभं
नमामि भक्त्या जगदीश्वरं तम् ॥

# श्रीमद्भगवद्गीता

[ दत्तात्रेयनारायण-देशपाण्डे ]

अखिलं त्रिभुवनमिदं सर्वेश्वररूपम्। अनेन रूपेणानुभवप्रतीतः प्रियकरः परमात्मा साक्षान्नयनपथावतीर्णो भवेदिति परमार्थतः खलु मनीषा। देवाय तु तन्निवेदनं सप्रत्ययवायम्। गूढं हि विश्वरूपं प्रकटीक्रियतामिति कथं वा प्रष्टव्यम्। अर्जुनो मनसि करोति। यन्महता प्रियेणापि न कदापि पृष्टं तत्कथमेकपदे प्रष्टव्यम्। दृढपरिचितोऽप्यहं किं लक्ष्म्या अत्यधिकनिकटवर्ती। साऽपि भीताऽस्मात् प्रश्नात्। यद्यपि तया यथेष्टं सेवा कृता किं सा गरुडस्य तुलामरोहति। सुपर्ण एतद्गीतामपि न पृच्छति। किं सनकादिभ्योऽधिकं सान्निध्यं मम। अस्मिन् विषये तैरपि न चेष्टितम्। गोकुलस्थस्निग्धगोपगोपीवत् किमहं प्रियो भविष्यामि। तानपि श्रीकृष्णः केवलं बालीऽस्मीति दर्शयित्वा प्रतारयामास। अम्बरीषस्य कृते गर्भवासा अपि सोढाः। गूढं विश्वरूपं तु न कदापि दर्शितम्। आन्तरमिदं गुह्यं मया कथमेकपदे प्रष्टव्यम्। नो चेत् सुखं न भावि विश्वरूदर्शनं विना जीवनमपि न धारयितुं शक्यम्। अत्यल्पमधुना पृच्छामि। यथामति करोतु देवः। एवं भीत्यैवार्जुनो वक्तुमारभत। तस्य वचनं तथा चातुर्यपूर्णमासीद् यथा एकं द्वौ वा शब्दौ श्रुत्वा देवो निःशेषतया विश्वरूपं दर्शयिष्यति। वत्सदर्शनादेव प्रीत्या झटित्युत्तिष्ठति धेनुः। किं पुन स्तत्स्तनेषु वत्समुखसङ्गतेषु सा दुग्धप्रस्यन्दं न करिष्यति। पश्यत तावत्। पाण्डवानां नाम श्रुत्वैव यः श्रीकृष्णो वनेष्वपि तेषां रक्षणाय धावति सोऽर्जुनेन प्रष्टव्यं तदनन्तरं मया कथनीयमिति कथं सहिष्यते। स्वभावत एव श्रीकृष्णः स्नेहमूर्तिः। तस्मिन्नर्जुनरूपमुत्तेजकं द्रव्यं मिश्रितम्। एतादृशे सङ्गमे तस्य पार्थक्यमपि बहु मन्तव्यम्। तस्मादर्जुनवचनानुसारेण श्रीकृष्णो लीलया विश्वरूपं धारयिष्यति। अयमेव प्रथमः प्रसङ्गः। तं शृणुत।

ततः पार्थो देवमवदत्। हे कृपानिधे शब्दातीतं यद्ब्रह्म तन्मत्कृते युष्माभिरुक्तम्। पञ्चमहाभूतानां यदा ब्रह्मणि लयो भवति जीवो माया च लयं गच्छतस्तदा परमात्मा यद्रूपं दधाति तच्चरमं स्वरूपम्। कृपणवद् हृदये निहितं तत्स्वरूपं यद् वेदेनपि न प्रदर्शितं तद् हृदयं विदार्य युष्माभिराविष्कृतम्। यत्कृते शङ्करः परित्यज्यैश्वर्यं श्मशानवासमङ्गीचकार तदध्यात्मज्ञानं युष्माभि र्मह्यं सपद्येव दत्तम्। इदं चेद् वक्तव्यं तर्हि को गुणस्त्वदेकतायाःऽमोहरूपे पूर आमस्तकं निमग्नं मां विलोक्य यूयं मां समुद्धृतवन्तः। त्वद्दते जगत्यन्यद् वस्तु नैव विद्यते। अहो कर्मविपाकोऽस्माकम्! यतोऽहन्ताममतामोहेन त्वत्तो भिन्ना वयमित्यभिभाषामहे। जगत्येकोऽर्जुनोऽस्मीत्यभिमानं देहे वहामि। कौरवाश्च मे बान्धवा इति वदामि। तान्निहत्य पापमेव मामश्रयेदिति दुःस्वप्नमहमपश्यम्। तत्क्षणमेव जागरितोऽहं भवद्भिः। लक्ष्मीपते गन्धर्वनगरीवासं विहाय जलपिपासया मरीचिकामपिवम्।

दष्टोऽहं कार्पाससर्पेणेति भ्रान्त्याऽज्ञानेन पञ्चत्वं गच्छते मह्यं जीवदानं दत्त्वा श्रेयोऽधिगतं भवद्भिः। कूपे प्रतिबिम्बं पतितमित्यज्ञात्वाऽधः पतन्तं सिंहं धृत्वा यथा कश्चिद्रक्षति तथाऽज्ञानसागरे निमज्जन्तं मां भवान् रक्षितवान्। एकतां यान्तु नाम सप्त सागराः, प्रलयो नामापततु, पततु नामाकाशम्, गोत्रजैः सह तु युद्धस्य प्रसङ्गो ममोपरि मा पततु। ईदृश आसीन्मे निश्चयः। अहङ्कार-प्रणोदितोऽहं निमग्न आग्रहरूपे जले। शुभमासीद्भवतः सान्निध्यम्। अथवा कोऽन्योऽभविष्यन्मम समुद्धर्ता। परमार्थतः न कोऽप्यहं तथाप्यार्जुनोऽहमिति मिथ्यैवावागच्छम्। न केऽपि कौरवास्तथापि तेष्वाप्तत्वारोपः कृतः। ईदृशं मोहग्रस्तं मां भवान् रक्षितवान्। पुरा किल लाक्षागृह आसन्नदहना वयं त्वयोद्धृताः। तदा केवलं स्थूलदेह एव भीतः। अधुना मोहानलोऽयं सचैतन्यं मे देहं पीड़यति। दुराग्रहरूपेण हिरण्याक्षेण मे बुद्धिवसुन्धरा कक्षे निहिता।

मोहसमुद्रद्वारेण च सोऽन्तः प्रविष्टः ।

देव त्वत्प्रबोधसामर्थ्येन प्राप्तं मया चैतन्यम् । अयमासीत्ते द्वितीयो वराहावतारः । अपारां तवोपकृतिमेकया वाण्या कः नाम वर्णयेयम् । पञ्च प्राणाः खलु मह्यं समर्पिता स्त्वया । सफलमेतत्ते कृत्यम् । लब्धं त्वया ईदृशं यशः । अज्ञानं मे यतः समूलं नष्टम् । आनन्दसरोवरकमलसन्निभे तव नयने । तत्प्रसादास्पदीभूता अपि मोहग्रस्ता भवेयुरिति दीनं वचः किं वाच्यम् । वाडवानलः समुद्रजलेन न शाम्यति, तत्र मृगजलवृष्टिः किं करिष्यति । तथापि हे श्रीकृष्ण त्वत्कृपान्तर्गृहप्रविष्टोऽहं ब्रह्मरसमास्वादयामि । महाराज तेन मे मोहो नङ्क्ष्यतीत्यत्र किं चित्रम् । न केवलं नष्टो मे मोह उद्धारोऽपि मे संपन्न इति सशपथं कथयामि ।

( क्रमशः )

---

## पौषमासस्य पृच्छाया उत्तरम्

[ रघुनाथशर्मा अध्यापकः ग० सं० कालेज, काशी । ]

ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति । तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत, स वः श्रेष्ठ इति । ( छान्दोग्योपनिषत्५।१।७)अत्र शङ्करभाष्ये तद्व्याख्याने आनन्दगिरीये च प्रश्नत्रयं कृतम् । तत्राद्यः प्रश्नः । 'प्रजापतिं पितरं जनयितारं कञ्चिद् एत्य' इत्यत्र कञ्चिदितिपदं केनापि प्रक्षिप्तमिति । तत्रेदमभिधीयते । प्रजापतिद्वैविध्यं शास्त्रेषु दृश्यते । एकः परमः प्रजापतिर्विराट्संज्ञकोऽन्ये चावान्तर-

प्राजापतयः कश्यपादयः। तत्र श्रुतौ विनिगमनाविरहाद् विराजोऽपि ग्रहणं सम्भवति कश्यपादीनामन्यतमस्यापीति मत्वा भाष्ये कश्चिदिति पदं साभिप्रायमेव पठितं नतु प्रक्षिप्तम्। सम्भवति च वागाद्यधिष्ठातृदेवतानामग्न्यादीनामत्र प्राणपदेनोपात्तानां चेतनत्वेन विवादयोग्यतावतां कश्यपाद्यवान्तरप्रजापतिभ्योऽपि सम्भवेन पुत्रत्वम्।

द्वितीयः प्रश्नः। 'इवशब्दोऽवधारणार्थ इति आनन्दगिरीयव्याख्यानं चिन्त्यम्, अवधारणार्थकस्येव-शब्दस्य प्राचीनाभिधानकोशेष्वनुपलम्भात इति। तत्र चेदमभिधीयते। एवं तावत् 'सप्तद्वीपा वसुमती चत्वारो वेदाः साङ्गाः सरहस्याः' इत्यादि पस्पशाह्निकव्याकरणमहाभाष्योक्तरीत्या एतावतः शब्दप्रयोगविषयान् अननुनिशम्यानुपलम्भादिति कथनं साहसमात्रम्। किञ्चात्रेव शब्दोऽवधारणार्थ इत्यानन्दगिरेरभिप्रायः। सचेत्थमुपपद्यते। एवशब्द एवात्र श्रुतौ एकारस्थाने इकारं कृत्वा वर्णव्यत्ययेन प्रयुक्त इति। तथाच पठ्यते-सुप्तिङुपग्रहलिङ्गनराणां कालहलच् स्वरकर्तृ यङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन॥ इति। किञ्च काव्यकोशादिष्विव-शब्दस्यावधारणार्थाप्रसिद्धावपि निपातानामनेकार्थत्वेनावधारणार्थ एवात्राविरतत्वाद् गृह्यते। भाष्ये च 'पापिष्ठमिव पापिष्ठतरमिव, इतिपाठः समुपलभ्यमानोऽपि हेय एव। पापिष्ठमे , पापिष्ठतरमेव, इति तत्र युक्तः पाठः। नहि अत्र पापिष्ठसादृश्यं पापिष्ठतरसादृश्यं वा प्रतिपिपादयिषितं किन्तु पापिष्ठत्वं पापिष्ठतरत्वञ्च, तच्च सादृश्यप्रतिपादने नावगम्येत। तत्सादृश्यप्रतिपादने हि तद्भिन्नत्वावगम एव भवति, न तु तत्त्वावगमः, सादृश्यस्य भेदघटितत्वात। पापिष्ठमपि शरीरं यत्सम्पर्केणापापिष्ठं दृश्यते जीवनकाले, यद्वियोगाच्च पापिष्ठतरमेव दृश्येत स वः श्रेष्ठो यः स्वश्रैष्ठ्येनाश्रेष्ठस्य पापिष्ठस्यापि श्रैष्ठ्यसम्पादक इति श्रुतेरभिप्रायः। दृश्यते चानन्दाश्रममुद्रिते पुस्तके 'पापिष्ठमेवेति

भाष्ये पाठः घ- ड- ठ-ङ-पुस्तकेषु स्थितः, पापिष्ठतरमेवेति च-क-ग-ट- पुस्तकेषु स्थितः।

तृतीयः प्रश्नः। 'स्वरभङ्गोपायेन श्रेष्ठत्वमुक्तवान्' इति आनन्दगिरीयं चिन्त्यम्, स्वरभङ्गस्यात्रावकाशाभावादिति। अत्रेदमुच्यते। अत्र'यस्मिन् व उत्क्रान्ते' इत्यादिवाक्यस्य साधारणस्वरेणोच्चारणे प्रजापतिः प्राणानां श्रेष्ठं न जानाति अतो धर्मविशेषपुरस्कारेण परीक्ष्य श्रेष्ठत्वमवगच्छतेति वदतीति प्रतीयेत। तत्र चानृतं स्यात् प्रजापतेः सर्वज्ञत्वात्। साधारण-स्वरेणानुक्त्वा स्वरभङ्गेन विकृतस्वरेण मधुरेण अतिमृदुना च स्वरेणो-च्चारणे तु सर्वज्ञत्वेऽपि दुःखपरिजिहीर्षया धर्मविशेषपुरस्कारेण श्रेष्ठत्व-परीक्षायै नोदयतीति गम्यते। साधाणस्वरस्य भङ्गश्चातिमृदुना मधुरेण च स्वरेणोच्चारणम्। तीव्रस्वरेणोच्चारणे तु अवज्ञावद्योत्येत। दृश्यते च लोकेऽपि परस्परं श्रेष्ठत्वे विवदमानानां दुःखपरिजिहीर्षया मृदुमधुरस्वरेण वाक्यमुच्चार्य गुणहेतुकपरीक्षायां प्रवर्तनं स्वस्य ज्ञातृत्वेऽपि। विदन्ति च विवदमाना अपि तन्मृदुमधुरवाक्यप्रयोगेण, अयं जानन्नपि अस्माकं दुःखपरिजिहीर्षया स्पष्टं न वदतीति। इदमेवात्रत्यभाष्यानन्दगिरिवाक्या-नामैदंपर्यं प्रतीयते।

---

## पृच्छा

मान्याः सम्पादकमहाशयाः,

संस्कृतभाषाया विवृद्ध्यर्थं भवद्भिः सञ्चालितायां मञ्जूषायां व्याकरण-विषयकः शास्त्रार्थो बहुशः सन्दृश्यते। अतो ममैकां शङ्कां निर्णयार्थमत्र लिखितुमुत्सहे।

आधुनिकप्रणाल्या संस्कृतमधीयानानां बालानां कृते विरचित एकस्मिन् पुस्तके 'प्रकृतिषु...न कोऽपि अन्योन्यमद्विट्' इति प्रयोगो दृक्पथ-

मायाति। स च चिन्त्य इवाभाति। तथा हि। अन्योन्यशब्दोऽत्र परस्परकरणद्योतनाय प्रयुक्तः। तच्च कर्त्रनेकत्वे एव सम्भवति। यथा देवदत्तो यज्ञदत्तं द्वेष्टि, यज्ञदत्तोऽपि देवदत्तं द्वेष्टि। अतः शक्यत एव वक्तुं 'देवदत्तयज्ञदत्तौ अन्योऽन्यं द्विष्टः' इति। एवं सति यत्र अन्योन्यकरणमभिप्रेतं तत्र अनेकत्वविशिष्टस्यैव कर्तुः प्रयोगो न्याय्यः, यत्र तु कर्त्रेकत्वविवक्षा तत्र अन्योन्यशब्दो न प्रयोक्तव्य इत्यर्थादेवायाति। कर्त्रेकत्वविवक्षा च, अन्योन्यशब्दप्रयोगश्च, इति विप्रतिषिद्धमेतत्। एवं च प्रकृते प्रकृतयः अन्योन्यं न अद्विषुः इति प्रयोगः कार्यः। कर्तुर्वा एकत्वविवक्षायां प्रकृतिषु न कोऽपि कमपि अद्वेट् इत्यादिरूपः। न तु 'प्रकृतिषु न कोऽपि अन्योन्यमद्वेट्' इति।

वैयाकरणवर्येण भवता अत्र विषय निर्णयः कार्य इति प्रार्थ्यते

भवदीयः ग० बा० पलसुले

[अस्माकम् अभिमतम् आगामिन्यां संख्यायां प्रकाशयिष्यते। मञ्जूषा-सम्पादकः]

---

## PRIZE COMPETITION

*A prize of Rupees Ten is offered for the best Sanskrit rendering of the following beautiful hymn. Translations must reach the Editor on or before the 31st March. In the matter of the award, the Editor's decision must be regarded as final and legally binding. In the translation Siva or a synonym of Siva may be substituted for Jesu.*

Jesu, lover of my soul,
Let me to thy bosom fly,
While the nearer waters roll,
While the tempest still is high.

Hide me, O my Saviour, hide,
Till the storm of life be past;
Safe into the haven guide,
O receive my soul at last!

Other refuge have I none;
Hangs my helpless soul on Thee;
Leave; ah! leave me not alone,
Still support and comfort me!
All my trust on Thee is stayed,
All my help from Thee I bring;
Cover my defenceless head
With the shadow of thy wing.

Wilt Thou not regard my call?
Wilt Thou not accept my prayer?
Lo! I sink, I faint, I fall;
Lo! on Thee I cast my care.
Reach me out Thy gracious hand
While I of thy strength receive;
Hoping against hope, I stand;
Dying, and behold I live!

Thou, O Christ, art all I want,
More than all in Thee I find;
Raise the fallen, cheer the faint,
Heal the sick, and lead the blind.
Just and holy is Thy name,
I am all unrighteousness;
False and full of sin I am,
Thou art full of truth and grace.

Plenteous grace with Thee is found,
Grace to cover all my sin;
Let the healing streams abound,
Make and keep me pure within.
Thou of life the fountain art,
Freely let me take of Thee;
Spring Thou up within my heart,
Rise to all eternity.

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



---

Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

४र्थ-वर्ष संख्या ७

# मञ्जूषा

संस्कृतभाषामयी मासिक-पत्रिका

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Next Month.

Mahabhasya of Patanjali with Notes and Translation.
Shiva-nādī ( a work on Astrology ).

If you want to learn Sanskrit without tears, if you want to get acquainted with all that is best in Sanskrit literature and Indian culture, if you want to keep abreast of Indological research, you must subscribe to the MANJUSHA. The commentary on the Uṣā-hymns, the Gāthās with Sanskrit translation, the Mahābhāṣya with English translation and notes, ancient inscriptions, Notes and Queries, letters in Sanskrit, proverbs and maxims from the different Indian and European languages are some of the special features of the MANJUSHA.

Office : 81 Shyambazar Street, Calcutta—4
Annual Subscription : Rupees Six only
Foreign : Rupees Eight.

# MAHABHASHYA

with notes and English Translation begins in th
April number of the Manjusha.

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्
प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्‌लमासस्य चतुर्विंशे दिवसे
81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूष
प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भा
देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः
आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः
व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च
पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादा
पारसीकानां गाथाः, साङ्‌लानुवादं महाभाष्यम्, सभाष्यः
ऋग्वेदो मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न
प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा
प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि
प्रकाश्येत। चैत्रतः शोधनादीनां समीचीना व्यवस्था भविष्यति।

श्रीविश्वनाथ चट्टोपाध्यायः।

८१ श्यामबाजार ष्ट्रीट, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone : B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

March, 1950. — १८७१-शकीय चैत्रस्य ४र्थ-वर्षस्य ७म-संख्या — Vol. IV No. 7

## उपदेशरत्नानि

[ श्रीमद्भगवद्गीता १२ । १३-१९ ]

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥

सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥

अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥

यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः ॥

समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥

"Hating none in all creation,
Friend of all ; full of compassion,
Rid of 'I' and 'mine', forgiving,
Poised alike in pain and pleasure.

Perpetually content, at-One,
of steady purpose, Self-controlled,
His mind and will intent on ME.
My Devotee is dear to ME.

The man from whom the world shrinks not,
who from the world in turn shrinks not,
In whom joy, anger, fear, no more
run riot,—He is dear to ME.

Without ambition, skilful, pure,
at rest from worry, unconcerned,
Detached from all he undertakes,
My Devotee is dear to ME.

Who exults not and laments not,
who desires not and hates not.
'Good luck' and 'ill' renounced alike—
yet full of love—is dear to ME.

Equally fair to friend and foe,
equally poised in fame and shame,
Equally pleased with heat and cold
and joy and pain, impersonal,—

Praise, blame, in equal silence faced,
pleased come what may, without a 'home',
The man of Faith that wavers not,—
and full of Love—is dear to ME.

F. T. BROOKS.

---

# आभाणक-रत्नानि

१। One hand washeth another and both the ace.

( ला ) Manus manum lavat.

( ग्री ) Kheir kheira niptai, daktulos te daktulon.

पाणिः पाणिं प्रक्षालयति, अङ्गुलिश्चाङ्गुलिम्।

२। One hand will not wash the other for nothing.

न खलु विना वेतनं पाणिः पाणिं प्रक्षालयेत्।

३। He is free of fruit that wants an orchard.

यस्य फलोद्यानं नास्ति स फलवितरणे मुक्तहस्तो भवति।

[ बहुभिः खलु मुक्तकण्ठं रारट्यते—अहो ! मदीया चेत् सम्पदभविष्यत्, अहं दानादिषु मुक्तहस्तोऽभविष्यम्। तानुद्दिश्य प्रवृत्तोऽयमाभाणकः। ]

४। (ब) खल श्वाशुड़ीर बउ चतुर।

श्वश्र्वाः खलु खलायाः स्याद् वधूः सुचतुरा ध्रुवम्।

५। (ब) अति उच्च हइओ ना वातासे फेलिवे।
अति नीचु हयो ना ब्याङेओ डिङिवे॥
मात्युच्चकै भूः पवनो हि पातयेत्।
मा नीचकै भूः प्लवगोऽपि लङ्घयेत्॥

## सत्यं वद, धर्मं चर

आभीरपल्ल्यां यदुगोपो दुग्धे जलं संमिश्रयन् पुत्रं प्रोवाच, अपि पश्यसि वत्स किं मया क्रियते इति। पुत्रः प्रत्युवाच, "अथ किम्, तात! त्वं तावद्दुग्धे जलं निषिञ्चसि" इति। "नहि नहि, न खलु लेशतोऽप्यहमेवं करोमि, न खलु स्वप्नेऽप्यहमेवं विदधामि। अहं तावज्जले दुग्धं निषिञ्चामि। एवञ्च यदि कोऽपि त्वां पृच्छेत् पिता ते दुग्धे जलं ददाति वा इति, तं ब्रूहि नहीति। वत्स, सदैव सत्यपरो भव। प्रतारणं तावत् पापमेव, मिथ्याकथनं पुनः पापात् पापीयः।"

---

## नमो भवते

धूर्तचन्द्रशिरोमणिः सुप्रथितस्य व्यवहाराजीवस्यावासं गत्वावदत्, 'एवमिवं संवृत्तम्, मया धर्माधिकरणेऽभियुज्यते चेन्मे जयस्य सम्भावना वर्तते वा' इति। व्यवहाराजीवेनोक्तम्, नियतं भवाञ्जेष्यति, अत्र संशयलेशोऽपि नास्ति। इति। शिरोमणिनोक्तम्, तर्हि नमो भवते, साधयाम्यहमिदानीम् इति। व्यवहाराजीवः परं विस्मितः प्राह—किमिति गन्तुमिच्छति भवान्। उक्तमेव मया, यथा भवता वर्णितं तथा भवतो विजयो ध्रुव एव। इति। शिरोमणिनोक्तम्, अत एव मयाभियोक्तुं नेष्यते। प्रतिपक्षस्य पक्षो भवतां पुरस्तादुपस्थापितः। तस्य चेद् ध्रुवो विजयः, अलं ममाभियोगेन। नमो भवते। साधयामीदानीम्। इति।

---

# पत्रं वा पत्त्रं वा

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

प्रियवाचकमहाभागाः, शब्दब्रह्मणो विवर्ताः प्रतिमुहूर्तमेवास्माकं प्रतीतिपथमवतरन्ति, किन्तु कति वास्मासु श्रवणमनन-निदिध्यासन-पूर्वकं तत्त्वं साक्षात्कुर्वन्ति। आस्तां तावद् वार्त्ता ब्रह्मणः, केवल-शब्दस्यैव दशान्तराणि कियद्भिरनुध्यायन्ते। दृश्यतां तावत् पत्त्र-शब्दः। पत्लृ गतौ इति धातोः "सर्वधातुभ्यः ष्ट्रन्" [ उ० ४।१०९ ] इति सूत्रेण ष्ट्रनि द्वितकारकः पत्त्रशब्दो निष्पन्नः, पाश्चात्त्यशब्दस्येवा-स्याप्येकतकारकं रूपं बहुशः परिदृश्यमानमपि प्रामादिकमेव। पाश्चात्त्यानां मतेन 'पत उड्डयने' इत्यस्मात् पत्त्रशब्दः सम्भूतः। ग्रीक्-भाषायां 'पेतोमाइ' ( सं—पतामि )-शब्दस्यार्थः उत्पतामि, एतस्मादेव निष्पन्नस्य पित्तो-शब्दस्यार्थः पतनमिति। लातिन-भाषायामपि पत् ( petere ) धातोरर्थः—गमनम्, विचरणम्, उत्-पतनम् अन्वेषणमिति। अत एव पतत्यनेन इति पत्त्रम्। येन विहगादय उड्डयन्ते तदेव पत्त्रम्, अत एव पक्षिणां पक्ष एवास्य प्राथ-मिकोऽर्थः। ग्रीक 'प्तेरोन्, ( pteron ), लातिन् 'पेन्ना' ( penna ) प्राचीनलातिन् 'पेस्ना' ( मूलतः—पेत्ना)—एतेऽप्यस्य ज्ञातयोऽनेन समानार्थकाः। जार्मान Feder, आङ्ल feather इत्येतावपि सनाभी, अर्थः पुनः पिच्छम्।

पक्षिणो यथा पिच्छमाच्छादकम्, पादपस्य तथा पर्णम्, अत एव पत्त्र-शब्दस्य पर्णार्थोऽपि युज्यत एव। क्रमेण च पतति उड्डयते गच्छत्यनेन इति पत्त्रशब्दोऽश्वादिवाहनपरः सञ्जातः।* 'पत्त्र-

* निरुक्ते षड्विंशतावश्वनामसु पतङ्ग-शब्दः पठितः।

पूर्वादत्र्' 'पत्त्राध्वर्युपरिषदश्च' [ ४।३।१२२-१२३ ] इत्यादिषु पाणिनि-सूत्रेष्वप्ययमेवार्थः ।

पर्णार्थकः पत्त्रशब्दः क्रमेण लेखनसाधनपर्णेऽपि प्रयुज्यते स्म, ततश्च लेखनाधारो यत् किमपि पत्त्रशब्देनोच्यते स्म, अत एव कागदादीनामपि पर्णशब्दवाच्यत्वम् । ततश्च सन्देशादिवाहकं कागदादिकमपि पत्त्रशब्दवाच्यं सञ्जातम् ।

अत एव चामरकोषे सन्दृश्यते—

गरुत्-पक्ष-च्छदाः पत्त्रं पतत्रं च तनूरुहम् [ २।५।३६ ]

पत्त्रं पलाशं छदनं दलं पर्णं छदः पुमान् [ २।४।१४ ]

सर्वं स्याद्वाहनं यानं युग्यं पत्त्रं च धोरणम् [२।८।५८ ]

इति। अत एव विश्वः—'पत्त्रं तु वाहने याने पक्षे च शर-पक्षिणोः' इति ।

ततश्च असयादीनां पत्त्राकारं फलकमपि पत्त्रशब्देन व्यपदिश्यते स्म ।

पतधातोरेव ष्ट्रन्-प्रत्यये प्रकृतिप्रत्यययोर्मध्येऽकारागमे पतत्र-शब्दो निष्पन्नः । अमत्र-यजत्र-कृन्तत्र-गायत्र-पतत्र-वधत्र-वरत्रास्वप्येवमेव संयोगस्वरोऽकारः सन्दृश्यते। खनित्र-चरित्र-जनित्र-पवित्र-भरित्र-भवित्र-सनित्रेषु संयोगस्वर इकारः, तरुत्रे चोकारः ।

तृप्रत्ययादकारप्रत्ययेन त्र-प्रत्ययो निष्पन्न इति भाषातत्त्वविद आतिष्ठन्ते । प्रायेण च करणाधिकरणयोरेव प्रत्ययोऽयं विधीयते।

पाश्चात्त्यादिप्रदेशेषु हंसादिपिच्छं लेखनीत्वेनोपायुज्यते शार्मण्यभाषायां Feder-शब्दस्यार्थः लेखनी सम्पन्नः ।

पक्षार्थकः पर्ण-शब्दो मूलतः स्पर्णमेव। तथा च लिथुयेनीयानां भाषायामाद्युदात्तस्य स्पर्णशब्दस्यार्थः पक्ष इति । संस्कृत इवाङ्लादि

भाषास्वाद्यसकारस्य लोपः समजनि। तथाच शार्मण्यभाषायां Farn, आङ्ल-भाषायां च fern उपलभ्यते।

यत्तु पाश्चात्यैः कैश्चित् ग्रीक्-pteron-आङ्ल-feather-प्रभृतीनामनुरोधेनैकतकारकः पत्रशब्दः स्वीक्रियते तन्न समीचीनतया प्रतिभाति, तेषां र-प्रत्ययान्त-पतर-शब्दसगोत्रत्वात्। रप्रत्ययान्ताः शब्दा अन्तोदात्ताः, ष्ट्रन्-प्रत्ययान्ताश्चाद्युदात्ताः, पत्त्रशब्दश्चाद्युदात्तः, पतरशब्दश्चान्तोदात्तः। ग्रीक् pteron-शब्दस्य प्रथमस्वरस्य लोपोऽप्यस्यानाद्युदात्तत्वं संसूचयति। देववाण्यामिव ग्रीक्भाषायामपि tro-प्रत्ययान्ताः शब्दा आद्युदात्ता एव। अतो लेशतोऽर्थस्य भेदेऽपि संस्कृतपतर-शब्दस्य feather--शब्द-सगर्भ्यत्वं स्वीकरणीयमिति समीचीनमुत्पश्यामः। तत्र ग्रिम्-सूत्रेण पकारस्य फकारः, तकारस्य च थकारः।

---

# अलोभः

"सर्वं स्वं ब्राह्मणस्येदं यत् किञ्चिज्जगतीगतम्।
श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति।
आनृशंस्याद् ब्राह्मणस्य भुञ्जते हीतरे जनाः॥　　मनुसंहिता १।

पुरा किल कुबेरवैभवः क्रीसास् नरपतिः पारसीकानां सम्राजा शूरसेनेन बन्दिग्राहं गृहीतः। स चैकदा सम्राजः दानशौण्डत्वं समीक्ष्यावदत्, यदि त्वमेवं सर्वस्वमर्थिसात् करोषि तर्हि नचिरादेव दरिद्रभावं गमिष्यसीति। सम्राजोक्तम्,अथ चेन्मया सिंहासनाधि-

रोहणत आरभ्य सर्वमेवारक्षिष्यत, न काकिणीमात्रमप्यदास्यत, तर्हि कियान् मे विभवः समभविष्यदिति तर्कयसीति।

कृशाश्वेनोक्तं परार्धमिति।

सम्राजोक्तम्, भवतु। अहं तावन्मित्राणां प्रजानां च सविधे "कस्मैचित् कार्याय द्रविणेन मे प्रयोजनम्" इत्युक्त्वा दूतं विसर्जयिष्यामि, तस्य च फलं त्वं प्रत्यक्षीकरिष्यसि इति।

अथ दूते राजाज्ञां परिपालितवति सम्राट् सम्प्रेषितद्रविणराशिसन्दर्शनाय कृशाश्वं कोषागारमनयत्। तत्र च पारेपरार्द्धं स्वापतेयजातं समवलोक्य परं विस्मयमुपागच्छत् कृशाश्वः। सम्राजा चोक्तम्—अहञ्चेद् द्रविणजातं राशीकृत्यारक्षिष्यं तर्हि प्रजा मामद्वेक्ष्यन्, अभ्यद्रोक्ष्यंश्च। इदानीं पुनरहं सर्वासां तासां प्रेमविश्वासभूमिः। बहुभिश्च वर्षैर्यावत् सुवर्णमहं सञ्चेतुं प्राभविष्यम्, निमेषमात्रेणेदानीं ततोऽप्यधिकं लब्धुं समर्थोऽस्मि इति।

———

## श्रीहर्षः

[ पण्डितप्रवरः बाबुया-मिश्र-ज्योतिषाचार्य्यः ]

नैषधीयचरित-महाकाव्यादिरचयिता विश्ववरेण्यः श्रीमान् श्रीहर्षनामा कविः कस्मिन् समये किंनामधेयं जनपदं स्वजन्मनाऽलङ्कृतवानिति बहोः कालात् पण्डित-मण्डलीषु विवादास्पदविषयोऽस्त्येव साम्प्रतमपि।

श्रीहर्षकवेर्देशकालसम्बन्धे तावन्ति सयुक्तिक-विवेचनानि बहुभिर्विद्वद्भिर्विरचितानि; अधुना तत्सम्बन्धे यत्किमपि विवेचनं निरूपणं वा क्रियते तन्नैव नूतनगवेषणात्मकं सफलस्वीकृतियोग्यं प्रामाणिकं न वा निस्सन्दिग्धं सत्यभूतमिति वक्तुं शक्यते। तदिह

नैषधीयचरितमहाकाव्यमधिकृत्य प्राचीनविद्वद्भिर्लिखिताः कतिचित् प्रमाणोक्तीरादाय स्वमतप्रदर्शनमेव विधीयते। नैषधीयचरितरचयितुः श्रीहर्षस्य तत्कृतनैषधीयचरितमहाकाव्यस्य च सम्बन्धे सुरुचिरामेकां जनश्रुतिमैतिहासिकघटनां वा श्रीमान् महाकविर्विद्यापतिः स्वीये 'पुरुषपरीक्षा'-नाम्नि नीतिग्रन्थे यथा वर्णयति तदतीव कौतूहलजनकं रोचकञ्चेति तदुक्तैरेव श्रूयताम्—

"अथ मेधाविकथा।

सकृदुक्तं च गृह्णाति न च विस्मरति श्रुतम्।
धीर्धारणावती यस्य मेधावी स इहोच्यते॥

बभूव गौडदेशे श्रीहर्षनामा कविपण्डितः। स च नलचरिताभिधानं काव्यं कृत्वा परामृष्टवान्—

रसवन्मानसग्राहि गुणालङ्कारसंयुतम्।
कवीनां यशसे काव्यं हास्यायान्यच्च जायते॥

अपरञ्च, अग्नौ परीक्ष्यते स्वर्णं काव्यं सदसि तद्विदः।

किं कवेस्तेन काव्येन सद्भिर्यन्नानुमन्यते॥

ततस्तत्काव्यं नीत्वा वाराणसीं जगाम। तत्र च कोकनामानं पण्डितं श्रावयामास। कोकस्तु संसारसुखविरक्तः प्रतिक्षणं समाधौ तिष्ठति। यदा च मध्याह्नसमये मणिकर्णिकां प्रति स्नानार्थी गच्छति तदा गच्छन्नेवाकर्णयति। श्रीहर्षस्तमनुगच्छन् पठति प्रत्यहं किमपि, उत्तरं पुनर्न प्राप्नोति। एकदा श्रीहर्षेणोक्तम्, आर्य, महाकाव्ये कृतश्रमोऽहं तत्परीक्षार्थं त्वामुद्दिश्य विदग्धबुद्ध्या स्वदेशीयवात्सल्येन महतो दूरादागतोऽस्मि। पथि गच्छतो भवतः पुरस्तात् सदसद्विवेकप्रत्याशया पठामि। भवान् न निन्दति न चाभिनन्दति, तन्मन्ये कर्णमेव नार्पयति भवान्।" कोक उवाच, आः कथमहं कर्णं नार्पयामि, किन्तु सम्पूर्णं श्रुत्वा शब्दार्थयोरूहापोहेन सन्दर्भशुद्धिं ज्ञात्वा

विशेषं वक्ष्यामि, अनया वासनया न किमपि वच्मि। काव्यं तु मया कर्णे कृतं मनसि धारितं चेति यदि भवान्न प्रत्येति तदा शृणोतु। ततो मासमाकर्णितानि सर्वाणि पद्यानि पपाठ। तदाकर्ण्य साश्चर्यः सानन्दश्च श्रीहर्षस्तत्पादयोः पपात। श्रीहर्ष उवाच, भोः कोक-पण्डित, परितुष्टोऽस्मि तव मेधामहत्त्वेन। कोकस्तु तस्य काव्यस्य गुणान् प्रस्तुत्य दोषान् समाधाय विशेषानुल्लप्य च श्रीहर्षकविराजं हृष्टमनसं कृत्वा गृहं प्रस्थापयामास। तथाहि,

वस्तुदोषमनादृत्य गुणांश्चिन्वन्ति तद्विदः।
अपि कण्टकिनः पुष्पे गन्धं जिघ्रति षट्पदः॥

इति मेधाविकथा।"

अथात्र विद्यापतेः पुरुषपरीक्षायामेव नृत्यविद्य-कथायाम् "बभूव गौडदेशे लक्ष्मणसेनो नाम राजा, तस्योमापतिर्नाम मन्त्री गन्धर्वनामा नटश्चासीत्" इति, पुनश्च तत्रैव दक्षिणनायक-कथायाम् "बभूव गौडदेशे लक्ष्मणसेनो नाम राजा, तस्य रत्नप्रभा नाम महिषी तदित-राश्च भोगिन्यः कतिचिद् बभूवुः।" इत्यादिलेखेन लक्ष्मणसेनो नाम राजा श्रीहर्षो नाम कविश्चैकस्मिन्नेव गौडदेशे आस्तामित्यत्र नास्ति कोऽपि विवादावसरः। परमत्र तदानीन्तनो गौडदेशः सम्प्रति किंनामधेयः कस्मिन् प्रदेशे वा वर्त्तत इति निर्धारणे न मालवा-(माड़वार)-प्रसिद्ध-गौडब्राह्मणाधिष्ठितदेशो न वा तत्कालीनानां कियतामपि राज्ञां पञ्चगौडेश्वरत्वेन प्रसिद्धिः—

वङ्गदेशं समाश्रित्य भुवनेशान्तगं शिवे।
गौडदेशः समाख्यातः सर्वविद्याविशारदः॥

इति शक्तिसङ्गमोक्तप्रमाणतोऽपि यावद्विन्ध्योत्तरसीमाकः पञ्चगौड ब्राह्मणाधिष्ठितदेशो मिथिलोत्कलादिसंवलितो भवितुमर्हति।

पुरुषपरीक्षायामेव युद्धवीरकथायाम् "आसीन्मिथिलायां कर्णाटकुलसम्भवस्य नान्यदेवनाम्नो राज्ञः पुत्रो मन्त्रनामधेयः।" पुनस्तत्रैवालसकथायाम् "आसीन्मिथिलायां वीरेश्वरो नाम मन्त्री। स च स्वभावाद्दानशीलः कारुणिकश्च, सर्वेभ्यो दुर्गतेभ्योऽनाथेभ्यश्च प्रत्यहमिच्छाभोजनं दापयति।"

पुनश्च तत्रैव सुबुद्धिकथायाम् "आसीन्मिथिलायां कर्णाटकुलसम्भवो हरिसिंहदेवो नाम राजा, तस्य साङ्ख्यसिद्धान्तपरगामी दण्डनीतिकुशलो गणेश्वरनामधेयो मन्त्री" इत्याद्युक्तत्वात् उत्कलदेशस्यापि तन्नाम्नैव पृथगुपादानाद् गौडदेश इत्युक्त्या नैव मिथिला न चोत्कलदेशः सम्भाव्यते। गौडेश्वरस्य लक्ष्मणसेनदेवस्य लक्ष्मणावतीनाम्नी राजधानी च गौडदेश एवासीत् इति। तथा दक्षिणनायकत्वेनोदाहृतस्य तस्य राज्ञस्तत्रत्यं पुरावृत्तं च विद्वद्विवेचनयोग्यं विद्यापतेः पुरुषपरीक्षाग्रन्थे दक्षिणनायककथायां वर्त्तते। तथाच तत्सारांश ईदृशः—एकदा लक्ष्मणसेनस्य राज्ञः काशीश्वरेण समं सन्धौ विघटिते विग्रहावसरो जातः, ततस्तेनाश्वपतिना काशीश्वरेण समयान्तरेऽभियुक्तः स्वकीयानुकूलं वर्षासमयं प्राप्य सज्जितनौकाबलः काशीं प्रति प्रयाणमुपचक्रमे। तत्र प्रयाणावसरे तेन सार्कं गन्तुमुद्यतां रत्नप्रभां स्वमहिषीं सुखरात्रिपर्वण्यागमिष्याम्येवेति कृतप्रतिज्ञः प्रतिषिध्य चतुरङ्गबलसहितः काशीं प्रति जगाम। तत्र च काश्यां काशीश्वरदुर्गस्य चतुर्मेखलं नौभिरवरुध्य देवे व ति विग्रहव्यसनेन समयं निनाय। युद्धजयाशाव्यासङ्गेन महादेवीव्यवस्थां विसस्मार। समुपस्थिते च सुखरात्रिपर्वणि सायंकाले पौरैः सैनिकैश्च क्रियमाणमुल्काभ्रमणादि दृष्ट्वा, आः सुखरात्रिपर्वाद्यैव, तदहं व्यवस्थातः परिच्युतोऽस्मि। देव्या रत्नप्रभया अग्निं प्रविश्य मर्त्तव्यम्, तदहं किं करवाणि इति मन्त्रिषु पृष्टेषु मन्त्रिण ऊचुः, राजशक्तेः किमसाध्यं

प्रचुरदानपरितुष्टैर्नाविकैरस्यामेव रात्रौ नीतैर्नौव्या लक्ष्मणापुरीं प्रति इति। तरुणवाहकसहस्रलज्जितवहित्रेण तस्या एव रात्रेश्चतुर्थयामे लक्ष्मणावतीं प्रतिजगाम, वह्निप्रवेशोद्यतायाश्च प्रियाया मरणं निवर्त्तयामास।"

इति कथया च गङ्गामार्गेण गमनं नौकाबलप्राचुर्यं चेति गौडेश्वरस्य वङ्गदेशीयत्वं साधयति, गौडेश्वरराजधान्या लक्ष्मणावतीपुर्याः काश्याश्च दूरत्वं नातिमहदिति प्रमापयति।

गौडेश्वरपदवीविभूषितो लक्ष्मणसेनदेवश्चायं चन्द्रवंशीयः क्षत्रियो राजा विजयसेनसूनोर्मिथिलामहीमहेन्द्रनिःशङ्कशङ्करमहाराजाधिराजबल्लालसेनदेवस्य तनय इति बहुत्रैवाद्भुतसागरादिग्रन्थे लिखितमस्ति। अथ च बल्लालसेनदेवो लक्ष्मणसेनदेवश्चेति द्वावेव राजानौ तदानीन्तनपञ्चगौडात्मकदेशानां मिथिलावङ्गोत्कलादीनां शासकौ ख्यातनाम्नां बहूनां मनीषिणाम् आश्रयरूपौ आदर्शक्षत्रियराजयच्छासनमकुरुताम्। पितापुत्रयोरेतयोः कृतत्वेन प्रसिद्धा अनेके ग्रन्था उपलभ्यन्ते। ते च कया रीत्या रचिता इति स्वयमेव बल्लालसेनो वर्णयति—

शुश्रूषापरितोषितैरविरतं सम्भूय भूदैवतै-
र्दत्तामोघवरप्रसादविशदध्वान्तस्खलत्संशयः।
श्रीबल्लालनरेश्वरो विरचयत्येतं गुरोः शिक्षया
स्वप्रज्ञावधि दानसागरमयं प्रज्ञावतां श्रेयसे॥

लक्ष्मणसेनस्य राजसभायां जयदेवो गोवर्धनाचार्य उमापतिधरः शरणो धोयी चेति पञ्चापि महाकवयः पञ्चरत्नत्वेन विख्याता आसन्। एषां पञ्चरत्नत्वेन ख्यातानां कवीनां वैशिष्ट्यं जयदेव एवमाह—

वाचः पल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः।

शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धन-
स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोयी कविक्ष्मापतिः ॥

अयं श्लोको बल्लालसेनदेवेनैव रचित इत्यपि जनश्रुतिर्वरीवर्ति। स्वाश्रयभूतं लक्ष्मणसेनं राजानं गोवर्धनाचार्य आर्यासप्तशत्यामेवं स्तौति—

"सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च।
सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥"

अथ राज्ञो बल्लालसेनदेवस्य लक्ष्मणसेनदेवस्य च सम्बन्धे ताभ्यां प्रणीतेऽद्भुतसागरनाम्नि ग्रन्थे अनेके ऐतिहासिकविषया वर्त्तन्ते यथा—

भुजवसुदश १०८२ मितशाके श्रीमद्बल्लालसेनराज्यादौ।
वर्षैकषष्टिभोगो मुनिभिर्निहितो विशाखायाम् ॥

अथ लक्ष्मणसेनराज्यारम्भशकाब्दात्पर्वेश्वरगणनम्—

खनवदशोन १०९० शकाङ्का द्विगुणाः सकृता खावुदग्गोले।
सशरा याम्ये ज्ञेयाः पर्वेशाः सप्तभिस्तष्टाः ॥

बृहस्पत्यावर्तेऽपि ग्रन्थारम्भशकाब्दात् षष्ट्यब्दयुगगणनं कृतम्। रव्याद्भुतावर्त्तेऽयनविषये—

सकलवसुधाधिनाथ-श्रीमद्बल्लालसेनदेवेन।
अयनद्वयं यथावत् परीक्ष्य संलिख्यते सवितुः ॥
इदानीं दृष्टिसंवादादयनं दक्षिणं रवेः।
भवेत् पुनर्वसोरादौ विश्वादावुत्तरायणम् ॥

इत्यनेनायनांशज्ञानं कृतम्। एवमत्र दशांशा अयनांशाः समायान्ति। ग्रन्थरचनासम्बन्ध एवमुक्तं प्रस्तावनायाम्—

शाके नवाष्टखेन्द्वाख्य १०८९ आरेभेऽद्भुतसागरम्।
गौडेन्द्रकुञ्जरालानस्तम्भबाहुर्महीपतिः॥

ग्रन्थेऽस्मिन्नसमाप्त एव तनये साम्राज्यलक्ष्मीं मुदा
दीक्षापर्वणि दक्षिणे निजकृते निष्पत्तिमस्थापयत् ।
नानादानतिलाम्बुसंवलनिभं सूर्यात्मजासङ्गमं
गङ्गायां विरचय्य निर्जरपुरं भार्यानुयातो गतः ॥

श्रीमल्लक्ष्मणसेनभूपतिरतिश्लाघ्यो यदुद्योगतो
निष्पन्नोऽद्भुतसागरः कृतिरसौ बल्लालभूमीभुजः ।
ख्यातः केवलमर्णवः सगरजस्तातस्य तत्पूरण-
प्रावीण्येन भगीरथेन भुवनेष्वद्यापि विद्योतते ॥

इत्याद्युक्त्वा नवत्यधिकसहस्रमिते शकवर्षे लक्ष्मणसेनदेवो राजसिंहासनमलञ्चकार । तथा तस्मिन्नेव वर्षे सकलविद्वज्जनमनोमोदनमभिधानानुरूपमद्भुतसागराख्यं ग्रन्थमसमाप्यैव सुरपुरं प्रयातस्य स्वपितुर्बल्लालसेनस्य बाणकवेः पुत्र इव कादम्बरीं तमद्भुतसागरं परिपूर्णमकरोत् ।

अथात्र श्रीहर्षकविरेतादृशं विद्वांसमपि विद्वद्वृन्दावलम्बभूतं स्वदेशनरपतिं विहाय कान्यकुब्जेश्वरस्याश्रित आसीद् यत्रत्यं स्वगौरवमेवं वर्णयति स्म—

ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वराद्
यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।
यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

एतत् पञ्चरत्नेषु तद्गणनाहेतोरन्येन वा केनचित् कारणेन भवितुमर्हति । परमत्र कान्यकुब्जदेशात् स्वदेशागमनसमये तत्सममानसौजन्यादिकमवलोक्य विविधविद्वच्छिरोऽलङ्कारसंस्तुतं स्वदेशनरपतिं स्वसम्बन्धिनामनेकेषां शास्त्रव्यसनिनां मनीषिणां तदन्यान्यराजकार्य-

कारिणां सभासदां चाश्रयभूतं लक्ष्मणसेनदेवं राजानमस्तुत्वा स्थातुं न शशाकेति नैषधीयचरितमहाकाव्यस्य सप्तमसर्गान्ते—

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।
गौडोर्वीशकुलप्रशस्तिभणितिभ्रातर्ययं तन्महा-
काव्ये चारुणि नैषधीयचरिते सर्गोऽगमत् सप्तमः॥

इत्युक्त्वा गौडेश्वरान्वये प्रशंसोक्तेर्निजनिर्मितनैषधीयचरितकाव्योक्तश्च—

ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु।
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥

इत्यादिलक्षणायाः सादृश्यप्रतिपादनेन गौडेश्वरमेव निरुपमं प्रशंसतीति प्रतीयते। वस्तुतः स्वस्मिन् गौडदेश एव नैषधीयचरितं रचयितुं प्रवृत्तस्तस्मिन्नसम्पूर्ण एव कान्यकुब्जदेशं गत्वा तत्परिपूर्णमकरोदिति प्रथमं सप्तमसर्गान्ते स्वदेशनरपतेः प्रशंसामन्ते च कान्यकुब्जेश्वरतः प्राप्तमात्मगौरवं प्रतिपादयतीति प्रतीयते।

अथ च नैषधीयचरिते चतुर्दशसर्गे दमयन्त्या नलकण्ठे वरमालार्पणसमये—

कापि प्रमोदास्फुटनिर्जिहानवर्णैव या मङ्गलगीतिरासाम्।
सैवाननेभ्यः सुरसुन्दरीणामुच्चैरुलूलुध्वनिरुच्चचार॥

अस्य श्लोकस्य व्याख्यायां नारायणेन टीकाकृता—"विवाहाद्युत्सवे स्त्रीणां धवलादिमङ्गलगीतिविशेषो 'गौडदेशे' उलूलुः इत्युच्यते, सोऽप्यव्यक्तवर्ण एवोच्चार्यते। स्वदेशरीतिः कविनोक्ता" इत्युक्तम्।

अत्र इयं रीतिरधुनापि वङ्गदेश एव वरीवर्ति नान्यत्र कुत्रचिदिति श्रीहर्षस्य वङ्गदेशीयत्वे प्रमाणं नाग्राह्यम् ।

अथात्र विद्यापतेः पूर्वोक्तमेधाविकथायाम् कोकनामानं पण्डितमुद्दिश्य एकदा श्रीहर्षेणोक्तम्, "आर्य, महाकाव्ये कृतश्रमोऽहं तत्परीक्षार्थं त्वामुद्दिश्य विदग्धबुद्ध्या स्वदेशीयवात्सल्येन महतो दूरादागतोऽस्मि" इत्युक्त्या कोकनाम पण्डितोऽपि गौडदेशीय एवेति च वक्तुं शक्यते। स किं जगत्प्रसिद्धः कामशास्त्रप्रणेता कोकनामा पण्डित उतान्यः कश्चित् सन्न्यासी मनीषी कोकपण्डित इति संशयास्पदम् ।

अथात्र श्रीहर्षस्य समयविवेचने गौडेश्वराणां क्षत्रियाणां राज्ञां मध्ये बल्लालसेनस्तत्पुत्रो लक्ष्मणसेनश्चेति द्वावेव पितापुत्रौ राजानौ अतुलपराक्रमौ पञ्चगौडेश्वरपदवीशालिनौ। मिथिलामहीमहेन्द्रः श्रीबल्लालसेनदेवः द्व्यशीत्यधिकसहस्र (१०८२) मिते शकवर्षे राजसिंहासनमारुह्य ततोऽष्टमे वर्षे "अद्भुतसागर" नाम ग्रन्थं रचयितुमारब्धवान्। ततो वर्षाभ्यन्तर एवासारं संसारं विहाय पुरन्दरपुरमगमत्। अथ नवत्यधिकसहस्रमिते १०९० शाकवर्षे लक्ष्मणसेनदेवो राजसिंहासनमलञ्चकार। तत एव स्वजन्माब्दतो "लक्ष्मणसेनसंवत्" इत्यस्य लघुवाचकं 'लसं' इति वर्षनाम च सर्वत्रैव स्वराज्ये प्रचारितवान्। विद्यापतेः समयमारभ्य तत्पूर्वं परतोऽपि वर्षशतद्वयं यावत् मिथिलायां 'लसं' वर्षसंख्यैव साधारणानां मानवानां दानविक्रयादेः प्रमाणपत्रेषु लिखिता दृश्यते। अथ चैतयोर्गौडेश्वरयोर्नरपालयोः सम्बन्धे बहूनामैतिह्यानां च श्रवणात्—

"युधिष्ठिरो विक्रमशालिवाहनौ ततो नृपोऽसौ विजयाभिनन्दनः।
ततश्च नागार्जुनभूपतेः क्रमात् कलौ षडेते शककारका नृपाः॥"

इति प्राचीनोक्तिलक्ष्यमपि लक्ष्मणसेनः शककारक इति तमेव

"गौड़ोर्वीशकुलप्रशस्तिभणितिभ्रातरि" इत्युक्त्या श्रीहर्षः प्रसादनाय स्तौतीति तद्दीयसमय एव एकादशशतशकवर्षासन्नभूतः स्थूलगणनया खृष्टीय-द्वादश-शतकः श्रीहर्षस्य जीवनसमय इति चानुमीयते। तद्यत्किमपि भवतु तदानीन्तनगौडदेशीयः साम्प्रतिकोक्त्या वङ्गदेशीय एव कश्चन भूदेवः कविराजपदवीविभूषितः श्रीहीरसुतो जगद्विख्यातः श्रीश्रीहर्षकविरिति सर्वथैव सिद्धान्तपक्षः प्रतिभातीत्यलं पल्लवितेन।

---

# सुभाषितानि

## ( पाश्चात्यानि )

[ के, ना, वाटवे, एम्, ए. ]

(1) Charm strikes the sight and merit wins the soul.

लावण्यं लोचनाकर्षि, हृदयग्राहिणो गुणाः॥

(2) A little fire is quickly trodden out which being suffered rivers cannot quench.

मन्दद्युतिः क्षीणबलोऽग्निरादौ
पादाहतो नश्यति हेलयैव।
उपेक्ष्यमाणस्य तु नास्य पश्चा-
न्निर्वापणायालमपां प्रवाहाः॥

(3) One man's food is another man's poison.

पीयूषं हि यदेकस्य तदन्यस्य विषायते॥

(4) Ignorance is the only soil, where evil can grow and germinate.

अविद्यैव मता भूमिः पापशस्य-प्रदायिनी।

---

# अप्पाशास्त्रिणां पत्राणि

( १ )

श्रीशिवः शरणम् सांगलीतः

७।१८३५

सप्रणयं गाढमालिङ्ग्य मूर्ध्नि च समाघ्राय कुशलं वार्त्तयति वत्स*! प्रेरितपूर्वं मया श्रीमते पत्रमेकं सह मदीयया प्रतिकृत्या। कच्चिदधिगतं तदेतच्छ्रीमता ? अयि हृदयाह्लादन ! प्रकाशितं वङ्गीय-संस्कृतोपाधिपरीक्षाणां फलमिति 'वङ्गवासि'तोऽवगम्यते। तदुत्कण्ठते चेतः श्रीमतः परीक्षाफलमवगत्यामन्दमानन्दमनुभवितुं व्याकरणतीर्थ इत्युपाधिना च संयुज्यमानं श्रीमतां मङ्गलमभिधानमालोकयितुम्। तच्छीतलीकरोतु प्रियवत्सस्तथाविधप्रवृत्तिपीयूषासेकेन समुत्कण्ठा-कुलमन्तरङ्गमस्य जनस्य। कुत्रेदानीमायुष्मान् उपेन्द्रचन्द्रः†। अत्र मे मङ्गलम्। श्रीमतस्तु सर्वाङ्गीणं तदनवरतं विज्ञाय वाञ्छाम्यन्त-रात्मानमानन्दयितुम्। प्रणिपात्यतामव्याजभक्तिभरावनम्रोऽयं जनः प्राणस्य मे प्रियबन्धोः‡ श्रीमत्याश्च जननीनिर्विशेषायाः प्रजावती-देव्याश्चरणसरोजद्वितये। किमधिकमिति शिवम्।

भवदेकप्रेमा—श्रीअप्पाशर्म्मा।

---

* स्वर्गतस्य पण्डितप्रकाण्डस्य जयचन्द्र-सिद्धान्तभूषण-महोदयस्य भ्रातुष्पुत्रः श्रीगोपीचन्द्रसांख्यतीर्थः सम्बोध्यते।

† गोपीचन्द्र-महोदयस्य कनीयान् भ्राता।

‡ जयचन्द्र-सिद्धान्तभूषण-महोदयस्य।

# काफीद्वादशकम्

[ के० वी० अनन्तनारायण-शास्त्री ]

अस्ति द्विवर्णा ककुबन्तराले काचित्प्रकामं प्रचितात्मकीर्तिः ।
काद्यापि कान्ता कमनीयरूपा काफीति काचिद् भुवने प्रभान्ती ॥१॥

विदेशजातापि विभिन्नवर्णैर्निषेव्यमाणा मनुजैर्नितान्तम् ।
समानवर्णा द्रुतचन्दनेन शीतेतरा सत्यनिशं चकास्ति ॥ २ ॥

अत्यन्ततान्त्वान्भृशकर्मसक्ताञ्छिरोरुजार्तानलसान्सदा नॄन् ।
बालांश्च वृद्धानबला अतीव संसेव्य कालेऽगदतां नयेद् या ॥ ३

शब्दादिभिः स्वैर्विषयैर्नवानैर्नक्तन्दिनं मानुषभौतिकानि ।
अमन्दमानन्दयितुं प्रवृत्य गृहे गृहेऽसौ विभुवद्विभाति ॥ ४ ॥

## काफीस्वरूपम्

बीजं सुपक्वं समवर्तुलं चेत्सन्तस्तदग्र्यं प्रवदन्ति काफ्याः ।
इदन्तु बीजं मधुरं सुगन्धि सूते सुचूर्णं ह्यमितं मनोज्ञम् ॥ ५ ॥

तदेव बीजं दलितं तु मध्यं भवत्यमुष्या इति तद्रसज्ञाः ।
अपक्वबीजं दधते तनुत्वं चूर्णं न पूर्णं ह्यधमं ब्रुवन्ति ॥ ६ ॥

बीजं समानीय दृढाम्बरीषे निधाय सम्यग्ज्वलनेन तप्ते ।
संभर्जयेद्यावदुपैति कृष्णं वर्णं च तावद्धरितं विहाय ॥ ७ ॥

विहाय काठिन्यमिदं तु बीजं संभर्जितं लाघवमेति सद्यः ।
बीजोद्भवो धूम उदेत्य पश्चात्संव्याप्य गेहं गृहिणो दुनोति ॥ ८ ॥

च्युतस्ववर्णः समुपैति कृष्णं सन्तापितः सल्लँघुतामथापि ।
विलुप्तवर्णो लघुरेति तप्तो बीजादितोमं सुधियो विदन्ति ॥ ९ ॥

संचूर्ण्य यन्त्रेण तदेव बीजं पात्रे सरन्ध्रे विनिवेश्य चूर्णम् ।
अपो यथामित्यभिपूर्य तप्त्वा द्रवत्कषायां विदधाति काफीम् ॥१०॥

अनम्बु दुग्धेन समं कषायं संमिश्र्य तद्वत्सितशर्कराभिः ।
पात्रद्वयं हस्ततलद्वयेन फेनोद्गमावध्यधिलोड्य सम्यक् ॥११

मित्राणि पुत्रानतिथीनथान्यानाहूय काप्सु प्रतिपूर्य तूर्णम् ।
तप्तां सधूमामधरद्वयेनाकर्षन्कपिस्थां प्रमदेन चूषेत् ॥ १२॥

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अध्यापकः । वत्स हरिचरण, संपाठः पठ्यताम् ।

हरिचरणः ( पठति )—

कालः पचति भूतानि कालः संहरति प्रजाः ।

अध्यापकः । तिष्ठ, तिष्ठ । अनेन श्लोकार्द्धेन किं वा प्रतिपाद्यते ?

हरिचरणः । समयेन सर्वस्यान्तं क्रियते ।

अध्यापकः । अरे मूढ़, अन्तः क्रियते इति वक्तव्यम्, अन्तशब्दस्तावत् पुंलिङ्ग एव ।

मधुसूदनः । आर्य ! कराल-कालस्य सहोदरोऽयमिति कृत्वा पुंलिङ्गोऽयम्, अन्तकशब्दोऽपि तथाविध एव ।

अध्यापकः । अये मधो, वत्स, तत्त्वज्ञोऽसि । बालोऽपि शब्दरहस्यं सम्यगवबुद्धवानसि । भवतु । अरे हरे, पुनरपि श्लोकार्धस्य तात्पर्यं विव्रियताम् ।

हरिचरणः । समयेन सर्वस्यान्तं क्रियते ।

अध्यापकः ( ताड़यन् ) । अरे, इदानीमेवोक्तं मया व्याख्यातं च मधुसूदनेन अन्तशब्दः पुंलिङ्ग इति ।

हरिचरणः । आर्य, यद्यभयं दीयते, उच्येत ।

अध्यापकः। नाम्नैव हरेश्चरणोऽसि, कुतो वा ते भयम् ?

हरिचरणः। आर्य ! महर्षिप्रवरस्य पतञ्जलेरेव पन्थानमनुगच्छामि। तस्य च प्रामाणिकत्वे को वा विप्रतिपद्येत ? तेन खलु त्रिरेव—न खलु सकृद् वा द्विर्वा—दोषान्तमिति प्रयुक्तम्। अत्रभवांस्तज्ज्ञातुमर्हति।

अस्ति पुनः किञ्चिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतं भवति, आहोस्विद् दोषान्तमेव। १।१।५७

अस्ति पुनः समर्थविशेषणे किञ्चिदिष्टं संगृहीतं भवति, आहोस्विद् दोषान्तमेव। ४।१।१

अस्ति पुनः सप्तमीबहुवचनग्रहणे किञ्चिदिष्टं संगृहीतं भवति, आहोस्विद् दोषान्तमेव। ६।१।१८२ इति।

अतो 'महाजनो येन गतः स पन्थाः' इति शास्त्रमनुरुन्धानेन मया महर्षेः सरणिमनुसरता 'अन्तं क्रियते' इत्युक्तम्। को वात्र मेऽपराधः ?

अध्यापकः प्रतिपत्तिमूढस्तिष्ठति।

मधुसूदनः। आर्य ! तत्र दोषशब्दस्य संसर्गेणैवान्तशब्दस्यान्यथाभावः सञ्जातः। यस्तावद्दोषशब्दो दुष्धातोर्गुणेन निष्पन्नस्तस्य साहचर्यमितरेषामपि विकृतिमुपजनयेदित्यत्र किं वा चित्रम्। एकतस्तावद् भुवनभीषणोऽन्तशब्दोऽपरतश्च सर्वङ्कषो दोषशब्दः पवनाग्निसन्निभयोरनयोः समागमेन किं किं वा न विकृतिमियात्।

दृश्यताञ्चास्यान्तशब्दस्य प्रभावः। पाश्चात्त्यविपश्चिता ग्रिम्-महोदयेन सूत्रितम्—वर्गप्रथमस्य द्वितीयत्वमाङ्ग्ले इति। संस्कृते यत्र यत्र क च ट त प इति वर्णाः सन्दृश्यन्ते आङ्ग्लभाषायां तत्र ख छ ठ थ फ इत्येते स्युरित्यर्थः। अन्तशब्दे च तकारो वर्तत इति कृत्वा आङ्ग्लभाषायाम् end-शब्दे th-कारोऽपेक्षितः, दृश्यते पुनः dकारः।

Verner-महोदयस्य सूत्रं यद्यपि तकारस्य दकारं विदधाति, तथापि नात्र तत् प्रवृत्तिमर्हति। तथाहि तत्सूत्रम्—वर्गप्रथमानां वर्गतृतीया उदात्तानाम् इति। यदि संस्कृते वर्गप्रथमा उदात्ताः स्युः ( प्रथमाक्षरं वर्जयित्वा ) तर्हि आङ्ग्ले तेषां स्थाने वर्गतृतीया आदेशा भवन्तीति। अन्तशब्दस्याद्युदात्तत्वं सर्वेषामेव सम्मतम्, अत एव Verner-सूत्रस्य च Grimm-सूत्रस्य च मूले कुठारोऽर्पितः शब्दप्रवीरेणानेन।

अल्पमपि दृश्यतां शब्दस्यास्य माहात्म्यम्। अन्तिकादिशब्द-पर्यालोचनया शब्दस्यास्य प्राथमिकोऽर्थः समीपमिति प्रतीयते। ततश्च प्रान्त इति वाऽवसानमिति वार्थः सम्पन्नः। ततश्च स्वरूपमिति रम्यमिति चार्थो जातः। अहो समीपवचनोऽयं शब्दोऽवसानवचनः संवृत्तः!

---

पुरस्कारः ! पुरस्कारः: !! पुरस्कारः !!!

किरातार्जुनीय-भट्टिकाव्ययोः कालिकं पौर्वापर्यमधिकृत्य यस्य प्रबन्धः श्रेष्ठः स्यात् तस्मै दश रूपकाः प्रदीयेरन्। प्रबन्धास्तु मे-मासस्यान्तिमदिवसात् पूर्वमस्माभिर्लब्धव्याः। प्रबन्धानां गुणा-गुणविचारे च सम्पादक एव प्रमाणम्।

*A prize of Rupees Ten is offered for the best essay on the relative priority in time of the Kirātārjunīya and the Bhatti-kāvya. Essays must reach us on or before the 31st of May, 1950. In the matter of the award the Editor's decision must be regarded as final and legally binding.*

# करुणतमा कथा

[ श्रीमती शान्ति-मुखोपाध्यायः ]

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।"

कदाचित् त्रयो बान्धवा मिलित्वामेरिकामहादेशं गताः। आमेरिका-भूभागे तावदतिमात्रं समृद्धिशालिन्यो नगर्यो विराजन्ते। तासु च गगनतलचुम्बीनि सौधानि सन्ति। तेषां च हर्म्याणां सर्वोच्चतलसमारोहणे भूयान् क्लेशोऽनुभूयते। एतदर्थं तत्र प्रतिसुतुङ्गगृहं एलिभेटार्-समाख्यो विद्युच्चालितयन्त्रविशेषो वर्तते। तस्य च साहाय्येन विनैवायासं सर्वे समारोहणावरोहण-व्यापारं निर्वर्तयन्ति।

इमे च त्रयो बान्धवा आमेरिकायां काञ्चित् कुबेरवैभवां नगरी-मनुप्राप्ताः। तत्र च निशानयनाय ते पान्थशालामेकामाश्रितवन्तः, अधन्यतया पुनरेतेषां विशालतमेऽपि भवने नैकोऽपि प्रकोष्ठः शून्य आसीत्। केवलमारोहणावरोहणयन्त्रस्य वैकल्यात् सर्वोच्चतले कक्ष एकः सर्वथा रिक्त आसीत्। तदा च रात्रियापनस्योपायान्तर-मलभमानास्ते "भवतु तावत् क्लेशः, सोपानमार्गेणैव गमिष्यामः" इति स्थिरीकृत्य सोपानान्यधिरोढुमुपचक्रमिरे। चित्तस्य विषयान्तरे विनिवेशेन सोपानारोहणे क्लेशस्य लाघवं सञ्जायेत इति विचार्य ते "त्रिभिरेवास्माभिः पर्यायेण करुणरसात्मिका कथा वर्णयितव्या, तावता सोपानारोहणक्लेशो नानुभविष्यते, करुणतमाया अपि कथाया निर्णयो भविष्यती"ति निर्धारितवन्तः।

अथ यावन् मित्रद्वयसमुपवर्णिता कथा समाप्तिमगमत् तावत् तृतीयेन मित्रेण वक्तुमारब्धम्। तदानीं प्रायेण ते भवनशिखर-

मनुप्राप्ता एव, अल्पीयानेव विलम्ब आसीत्। तेनोक्तम्, अहो! मदीया कथा क्षुद्रतमापि करुणतमा। कक्षस्य कुञ्चिकामानेतुमेव विस्मृतवानस्मि इति।

---

## पाणिनि-सूत्र-विमर्शः

### झोऽन्तः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"झोऽन्तः" [ ७।१।३ ] इति भगवतः पाणिनेराचार्यस्य सूत्रम्। तत्र किमिति सत्यां सुमहत्यां वर्णमालायां लाघवार्थिना महर्षिणा झकार एवोपादायीति प्रश्ने झष-मीन-मत्स्य-शब्दाः स्मृति-पथमधिरोहन्ति। अत्र झषशब्दतो झकारो गृहीतः, तस्य च मीन-मत्स्ययोस्तुल्यार्थत्वान् मत्स्यतोऽत्कारं मीनतश्च नकारं गृहीत्वा तस्य स्थानेऽन्तादेशो विहित इति प्रतिभाति।

---

## निष्कृतिः

[ स्वर्गत-शरच्चन्द्र-चट्टोपाध्यायः ]

( २ )

परं निमेषदशकाद् ऊर्ध्वं यावत् सिद्धेश्वर्याह्निकं परिसमाप्य गात्रोत्थानमकरोत् तावन्मध्यमवधूः प्रत्यावृत्य पुरतस्तस्थौ। सा खलु केवलं कवाटस्यान्तरालेनापेक्षमाणावस्थिता।

सिद्धेश्वरी सभयं विशुष्कवदनमपृच्छत् "किं वा ? मध्यमवधु !" इति।

नयनतारावदत्, तदेव विज्ञातुमागतास्मि। न खल्वहं कस्या-श्यश्नामि वा परिदधामि वा येन स्थायं स्थायं तूष्णीमेव सम्मार्जनी-प्रहारान् अनुभविष्यामि इति।

सिद्धेश्वरी तां शमयितुकामा सप्रश्रयमवदत्। कथं वा सम्मार्जनीप्रहारं कुर्यात्, मध्यमवधु। तस्या हि वचनभङ्गिरेवेदृशी। किञ्च, सा खलु त्वां नावदत्, केवलम्—

केवलमतुलं जीवन्तं प्रोथयितुमैच्छत्। अहमपि तावत् सखिलखिलारवं विहसामि! मा तावच्छाकैर्मत्स्यान् निगूह-स्वान्तिके! कथं वान्यथा जनाः सम्मार्जनीप्रहारान् कुर्वन्ति? मन्ये सा खलु धृत्वा नाताडयदिति ते मनसस्तोषो न सञ्जात इति।

प्रागेव खलु सिद्धेश्वर्या न प्रासरद्विस्मयेन। सा शनैरवदत्—अलमीदृशेन प्रलपितेन, मध्यमवधु! किं मया शिक्षिता सा?

कुञ्चिकाव्यापारत एव मध्यमवधूरन्तर्दाहेन मरणक्लेशमनुभवन्त्या-सीत्, सा समुद्धतमेव प्रत्युत्तरितवती—तत्तु त्वमेव जानासि। न खलु कोऽपि कस्यापि मानसं ज्ञातुं गच्छति, चक्षुर्भ्यां दृष्ट्वा कर्णाभ्यां च श्रुत्वैव विचार्यते। वयं तावदागन्तुकाः, यदि तव गृहं समागत्य प्रत्यूहायमानाः सञ्जाताः, कामं तर्हि स्वयमेवोच्यतां त्वया, किमित्यपरं प्रणोदयसि।

अभियोगस्यास्य समुत्तरं सिद्धेश्वर्या वदनारविन्दे नागतम्, सा विह्वलेव विलोकयन्ती स्थिता।

मध्यमवधूः कठोरेण कण्ठस्वरेणावदत्, न खलु वयमपि तृणानि चरामः, सर्वमेव बुध्यामहे। परमनया रीत्याऽदूरीकुर्वती यद्येकद्वैर्मधुरवचनैरापृच्छसे तर्हि जनानां श्रवणयोर्नयनयोश्च नोद्वेजकं भवेत्, वयमपि सहमानाः प्रतिष्ठेमहि। अहो! तत्रभवां-

श्चेच्छृणुयात्" सर्वथा गगनतलादेव निपतेत्। स हि यस्मै कस्मायपि कथयति न खल्वस्माकं प्रजावती देवी मानुषी, सा हि साक्षाद् देव्येव।

सिद्धेश्वर्या नयनयुगलतोऽकस्मात् प्रावर्तताश्रुधारा। सा हि रुद्धस्वरेणावदत्, न खल्वीदृशमपवादं मम शत्रुरपि मयि पातयितुमलम्। वरं मे मरणं न पुनर्देवरायेदृशवृत्तान्तस्य वर्णनम्। यूयमागता इति कियान् वा न मे प्रहर्षः! आनीयतां मे कानाइ पटोलश्च, अहं तयोः शिरसि पाणिमाधाय—

सावशेष एव तस्या वचने शैलजा पात्रपूर्णं पयः समादाय गृहं प्रविश्यावदत्, कच्चित् परिसमाप्तमाह्निकम्। मात्रया पयः पिबान्तिके।

रोदनं विस्मृत्योच्चैरवदत् सिद्धेश्वरी—अपसर मम पुरतः, दूरं प्रयाहीति।

सहसा शैलजा प्रतिपत्तिमूढ़ा विलोकयन्ती स्थिता।

सिद्धेश्वरी रुदती प्रोवाच—किमिति त्वं यदेव रसनाग्रे समागच्छति तदेव जनान् वदसि इति।

कस्मै वा किं वा मयोक्तम्?

न खलु प्रश्नमिममपि कर्णे कृतवती सिद्धेश्वरी, सा खलु तथैवोच्चैरवदत्, "मां तावद् यथेच्छं वदन्त्या वर्धितन्ते साहसम्। को वाऽरे तेऽधमर्णो वचनेषु। अपि नाम सर्वानेव त्वमन्तिकां सम्भावयसि? दूरमपसर ममाग्रतः।" इति।

( क्रमशः )

---

# गेटे-कवि-सुभाषितानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ५ )

सहृदयाः, इदानीं प्रतिदिनं प्रतिदण्डं प्रतिपलं प्रतिनिमेषमेवास्माभिरनुभूयते "मृदुः सर्वत्र बाध्यते" इति वचनस्य याथार्थ्यम्। इह खलु मध्यमः पन्थाः प्रायेण न सन्दृश्यते, शक्तिमता ईशितव्यम्, निःशक्तिकेन सेवितव्यमित्येषा नीतिः, अत एव भूतिकामेन सर्वथा शक्तिसमार्जने प्रयत्नो विधेयः। गेटेमहोदयेनाप्येतदेवोक्तम्—

"*Du musst herrschen und gewinnen,*
*Oder dienen und verlieren,*
*Leiden oder triumphieren.*
*Amboss oder Hammer sein.*"

"**Thou must either rule and win,**
**Or submissively give in,**
**Triumph, or else yield to clamour :**
**Be the anvil or the hammer.**"

अवश्यमेव त्वया जितवतेशितव्यम् अथवा विजितेन सेवितव्यम्, क्लेशोऽनल्पः सोढव्योऽथवा जयोल्लासोऽनुभवितव्यः, सूर्मीभावः स्वीकर्तव्योऽयोघनत्वं वाङ्गीकर्तव्यम्।

प्रसङ्गतश्च कानिचिदनुरूपाणि सुभाषितानि समुद्ध्रियन्ते —

**इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्।**
**शाम्येत् प्रत्यपकारेण नोपकारेण दुर्जनः॥**

कुमारसम्भवः २।४०

"अहो प्रकृतिसादृश्यं श्लेष्मणो दुर्जनस्य च।
मधुरैः कोपमायाति कटुकैरुपशाम्यति॥"
"प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः।
नयन: स्नेहसम्पर्कात् कालुष्यं समुपैत्यलम्॥"

दृष्टान्तशतकम्।

"पयःपानं भुजङ्गानां केवलं विषवर्द्धनम्।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये॥"
"शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्॥"

मूर्खास्तावद् गोगर्दभतुल्यकक्षा इति तेषामपि दण्ड एव भेषजम्। अत एव वङ्गीयानामाभाणकः—मूर्खस्य लाठ्यौषधम्। लाठी= यष्टिः।

---

# विशेषतो द्रष्टव्यम्

स्थानाभावात् "सुभाषित-सागरः" सम्पादकस्यास्वस्थतया च "ऋग्वेद-भाष्यम्" "पृच्छाया उत्तर"ञ्च न प्रकाशितम्। पृच्छाविषये पलसुले-महोदयेन साकं सर्वथास्माकमैकमत्यमिति जानन्तु वाचक-महाभागाः। वारान्तरे सर्वं प्रकाशयिष्यते।

---

# पुस्तक-परिचयः

प्रश्नप्रभाकरः। श्रीवैद्यनाथस्मृतितीर्थविरचितो वङ्गभाषामयो ग्रन्थः। ९१ बी, सिमला ष्ट्रीट कलिकाततः प्रकाशितः। मूल्यं रूप्यकत्रितयम्।

प्रश्नगणनाविषये ये तावद् ग्रन्था उपलभ्यन्ते वङ्गभाषायां ते प्रायेण निःसारा एव, अयं पुनरतीव सारसम्पन्न इति निवेदयन्तः प्रसीदामः। अत्र प्रथमाध्याये राशिचक्रे ग्रहसंस्थापनं लग्नसाधनं भावसाधनं द्वादशभावसाधनं भावसन्धि-भावफलसाधनं षड्वर्गसाधनं च प्रतिपादितम्। द्वितीये राशीनां भावानां च स्वरूपादीनि निर्णीतानि। तृतीये ताजिकमतेनेक्कबालादयो योगा विवृताः। चतुर्थे प्रश्नविचारगताः साधारणा नियमाः प्रतिपादिताः। पञ्चमषष्ठसप्तमाध्यायेषु होराषट्पञ्चाशिका-चिन्तामणि-चण्डेश्वरादि-प्रामाणिक-प्रबन्ध-साहाय्येन विविधविषयकाणां प्रश्नानां गणनाप्रणाल्युपनिबद्धा। अवश्यं संग्राह्योऽयं ग्रन्थो वङ्गभाषाभिज्ञैर्ज्योतिष-शास्त्रानुरागिभिः। आशास्यते च पुनःसंस्करणावसरे प्रूफ-संशोधनेऽवदधीत स्मृतितीर्थ-महाभागः। ३४-३५ प्रभृतिषु पृष्ठेषु बृहष्पति-शब्दगतः षकारः समुद्वेजयत्येव मानसं संस्कृताभिज्ञस्य। गीष्पति-शब्दे षकारो वर्तत इति कृत्वा बृहस्पति-शब्देऽपि षकारः सन्निवेश्यतेऽक्षरग्रथकैः, ग्रन्थकृद्भिस्तु सयत्नं षकारं निष्कास्य सकारस्य स्थापनं विधेयम्। ६१ तमे पृष्ठे दृश्यते—"कूटिलेषु आर्जवं न नीतिः" इति। अत्रापि मुद्रणालयपिशाचेन प्रकटितं पाण्डित्यम्। कूटबुद्धि-शब्दे दीर्घ ऊकारो वर्तते, अत एव कुटिलशब्दगतेनाप्युकारेण दीर्घेण भाव्यम्! वस्तुतस्तु पद्यमिदं नैषधीयचरितगतम्। तत्र दृश्यते (५।१०३)—

तेन तेन वचसैव मघोनः स स्म वेद कपटं पटुरुच्चैः ।
आचरत् तदुचितामथ वाणीमार्जवं हि कुटिलेषु न नीतिः ॥

इति । मल्लिनाथसूरिणापि—

व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गान्निशिता इवेषवः ॥

इति किरातार्जुनीयगत-(१।३०)-पद्यव्याख्यानावसरे समुद्धृतम्— "आर्जवं हि कुटिलेषु न नीति"रिति । अन्तरान्तरा दृश्यमानाः प्रमादा एवंविधाः प्रमदानामिव कपोलकज्जलं न परिहापयन्ति सौभाग्यं ग्रन्थस्य ।

ब्रह्ममीमांसात्रिशती ( ब्रह्मसूत्रार्थसंग्रहात्मिका )। ब्रह्मश्री आङ्गरै. रङ्गस्वामिशास्त्रिणा विद्यार्थिनामुपकाराय विरचिता, पण्डितैश्च परिशोधिता। A. R. Rangaswami Sasthri, 7, Solaiappa Mudaliar Agraharam, Kumbokanam इत्यत्र लभ्यम् । मूल्यं सपादरूप्यकम् ।

विज्ञापनायां ग्रन्थकृद्भिरुक्तम्—

"व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने" इत्यभियुक्ताः, वेदान्तवाक्यकुसुमग्रन्थनार्थानि सूत्राणि, वेदान्तवाक्यानि हि सूत्रैः उदाहृत्य विचार्यन्ते, इति च भगवत्पादाः । 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति च गीतं भगवता—तानि च ब्रह्मसूत्राणि ५५५ पञ्चपञ्चाशदधिकपञ्चशतसंख्याकानि, तानि च १९२ द्विनवत्यधिकशतानां (?) अधिकरणानां रचनया व्याचख्युः श्रीशङ्करभगवत्पादाचार्याः साक्षाच्छिवावतारभूताः । तदर्थश्चातिगभीरतया दुरवगाहो मन्दमनीषैः । मेधाविनां सुग्रहोऽपि सद्यो

विस्मरणपथमधिरोहति विक्षिप्तचित्तानाम्, अतः पूर्वेषां सुग्रहणाय, परेषां (?) अविस्मरणाय च कमपि प्रयत्नं चिकीर्षुणा मया गुरुकृपाप्रेरितेन सूत्रार्थविषयवाक्यसंशयसंगतिपूर्वपक्ष-सिद्धान्तप्रदर्शनपूर्वकं तदुपयोगिव्याख्यानविषयांश्च संयोज्य ब्रह्ममीमांसापद्यत्रिशती पद्मस्रगिव प्रबद्धा। तामेतां कण्ठे कुर्वन्तः सफलयेयुः मम परिश्रमं विचाररसिकाः इति विश्वसिमि मुद्राप्रमादजन्यान् दोषांश्च संशोध्य गृह्णीयुरिति प्रार्थये।" इति।

प्रसादगुणसमुज्ज्वलैर्विविधच्छन्दोनिबद्धश्लोकैर्विरचितोऽयं ग्रन्थ उपकरिष्यत्येवच्छात्राणामिति नो बुद्धिः। पादान्तपादाद्योः सन्धि-र्नित्योऽर्धान्तवर्जमित्यालङ्कारिकानुशासनमन्तरान्तरोल्लङ्घितम्, स्वरवर्णे परे पदान्तस्य मकारस्यानुस्वारविधानेन वैयाकरणानुशासनमपि समुल्लङ्घितम्। एतत् सर्वं संस्करणान्तरे शोधनीयम्।

नियति-निर्णय-सङ्केतः। श्रीपञ्चानन-राय-काव्यतीर्थ-ज्योति-र्विनोदेन वङ्गाक्षरैः सम्पादितः। श्रीमाणिकचन्द्रभट्टाचार्येण ९।३।४-हरिघोष स्ट्रीट्, कलिकातातः प्रकाशितः। मूल्यं रुप्यकमात्रम्।

ज्योतिःशास्त्रनिष्णातेन श्रीपञ्चानन-राय-काव्यतीर्थ-ज्योति-र्विनोद-महोदयेन प्रामाणिक-ग्रन्थेभ्यो वचनान्युद्धृत्य ग्रन्थेऽस्मिन् निमित्तानि विवृतानि। क्रमेण चात्र प्रतिपादितानि—स्पन्दनम्, स्फुरणम्, प्रश्नगणनासूत्रम्, क्षुतम्, ज्येष्ठीरुतम्, काकचरित्रम्, शृगालचरित्रम्, स्वप्नफलम्, ज्योतिःशास्त्र-सम्मत-धनयोगः, श्वासप्रश्वासाभ्यां शुभाशुभ-कर्तव्य-विनिश्चयः, तिलयतुकं कर-रेखादिभिर्भाग्य-निर्णयः इति। अन्ते च श्रीधनदा-कवचं सन्नि-विष्टम्। ग्रन्थेनानेन निमित्तानि जिज्ञासूनां महानुपकारो भविष्यति। मूलश्लोका वङ्गभाषानुवादाश्च सर्वत्र सन्निविष्टाः। भूमिकायां निमित्तानां शुभाशुभसूचकत्वे साम्प्रतिकानामविश्वासदूरी-

करणाय कविप्रवरस्य शेक्षपीयरस्य वचनमुद्धृतम्—"There are more things in Heaven and Earth Horatio than your philosophy can dream of ( Hamlet )" वस्तुतस्तु Hamlet ( 1. 5. 166-7 ) नाटके

There are more things in heaven and earth, Horatio,
Than are dreamt of in your philosophy.

इत्येवोपलभ्यते। यद्यप्यर्थः प्रायेणोभयत्राप्यविशिष्टस्तथापि वचनोद्धारकाले मूलगता एव शब्दाः समुद्धरणीयाः। अतीवोपकारकोऽयं ग्रन्थो निमित्तानि जिज्ञासूनामवश्यं च तैः संग्राह्यम्।

संस्कृतशिक्षासहचर। प्रथम-खण्डः। श्रीफटिकलालदास बि ए, से आ पे प्रणीतः। चन्दननगरतः श्रीहरिसाधनदासेन प्रकाशितः। मूल्यमाणकचतुष्टयम्।

श्रीयुक्त-फटिकलाल-दास-महोदयः संस्कृताङ्गल-फरासी-प्रभृतिषु भाषासु सुव्युत्पन्नः, गणितशास्त्रे च नितरां निष्णातः संस्कृतशिक्षार्थिनां छात्राणां सौकर्याय वङ्गभाषामयं खण्डत्रितयात्मकं संस्कृत-सहचरं प्रणिनाय। तस्य च प्रथमे भागे साम्प्रतिक-वैज्ञानिक-रीत्या वङ्गलिपि-रोमानलिपि-साहायकेन देवनागरी लिपि-रुपवर्णिता, उच्चारणप्रकारोऽपि विवृतः। वर्णानामुच्चारणकाले वागयन्त्रस्य क्रियाप्रदर्शनाय चित्राण्यपि सन्निविष्टानि। अन्तरान्तरा छन्दोबद्धानि वाक्यान्युपनिबद्धानि छात्राणां स्मरण-सौकर्यार्थम्। ईदृशं सुलिखितं पुस्तकमितः पूर्वं नास्माभिः प्रत्यक्षीकृतम्। आशास्यते वङ्गेषु सर्वेष्वेव विद्यालयेषु ग्रन्थोऽयं पाठ्यतया निर्दिश्येतेति। चिरं जीवतात् फटिकलाल-दास-महाभाग उपकुर्याच्चैवं जन्मभूमेश्छात्राणां च इति शम्।

---

**स्त्रीप्रशंसा**—The original slokas of Varahamihira with a splendid original commentary. Re. 1/-

**Popular Etymology** Re. 1/-

কলিকাতা বিশ্ববিদ্যালয়ের অধ্যাপক

শ্রীক্ষিতীশচন্দ্র চট্টোপাধ্যায়, এম. এ. ডি. লিট্ প্রণীত

# শব্দ-কথা

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি ভুলগুলির আলোচনা করা হইয়াছে। **সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক্ দিয়া,** বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওতপ্রোত-শব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম ত'র পর আছে, না দ্বিতীয় ত'র পর আছে, না উভয় ত'র পর আছে, সঠিক শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতায় প্রভেদ কি? সন্ধির কথায় সন্ধির বৈজ্ঞানিক ব্যাখ্যা ইংরাজী, লাটিন ও আরবী ভাষায় সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব, ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে। বাঙ্গালা, ইংরাজী ও সংস্কৃত ভাষায় অধ্যাপক ও ছাত্র, সাহিত্যিক, সাংবাদিক প্রভৃতির পক্ষে এই গ্রন্থ অত্যাবশ্যক।

**মূল্য দুই টাকা মাত্র**

# ঊষার আলো

ইহাতে দেশ-বিদেশে প্রচলিত হাস্যরসাত্মক কৌতূহলোদ্দীপক অথচ শিক্ষাপ্রদ শতাধিক ছোট গল্প সন্নিবিষ্ট হইয়াছে। পড়িতে পড়িতে হাসিয়া অস্থির হইতে হইবে।

**মূল্য বার আনা মাত্র,**

**নক্ষত্রমালা।** শ্রেষ্ঠ শ্লোকসমষ্টি, ব্যাখ্যা ও অনুবাদ। মূল্য পাঁচ আনা মাত্র

**শ্রীবিশ্বনাথ চট্টোপাধ্যায়**

৮১নং নিউ শ্যামবাজার ষ্ট্রীট, কলিকাতা—৪।

TECHNICAL TERMS AND TECHNIQUE OF

# SANSKRIT GRAMMAR

## A Critical, Comparative and Historical Study

By

**KSHITISH CHANDRA CHATTERJI, SASTRI, M. A., D. LITT.**

*Lecturer, Calcutta University ;*

*Formerly Editor, Calcutta Oriental Journal,*

*Surabharati, Oriental Literary Digest, etc., etc.*

"When we were reading in the lower classes of high school, a student once asked the teacher of Sanskrit why Lat meant the Present Tense. The learned teacher grew furious, gave the boy an inkling into the abusive powers of the elegant Bengali language, and then said, Lat means the present tense because the great Panini wanted it to mean the present tense. If he had intended to use Drum Dhrash or Chlorate of Potash for the present tense what was there to prevent him from doing so ? You ought to have greater respect for Panini than to ask such impertinent questions. The teacher belonged to the usual class of Pandits who regard grammar as a strictly normative science and who are followers of the principle :

"Theirs not to reason why,
Theirs not to make reply"

and at that time we were greatly impressed by the soundness of his reasoning. But as we grew older the argument gradually lost all its force for us. I am now firmly convinced that there is nothing arbitrary in language To say that a thing or phenomenon is arbitrary is merely to confess our ignorance. If we could find out all the links in the chain of association in the mind of a writer, we could explain what on the face of it would appear to admit of no explanation. And this is true of the technical terms of Sanskrit grammar also.'' ( p. 8 )

**VISVANATH CHATTERJI**
**81, Shyambazar Street,**
CALCUTTA—4.
Phone : B. B. 4049

Printed and Published by Sri. Jy...sa Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

४र्थ-वर्ष　　　　　　　　　　　　　　　　　　　　संख्या ८

# मञ्जूषा

## संस्कृतभाषामयी मासिक-पत्रिका

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, सभाष्यम् ऋग्वेदो मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत। चैत्रतः शोधनादीनां समीचीना व्यवस्था भविष्यति।


श्रीविश्वनाथ चट्टोपाध्यायः।

८१ श्यामबाजार ष्ट्रीट, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone : B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

April, 1950. | १८७१-शकीय वैशाखस्य ४र्थ-वर्षस्य ८म-संख्या | Vol. IV No. 8

## सुभाषितानि

अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम् ।
हिंसारतश्च यो नित्यं नेहासौ सुखमेधते ॥

न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् ।
अधार्मिकाणां पापानामाशु पश्यन् विपर्ययम् ॥

नाधर्मश्चरितो लोके सद्यः फलति गौरिव ।
शनैरावर्तमानस्तु कर्तुर्मूलानि कृन्तति ॥

यदि नात्मनि पुत्रेषु न चेत् पुत्रेषु नप्तृषु ।
न त्वेव तु कृतोऽधर्मः कर्तुर्भवति निष्फलः ॥

अधर्मेणैधते तावत् ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥

मनुसंहिता ४ । १७०-१७४

"Not even here on earth are blest
Unrighteous men, who live by wrong
And guileful arts: who, bold and strong,
With cruel spite the weak molest.

Though goodness only brings distress,
Let none that hallowed path forsake;
Mark what reverses overtake
The wicked after brief success.

Not all at once the earth her fruits
Produces; so unrighteousness
But slowly works, yet not the less
At length the sinner clean uproots.

At first through wrong he grows in strength,
He sees good days, and overthrows,
In strife triumphant, all his foes;
But justice strikes him down at length.

Yes, retribution comes, though slow;
For if the man himself go free,
His sons shall then the victims be,
Or else his grandsons feel the blow." MUIR.

"Though the mills of God grind slowly, yet they
grind exceeding small,
Though with patience he stands waiting,
with exactness grinds he all."

"The laws of Heaven are long-enduring, but their patience comes to an end at last. Because justice is not executed speedily men persuade themselves there is no such thing as justice. But the lame foot, as the Greek proverb said, overtakes the swift one, in the end; and the longer the forbearance the sharper the retribution when it comes."

FROUDE.

## आभाणकाः ।

१। To carry water in a sieve.

( ला ) Cribro aquam haurire.

चालन्या जलं वहति ।

[ व्योमनि बीजाकुरुते चित्रं निर्माति सुन्दरं पवने ।
रचयति रेखाः सलिले यस्तु खले चरति सत्कारम् ॥
बीजाकरणं बोजप्रक्षेपपूर्वकं कर्षणम् । रसगङ्गाधरः ।
"व्योमनि वासं कुरुते चित्रं निर्माति यत्नतः सलिले ।
स्नपयति पवनं सलिलैर्यः क्षुद्रे चरति सत्कारम् ॥" ]

२। Put your finger in the fire, and say it was your fortune.

अनलेऽङ्गुलिं निधेहि, ब्रूहि च धिग् दैवमिति ।

३। I taught you to swim; and now you'd drown me.

अहमेव त्वां सन्तरणविद्यायामभिविनीतवान्, इदानीं च त्वं मामेव सलिले मज्जयितुमीहसे ।

"लब्धविद्यो गुरुं द्वेष्टि ।"

---

## संस्कृतम्

[ विद्याभास्करः विद्वान् एम् रामकृष्ण भट्टः एम् ए ]

संस्कृतं भारतीयानां सर्वेषामादरास्पदम् ।
रत्नाढ्यमिव कोटीरं भूत्वा भायाद्विशुद्धिमत् ॥१॥

भारते च तथा कृत्स्ने भुवने धर्मभूरुहः ।
छायां प्रसार्य मङ्गल्यां देयान्निःश्रेयसं फलम् ॥२॥
परस्परविरोधश्च राष्ट्रेषु मनुजेषु च ।
शममेतु तथा प्रेमा धर्मश्रद्धा च वर्द्धताम् ॥३॥
भक्तिर्जनस्य सर्वेशे करुणावरुणालये ।
हृत्प्रसादविवेकाढ्या भूयाद्भवपयोधि-नौः ॥४॥
दैवीयं संस्कृता वाणी मातेव जनवन्द्यताम् ।
एत्य संस्कृतचित्तान्नॄन् कुर्वती भातु भूतले ॥५॥
संस्कृता सर्वभूषाढ्या नमरा नः सरस्वती ।
राष्ट्रभाषापदारूढ़ा नन्देल्लोचनकौमुदी ॥६॥
सर्वत्र मनुजाः सर्वे दीर्घमायुररोगिताम् ।
सद्बुद्धिं शान्तिसम्पत्ती प्राप्य नन्दन्तु सन्ततम् ॥७॥
लोके सहृदयत्वं च सौहृदय्यं मनीषिभिः ।
साकं कलोपसेवित्वं सद्विज्ञानं समेधताम् ॥८॥

---

# व्याकरण-विमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ६ )

## अन्योऽन्य-शब्दः ।

ऋग्वेदे तावद् अन्य-शब्दस्य द्विः प्रयोगोऽन्तरान्तरोपलभ्यते । तथाहि—

द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परि षस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्व-
त्यनश्नन्नन्यो अभिचाकशीति ॥ [ १।१६४।२० ]
आन्यं दिवो मातरिश्वा जभा-
रामथ्नादन्यं परि श्येनो अद्रेः।
अग्नीषोमा ब्रह्मणा वावृधा-
नोरुं यज्ञाय चक्रथुरु लोकम् ॥ [१।९३।६]

इत्यादिषु पृथक्तया ह्यन्यशब्दः प्रयुक्तः। अत्र कर्मव्यतिहारस्य गन्धोऽपि नास्ति।

अन्यो अन्यमनु गृभ्णात्येनो-
रपां प्रसर्गे यदमन्दिषाताम्।
मण्डूको यदभिवृष्टः कनिष्कन्
पृश्निः संपृङ्क्ते हरितेन वाचम् ॥ [७।१०३।४]

इत्यत्र यद्यपि विस्पष्टं क्रियाविनिमयो नोक्तस्तथापि प्रथमं वाक्यं क्रियाविनिमयतो नातिदूरेऽवतिष्ठते।

क ईं स्तवत् कः पृणात् को यजाते
यदुग्रमिन्मघवा विश्वहावेत्।
पादाविव प्रहरन्नन्यमन्यं
कृणोति पूर्वमपरं शचीभिः ॥ [ ६।४७।१५ ]

"अयमिन्द्रः शचीभिः आत्मीयाभिः प्रज्ञाभिः पूर्वं प्रथमभाविनं सन्तं स्तोतारम् अपरं पश्चाद्भाविनं च अन्यमन्यं परस्परव्यतिहारेण कृणोति। यः प्रथमभावी मुख्यः स्तोता तं जघन्यं करोति, यश्च जघन्यः स्तोता तं मुख्यं करोति। तत्र दृष्टान्तः प्रहरन् पादाविव। यथा पादौ प्रहरन् मार्गे क्षिपन् पुरुषः पूर्वं पादमपरं करोति, अपरं च पूर्वम्, तद्वत्। सायणः।

अत्र कर्मव्यतिहारः स्पष्ट एव।

अन्या वोऽन्यामवत्वन्यान्यस्या उपावत ।
ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ [ १०।९७।१४ ]

हे ओषधयः वो युष्माकं मध्येऽन्यौषधिरन्यामोषधिमवतु प्राप्नोतु । अवतिरत्र गत्यर्थः । तथान्यान्यस्याः समीपमुपावत उपगच्छत । एवं याः सन्ति क्षित्यामोषधयः ताः सर्वाः संविदानाः परस्परमैकमत्यं प्राप्ताः सत्य इदं मे मदीयं वचः प्रार्थनालक्षणं वचनं प्रावत प्ररक्षत । सायणः ।

अत्र कर्मव्यतिहारः स्फुट एव । किन्त्वत्र अन्या अन्याम् इति अन्या अन्यस्या इति पृथक् पृथगुपलभ्यते ।

एवं तैत्तिरीयसंहितायामपि [ ४।२।११।४ ] "अन्या वो अन्याम्" इत्युपलभ्यते ।

शतपथब्राह्मणे पुनः "अन्योऽन्यस्यै" इति सन्दृश्यते—

एता वा आपः स्वराजो यन्मरीचयः । ता यत् स्यन्दन्त इवान्योऽन्यस्या एवैतच्छ्रिया अतिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति । [ ५।३।४।२१ ] इति ।

मरीचय इति यत् एताः स्वराजः स्वयमेव दीप्यमाना आपः । यत् यस्मात् ता मरीचयः स्यन्दन्त इव प्रवहन्तीव । ...... यथा जलसङ्घा उपर्युपरिभावेन वर्तन्ते, तद्वदेता मरीचयः अन्योऽन्यस्या मरीचेः श्रियै शोभायै अतिष्ठमानाः स्थातुमसहिष्णव उत्तराधराः इव भवन्त्यः यन्ति गच्छन्ति । अतो जलसाम्यादप्स्वेन परिगणनम् ।

सप्तच्छन्दांसि चतुरुत्तराण्यन्यो अन्यस्मिन्नध्यार्पितानि ।
कथं स्तोमाः प्रति तिष्ठन्ति तेषु तानि स्तोमेषु कथमार्पितानि ॥
[ अथर्व सं ८।५।१९ ]

इत्यत्र क्लीबत्वेऽपि व्यस्ततया 'अन्यो अन्यस्मिन्' इति प्रयुक्तम् । "छन्दांसि वा अन्योन्यस्यायतनमभ्यध्यायन्" इत्यैतरेयब्राह्मण-

गते वाक्येऽपि [ १९१५ ] अन्यशब्दस्य पुंलिङ्गप्रथमैकवचनान्तमेव पदमुपलभ्यते।

ईदृशेभ्य एव वाक्येभ्यः क्रमेण क्रिया-विनिमय-वचनस्यान्योऽन्य-शब्दस्य समुत्पत्तिः सञ्जातेत्यवश्यमभ्युपगन्तव्यम्। क्रमेण च क्रिया-विनिमयबोधनार्थं सर्वत्रैव प्रथमावयवस्य पुंलिङ्गप्रथमैकवचनान्तत्वं व्यवस्थितम्। एवञ्च, अन्योऽन्येन स्पर्धन्ते, अन्योऽन्यस्मै द्रुह्यन्ति, अन्योऽन्यस्मिन् विश्वसन्ति-प्रभृति-स्थलेषु समग्रपदानां विभिन्न-विभक्तिकत्वेऽपि प्रथमावयवस्य प्रथमैकवचनान्तत्वमेव। क्रमेण चान्योऽन्यशब्दानुरूपस्य इतरेतरशब्दस्य प्रादुर्भावः समजनि। ततश्च अन्योन्यशब्दसादृश्येन प्रथमावयवे पुंलिङ्गप्रथमैकवचन-पद-विशिष्टस्य परस्परशब्दस्यात्मलाभोऽभूत्। सर्वमेतत् पर्यालोच्य वार्त्तिककारेणोक्तम् [ ८।१।१२।११ ]—

"कर्मव्यतिहारे सर्वनाम्नः समासवच्च बहुलम्, यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य" इति। व्याख्यातञ्चेदं भाष्यकारेण—

कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम्, समासवच्च बहुलम्। यदा न समासवत् प्रथमैकवचनं भवति तदा पूर्वपदस्य। अन्योन्यमिमे ब्राह्मणा भोजयन्ति। अन्योन्यस्य भोजयन्ति। इतरेतरं भोजयन्ति। इतरेतरस्य भोजयन्ति।

अन्योन्य-परस्पर-प्रभृतीनां शब्दानां प्रायेण पुंलिङ्गेष्वेव कर्मण्येव प्रयोगात् क्रमेण सर्वत्रैव चरमावयवस्यामन्तत्वं विधीयते स्म। एतेषां च क्रियाविशेषणकल्पत्वान्नैतल्लेशतोऽप्युद्वेजकमभूद्वि-पश्चिताम्। अत एवोक्तं वार्त्तिककृता—

स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावः इति।

व्याख्यातञ्चेदं भाष्यकारेण—

स्त्रीनपुंसकयोरुत्तरपदस्य वामभावो वक्तव्यः। अन्योन्यमिमे

ब्राह्मण्यौ भोजयतः। अन्योऽन्यां भोजयतः। इतरेतरं भोजयतः। इतरेतरां भोजयतः। अन्योऽन्यमिमे ब्राह्मणकुले भोजयतः। अन्योऽन्यां भोजयतः। इतरेतरं भोजयतः। इतरेतरां भोजयतः। इति।

उदाहरणेषु सर्वत्र कर्तुः क्रियायाश्चैकवचनव्यतिरिक्तत्वमेव सन्दृश्यते। अत एव सर्वतन्त्रस्वतन्त्रधिषणैर्नागेशभट्टपादैः कर्तरि कर्मव्यतिहारे [ १।३।१४ ] इति सूत्रस्य लघुशब्देन्दुशेखरे वर्णितम्—

द्विवचनबहुवचनान्तान्येवास्योदाहरणानि, न त्वेकवचनान्तानि। अत एव भाष्ये क्वाप्येकवचनान्तानि नोदाहृतानि। ...... लोके त्वेकवचनान्तम् [ व्यतिहे-पदम् ] असाध्वेव। इति।

इतरेतरान्योन्योपपदाच्च [ १।३।१६ ] इति सूत्रे परस्परशब्दस्यानुल्लेखात्, परस्परोपपदाच्च इति वार्त्तिकदर्शनात्, वार्त्तिकेष्वपि परस्परशब्दस्य प्रविरलप्रयोगात्, भाष्यकारेण चाप्युदाहरणेषु प्रायेण परस्परशब्दस्यानुपादानात् अन्योन्यादिशब्दत्रितये परस्परशब्दस्यैव चरम आत्मलाभः प्रतीयते। ( क्रमशः )

---

# सुभाषितसागरः

[ पण्डित एस् पार्थसारथिः ]

अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः।
सुजनस्य च निर्माणं जनयति न हि कस्य सन्तोषम् ॥१९॥ क-

अर्थः सुखं कीर्तिरपीह मा भू-
दनर्थ एवास्तु तथापि धीराः।
निजप्रतिज्ञामनुरुध्यमाना
महोद्यमाः कर्म समारभन्ते ॥२०॥

[ किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
　　किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किन्त्वङ्गीकृतमुत्सृजन् हि मनसा श्लाघ्यो जनो लज्जते
　　निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥
पाठान्तराणि । क । शेषस्य—कूर्मस्य । ख । उत्सृजन्न सहसा । ]

अहो महत्त्वं महतामपूर्वं विपत्तिकालेऽपि परोपकारः ।
यथास्यमध्ये पतितोऽपि राहोः कलानिधिः पुण्यमयं ददाति ॥२७क॥

[ पतितोऽपि राहुवदने तरणिर्बोधयति पद्मखण्डानि ।
भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ शा प ]

उत्तमा आत्मना ख्याताः पित्रा ख्याताश्च मध्यमाः ।
मातुलेनाधमाः ख्याताः श्वशुरेणाधमाधमाः ॥४३॥

[ धिग् जन्म तस्य य पित्रा लोके विज्ञायते नरः ।
यः पुत्रात् ख्यातिमभ्येति तस्य जन्म सुजन्मनः ॥
आत्मना ज्ञायते धन्यो मध्यः पितृपितामहैः ।
मातृपक्षेण मात्रा च ख्यातिमेति नराधमः ॥
　　　　मार्कण्डेयपुराणम् २१।९२]

उपकारिणि वीतमत्सरे वा
　　सदयत्वं यदि तत्र कोऽतिरेकः ।
अहिते सहसापराधलब्धे
　　सघृणं यस्य मनः सतां स धुर्यः ॥५२॥

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ।
अपकारिषु यः साधुः स साधुः सद्भिरिष्यते ॥५३॥

उपकारेण दूयन्ते न सहन्तेऽनुकम्पिताम् ।
आपत्स्वपि दुराराध्या नित्यदुःखा मनस्विनः ॥५४॥

[ नीतिशतकम् ६४ परहितेषु कृताभियोगाः । ]

काकैः सह प्रवृद्धस्य कोकिलस्य कला गिरः ।
खलसंयोगेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥६५॥

काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः ।
सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥६६॥

[ काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते ।
न तेषां सन्निधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥
हितोपदेशः ।

कातराः परदुःखेषु निजदुःखेष्वकातराः ।
अर्थेष्वलोभाः यशसि सलोभाः सन्ति साधवः ॥

[ अत्र साधवः सन्तीत्यनेन मृता अपि न मृतास्ते, इतरे पुनरमृता अपि मृता एवेत्यर्थाभिव्यक्तिद्वारा व्यज्यमाने साधूत्कर्षविशेष उपस्कारकोऽयम् । रसगङ्गाधरः ]

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥६७॥

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥६८॥

---

६७ क । खनन्ति । दहन्ति । ख । कोपकृतानुतापः । ग । भूरिविषयांश्च न लोभपाशाः । घ । वीरः ।

६८ । क । गीतशास्त्र- । ख । व्यसनेन हि, व्यसनेन तु ।

# ऋग्वेदे ऋक्संख्या

[ युधिष्ठिर-मीमांसकः ]

( ३

अथाध्ययने ऋक्संख्योच्यते—षण्णवत्यधिकचतुःशतदशसहस्राणि (१०४९६) ता नैमित्तिकद्विपदाश्चत्वारिंशदुत्तरशतसहिता दशसहस्राणि [षष्ट्यधिकपञ्चशतानि] १०७६६। संज्ञानमुशनावदत् सूक्तस्य पञ्चदश ऋच एकीकृत्य १०५८० एवं पारायणे ऋक्संख्या। ऋचां दशसहस्राणीति वचनस्य संख्या पूर्णा भवतीत्यर्थः। एका उर्वरिता, सा 'भद्रं नो अपि वातय मनः' (१०।२०।१) इति पादाधिक्यम् ( पृष्ठ २१ ) इति।

सन्त्यृग्वेदे कतिपया ऋचो यासु त्र्योऽर्धर्चाः श्रूयन्ते, ताश्च महिदासेन चरणव्यूहटीकायां ( पृष्ठ १९, २० ) चतुर्नवतिः परिगणिताः। तासामध्ययने द्वयोरर्धर्चयोरेकामृचं कृत्वा परिशिष्टमेकमर्धर्चं चैकामृचं मत्वा परिगणनं क्रियते। तथा सति चतुर्नवतिऋचामष्टाशीत्युत्तरं शतमृचः सम्पद्यन्ते। तदैवमृचां योग :—
१०४०२ द्व्यधिकचतुःशतोत्तरदशसहस्रमृचो बालखिल्यरहिताः, ९४ चतुर्नवति-संख्या च त्र्यर्धर्चानामृग्द्वयकल्पनयोत्पन्ना, नैमित्तिकद्विपदानां द्विपदारूपेण परिगणनाद् विवृद्धा ७० सप्ततिसंख्या, संज्ञानसूक्तं च पञ्चदशार्चम्। एवं १०५८१ एकाशीत्यधिक-पञ्चशतोत्तरदशसहस्रमृचः संजाताः। तत्र "भद्रं नो अपि वातय मनः" ( ऋ० १०।२०।१ ) इत्येकपदा ऋक्।

महिदासोक्तोपपत्तौ स्तो द्वे भ्रान्ती। तत्र प्रथमा महिदासेनात्र 'अध्ययने ऋक्संख्योच्यते' इत्युपक्रम्य नैमित्तिकद्विपदा अपि द्विपदात्वेन परिगणिताः। न च ता अध्ययने द्विपदात्वेन गण्यन्ते,

किं तर्हि चतुष्पदात्वेनेत्युक्तं पुरस्तात्। सिद्धान्तितं च तेन स्वयमन्यत्र—"हवने एकैका अध्ययने द्वे द्वे" इति "तास्त्वृचोऽध्ययनै चतुष्पदा कृत्वेत्यर्थः" इति च ( पृष्ठ १६ )। द्वितीया च—अनुवाकानुक्रमण्यां शौनकेन या १०४१७ सप्तदशाधिकचतुःशतोत्तरदशसहस्रमृचः परिगणितास्तत्र संज्ञानसूक्तस्य सन्निवेशो नास्तीत्युक्तं पुरस्तात्। अतोऽत्र संज्ञानसूक्तगतानामृचां संकलनमपि चिन्त्यम्।

छन्दःसंख्यापरिशिष्टोक्ता ऋग्गणना।

अस्ति कस्याश्चिदृक्शाखाया एकादशश्लोकात्मकं छन्दःसंख्यानामकं परिशिष्टम्। तत्र चेमे श्लोकाः—

एकपञ्चाशदृग्वेदे गायत्र्यः शाकलेयके।
सहस्रद्वितयं चैव चत्वार्य्येव शतानि तु ॥ १ ॥

त्रीणि शतानि सैकानि चत्वारिंशत्तथोष्णिहः।
अनुष्टुभां शतान्यष्टौ पञ्चाशत्पञ्चसंयुता ॥ २ ॥

बृहतीनां शतं ज्ञ यमेकाशीत्यधिकं बुधैः।
शतानि त्रीणि पङ्क्तीनां द्वादशाभ्यधिकानि तु ॥ ३ ॥

पञ्चाशत्त्रिष्टुभः प्रोक्तास्तिस्रश्चैव ततोऽधिकाः।
सहस्राण्येव चत्वारि विज्ञेयं तु शतद्वयम् ॥ ४ ॥

चत्वारिंशत्तथाष्टौ च तथा चापि शतत्रयम्।
जगतीनामियं संख्या सहस्रं तु प्रकीर्तितम् ॥ ५ ॥

दशैवात्यतिजगत्योऽपि तथा सप्त न संशयः।
शक्वर्योऽपि तथैवोक्तास्तथा नव विचक्षणैः ॥ ६ ॥

नव चैवातिशक्वर्यः षडष्टयः प्रकीर्तिताः।
अशीतिश्च चतस्रश्च तथात्यष्टिऋचः स्मृताः ॥ ७ ॥

धृतिद्वयं विनिर्दिष्टमेकातिधृतिरेव च ।
एकपदास्तु षट् प्रोक्ता द्विपदा दश सप्त च ॥ ८ ॥
प्रगाथा बार्हता येऽत्र तेषां शतमुदाहृतम् ।
चतुर्नवतिरेवोक्तास्तद्वद् द्वृचास्त्वसंशयाः ॥ ९ ॥
काकुभानां तु पञ्चाशद् विज्ञेया पञ्चसंयुता ।
महाबार्हत एवैक एवं सार्धशतद्वयम् ॥ १० ॥
एवं दश सहस्राणि शतानां तु चतुष्टयम् ।
ऋचां द्व्यधिकमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥ ११ ॥ इति ।

एवमन्त्यं विहाय दशसु श्लोकेषु गायत्र्यादिच्छन्दोऽनुसारमृक्-संख्या परिगणिता । तथाहि—गायत्र्यः २४५१ एकपञ्चाशदधिक-चतुःशतोत्तरद्विसहस्रम्, उष्णिहः ३४१ एकचत्वारिंशदुत्तरत्रिशतम्, अनुष्टुभः ८५५ पञ्चपञ्चाशदधिकाष्टशतम्, बृहत्यः १८१ एकाशीत्यधिकैकशतम्, पङ्क्तयः ३१२ त्रीणि शतानि द्वादश च, त्रिष्टुभः ४२५३ चत्वारि सहस्राणि द्वे शते त्रिपञ्चाशच्च, जगत्यः १३४८ अष्टचत्वारिंशदधिकत्रिशतोत्तरैकसहस्रम्, अतिजगत्यः १७ सप्तदश, शक्वर्यः १९ एकोनविंशतिः, अतिशक्वर्यो ९ नव, अष्टयः ६ षड्, अत्यष्टयः ८४ चतुरशीतिः, धृती २ द्वे, अतिधृतिर १ एका, एकपदाः ६ षट्, द्विपदाः १७ सप्तदश, बार्हताः प्रगाथाः १९४ चतुर्नवत्यधिकशतम्, काकुभाः प्रगाथाः ५५ पञ्चपञ्चाशत्, महा-बार्हतः प्रगाथः १ एकः । तत्संकलय्यैकादशे श्लोके द्व्यधिकचतुः-शतोत्तरदशसहस्रमृचः शाकलेयक ऋग्वेदे परिसंख्याताः । एतद्विषये चैतरेयालोचने सत्यव्रतसामश्रमिणाऽलेखि—

छन्दःसंख्योल्लिखितोक्तसर्वसंकलनसंख्या तु प्रतिच्छन्दःसंख्या-तोऽपि विरुद्धैव प्रतीयते । तद्यथा तत्रोक्तं श्लोकैः—गायत्र्यः......

( पूर्ववदेव, अयं तु विशेष :— ) शक्वर्यो ९ नव, ...... महाबार्हतः प्रगाथः १ एकः। तदेवं तदुक्तप्रतिच्छन्दःसंख्यानां संकलनया १०१४२ ( द्विचत्वारिंशदधिकशतोत्तरदशसहस्रम् ) ऋचः स्युः। पूर्वप्रदर्शितश्लोकतस्तु गम्यन्ते १०४०२ ( द्व्यधिकचतुःशतोत्तरदश-सहस्रम् )। तदत्र प्रायः सर्वत्र संकलनभ्रमोऽस्माभिर्ग्रन्थदृष्ट्या प्रमाणित एव ( पृः १४३ ) इति।

अत्र सामश्रमि-महाभागस्य द्विविधो भ्रमोऽभूत्। प्रथमः—षष्ठश्लोकस्योत्तरार्धे "तथा"-पदं द्विरुक्तम्, तत्राद्यं पूर्वार्ध-गतायाः अतिजगतीगणनायाः निर्देशकम्, अपरं प्रागुक्तायाः दश-संख्यायाः समुच्चायकम्। तत्रातिजगतीवच्छक्वरीछन्दांस्यपि गणनीयानीत्यभिप्रेयते। सामश्रमि-महोदयेन पुनः एकोनविंशति-स्थाने नवैव शक्वर्यः परिगणिताः। द्वितीयश्च—नवमे श्लोके विस्पष्टं प्रगाथा द्व्यृचा उक्ताः, अतस्तेषां पञ्चशतम् ऋचः सम्पद्यन्ते ऋक्सर्वानुक्रमण्याः परिभाषाप्रकरणेऽपि—"बृहतीसतोबृहत्यौ ...महाबार्हतः" इत्यादिसूत्रै र्व्यक्तं द्व्यृचानां प्रगाथत्वमुच्यते। भगवता पाणिनिनाऽपि "सोऽस्यादिरिति छन्दसः प्रगाथेषु" ( ४।२।५५ ) इति सूत्रयता प्रगाथानामनेकर्चत्वं प्रत्यपादि। तदविज्ञायैव साम-श्रमिणा सार्धद्विशतप्रगाथानां सार्धद्विशतर्च एव परिगणिताः। वैदिकमुनिहरिप्रसादोऽपीत्थमेवाविचार्य्य सामश्रमिणमनुससार।

छन्दःसंख्यापरिशिष्टोक्तगणनायां चत्वारिंशदुत्तरशतं नैमित्तिका द्विपदा ऋचः चतुष्पदीकृत्य सप्ततिर्मताः। यास्तत्र सप्तदश द्विपदाः स्मर्यन्ते ता नित्या द्विपदाः। इत्थं द्विपदापक्षे सप्तत्यृचो द्विगुणी-कृत्य परिगणने १०३७२ द्विसप्तत्यधिकचतुःशतोत्तरदशसहस्रा ऋचो भवन्ति। अत्र बालखिल्यानामशीतिऋचां सन्निवेशो न विद्यते। कदाचित् छन्दःसंख्यापरिशिष्टं शाकलचरणान्तर्गताया-

स्ताद्दशशाखायाः स्याद् यस्यां बालखिल्या ऋचो न स्युः। शैशिरीयशाखायास्तु नेदं सम्भवति, यतस्तत्रानुवाकानुक्रमण्यनुसारं पञ्चदशर्चोऽधिकाः सन्ति।

( क्रमशः )

---

ॐ

# ॥ श्रीशिवनाड़ी-महाहोराग्रन्थः ॥

( श्रीपरदेवतापरावतार-शेषमहामुनिविरचितः )

[ अनुवादकः परिशोधकश्च—पण्डित-द्विवेदि-नारायण-शास्त्री शिवनाडीप्रवीणः ]

## भूमिका

### अस्मिन् ग्रन्थे विशिष्टविषयाः

(१) आमुखविभागः।

(२) दशान्तर्दशाफलविभागः।

(३) राशिकूटविभागः।

(४) युतिचारदृष्टिफलविभागः।

(५) आनन्ददाम्पत्यविभागः।

(६) शाक्तेयबिन्दुकविभागः।

(७) ग्रहराशिसमाख्याविभागः।

(८) ग्रह-जप-दानादिविभागः।

(९) कवचविभागः।

एवमेष महोत्कृष्टज्योतिषग्रन्थः।

पण्डित—द्विवेदिनारायण शास्त्री।

प्रार्थना

वन्दे शैलपतिं रविं सुरगुरुं वन्दे शशीभूसुतौ।
वन्दे दैत्यगुरुं शनिं शशिसुतं वन्दे तमःकेतुकौ॥

होराशास्त्रमिदं सुभाषितवचःसाम्राज्यदं हीश्वरम्।
निर्विघ्नाय नमस्करोमि शिवनाड़ीग्रन्थदैवज्ञकम्॥

वन्दे रुद्रं रविं चन्द्रं भौमं राहुं च वाक्पतिम्।
छायापुत्रं बुधं केतुं ध्यायेदिष्टफलाप्तये॥

नारायणपण्डितीयम्

नीहारहारघनसारसुधाकराभां कल्याणदां कनकचम्पकदामभूषाम्।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं वाणीं नमामि मनसा वचसां विभूत्यै॥

———

## महाकालीध्यानम्।

श्रीबालारुणकोटिकान्तिमनिशं वीरासनाध्यायिनीं
हस्ते मस्तकखड्गधारिणि (?) शिवां सौन्दर्यरूपप्रियाम्।
निर्धूताखिलघोरराक्षसवरीं दैवज्ञरूपेश्वरीं,
कालीं भक्तजनस्वरूपिणिकृतां (?) दैवज्ञनाड़ीश्वरीम्॥

एष ग्रन्थोऽपरूपः अमुद्रितश्च। शेषमुनिस्तु बालकः प्राक्तनजन्मवासनया श्रीपरदेवता-महाकाली-कटाक्षप्रत्यक्षसाक्षात्कारं लब्ध्वा वह्नौ गुग्गुलधूपं कृत्वा काकपत्रं निक्षिप्तं चेत् श्रीपरा शक्तिः(?) "महाकालीकुट्टी" इति देवनागरलिपिहस्तलेखनेन अदृश्यभावमनोरथफलप्राप्तिं लिखन्ती आसीत्।

एष बाल्य एव विंशतिवत्सरेभ्यो वयसः अर्वागेव इह देह-

मुत्सृज्य तेजोमूर्तिरासीत्। एष बालोऽपि वन्दनीयप्रज्ञाधुरन्धरः। भूलोके तस्य नामरक्षणाय एष ग्रन्थ उदाहृतः।

अपि च मञ्जूषापत्रिकाधिपतिभिः श्रीक्षितीशचन्द्रचट्टोपाध्याय-महोदयैः संस्कृतपत्रे भवदीयशिवनाड़ीज्योतिषग्रन्थविषयम् अपश्याम अस्मत्पत्रिकायामपि भवदीयग्रन्थप्रबन्धव्यासादिकं प्रकटीकर्तुमिच्छामः, प्रेषणीयमित्युक्तत्वात् तेषां महोपकार-कृतज्ञतां पुरस्कृत्य लोकोपकाराय पत्रिकायां प्रतिमासं प्रकटनार्थं प्रेष्यते एष ग्रन्थः।

---

आदौ शुक्रदशामारभ्य दशान्तरदशाग्रहफलानि लिख्यन्ते। शुक्रस्य देवीमूर्तित्वात् प्रथमतः शुक्रदशाफलानि प्रारभ्य क्रमशः ग्रह-दशाफलादिकं निरूप्यते। "शिवनाड़ी कलौ मता" इति श्रीदेवी-वचनम्।

शुक्रदशायां शुक्रान्तरफलम्।

जन्मेशे यदि केन्द्रकोणसहिते मित्रालये वीक्षिते
राज्ये वाक्यगते धनाधिपयुते कामान्धकारी भवेत्।
ब्राह्मणीगमनादिकं प्रभुगृहे सम्मानमाप्नोति वा
ह्यन्यस्त्री-गमनादिकं भवति वा लक्ष्मी-कटाक्षो भवेत्॥
आरामस्थापनासक्तो मित्रसम्मानमाप्नुयात्।
वापीकूपतटाकादीन् निर्मातुं चेहते नरः।
राजयोगमवाप्नोति विदेशगमनं भवेत्॥
सर्वकार्यार्थसिद्धिः स्याद् रत्नभूषणधारणम्।
दासीजनैः समायुक्तः शुक्रे शुक्रान्तरं गते॥

अर्थः। शुक्रस्तु लग्नाधिपतिरपि केन्द्रकोण ( १, ४, ५, ७, ९,

१० , स्थानेषु स्थितोऽपि मित्रगृहे स्थितोऽपि मित्रैः दृष्टोऽपि दशमस्थाने द्वितीयस्थाने वा स्थितोऽपि धनाधिपतिना युक्तोऽपि कामान्धः ब्राह्मणस्त्रीगामी, मित्रसम्मानितः स्त्रीलोलः लक्ष्मीकटाक्षवान् आराम-वापीकूपतटाकनिर्माणादिधर्मकार्यपरः राजयोगवान् तत्र तत्र भ्रमण-शीलः कार्यसिद्धिमान् रत्नभूषणधारी दासदासीजनयुतः भवेत् ।

---

# संहिता-विमर्शः

[ श्रीमती चिन्मयी पाठकः ]

"परः सन्निकर्षः संहिता ।" सन्निकर्षः सामीप्यम्, अर्ध-मात्राधिककालव्यवधानाभाव इत्यर्थः । एवं स्वरव्यञ्जनात्मकानां वर्णानां परस्परं सन्निकर्षेण यः संयोग एकवर्णसङ्घातीकरणं स सन्धिः ।

द्रुतोच्चारणकाले द्वयोर्वर्णयोरन्तर्गतावकाशे क्षीणीकृते सति पूर्व-वर्णस्वरः पश्चाद्वर्णस्वरेण सह संयुज्यते ; एवं मिथः संयोगेन प्रायेणापूर्वः कश्चित् स्वरः समुद्भवति । यथा मुनि इन्द्र इति पदद्वयं यदा द्रुतम् उच्चारयामस्तदा स्वाभाविकोच्चारणदशायां मुनीतिपदस्य अन्त्येकारोच्चारणानन्तरं इन्द्र इत्यस्य आद्येकारोच्चारण-पर्यन्तं यद् व्यवधानं वर्त्तते तत् स्वल्पीभवति । तेन वर्णद्वय-विभाजकविरामाभावात् पूर्ववर्णस्वरस्य पश्चाद्वर्णस्वरेण सह संश्लेषात् मुनीन्द्र इति ईकार उत्पद्यते । अत एव सन्धिर्नाल-ङ्कारादिवत् कविचातुर्यं नापि समासवद् वैकल्पिकः किन्तु वर्ण-प्रयोगसमकालमेव स्वत उत्पन्नः । अनेनैव हेतुना सन्धिः सार्व-कालिकः सार्वदेशिकश्चेति न केवलं संस्कृतवाचि परं निखिल-

देशभाषासु तस्य स्थितिर्लक्ष्यते। प्रागैतिहासिके कालेऽपि सन्धिः प्रचलित आसीत्, किमु वक्तव्यं लौकिकवैदिकेषु।

सन्धि र्न समासवत् पदगतसामर्थ्यमपेक्षते। यतः सन्धिर्वर्णधर्मी। यथा तिष्ठतु दध्यानय तक्रमित्यत्र दधि आनय इति पदद्वयस्य 'तिष्ठतु दधि' 'आनय तक्रम्' इति वाक्यद्वयगतत्वात् सामर्थ्याभावेऽपि सन्धिः सम्भवति, केवलं सन्ध्युज्जीवकवर्णसंस्थानात्। सामर्थ्याभावे तु समासो नैव प्रायेण सम्भवति, समासस्य पदविधित्वात्, पदविधेश्च समर्थाश्रितत्वात्। इत्थं हि सन्धिसमासयोर्भेदो निर्णीयते।

सन्धिः प्रायो द्विविधः स्वरसन्धिर्व्यञ्जनसन्धिश्चेति। तत्राद्यः केवलं स्वरवर्णाश्रयः द्वितीयस्तु स्वरव्यञ्जनवर्णसंकीर्णरूपः। क्रमेणोदाहरणानि यथा—शश अङ्क इत्यत्र उभयोरेव अवर्णयोः संघाते स्वरसन्धिः। स्वरव्यञ्जनयो र्यथा धावन्+अश्वः धावन्नश्व इति। अत्र न इति व्यञ्जनेन सह अ इति स्वरवर्णस्य संयोगः। एवं व्यञ्जन-व्यञ्जनयो र्यथा महच्चक्रम्। महत् चक्रम् इति उभयोरेव तकार-चकाररूपयोः व्यञ्जनयोः संघातः। एतद्द्वयातिरिक्तोऽपरः प्रकारोऽस्ति, स च विसर्गेण सह स्वरव्यञ्जनवर्णयोः। विसर्गस्वरयो र्यथा हरिः अयम् हरिरयमिति। विसर्गव्यञ्जनयो र्यथा हरिः शेते हरिश्शेते इति। यद्यपि विसर्गस्य व्यञ्जनात्मकत्वाद् विसर्गसन्धिर्व्यञ्जनसन्धावन्तर्भूतस्तथापि प्राधान्येन हेतुना विसर्गसन्धेः पृथङ्निर्देशः क्रियते। तेन हि पाणिनिप्रमुखैर्व्याकरणाचार्यैः सन्धित्रितयमङ्गीकृतम् अच्-सन्धिः हल्-सन्धिः विसर्गसन्धिश्चेति।

किं सन्धिर्नित्य आहोस्विद् वैकल्पिक इति हि व्याकरणविदां संप्रश्नः। अत्र समाधानमाहुः—

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥

संहितैकपदे यथा—ने अनम् नयनमिति। धातूपसर्गयोर्यथा प्रति अगच्छत् प्रत्यगच्छत्। समासे यथा देवानामालयः—देव आलयः=देवालयः। यद्यपि वाक्ये सन्धिः वैवक्षिकस्तथापि पादान्तपादाद्योः सन्धि नित्योऽर्धान्तवर्जम्। क्वचित् स्थलान्तरेऽपि सन्धिकार्य्यं निषिद्धम्। लौकिकेषु तु यत्र यत्र नित्यसन्धित्वं शास्त्रतो विहितं तत्र तत्र सन्धिभङ्गो दोषाय एव। यत्र तु विभाषाश्रयस्तत्र तु श्रवणसुखानुरोधेन सन्धिकार्य्यं क्रियते।

---

## संहिता-विमर्शः

[ श्रीमती अञ्जलि सेनः ]

पाणिनिना सन्धिलक्षणं कृतं 'परः'सन्निकर्षः संहिते'ति। पूर्व-वर्णोच्चारणानन्तरमेव यद् वर्णान्तरमुच्चार्यते अव्यवधानेनैव, तत्र स सन्निकर्षः संहितासंज्ञः स्यात्। वर्णयोर्यदन्तरमस्ति द्रुतोच्चारण-काले तद्व्यवधानस्य विलोपनेन वर्णयोः संयोगसाधनेन उच्चारण-सौकर्यं तथा प्रयत्नलाघवञ्च सम्पद्येते।

दृश्यते—वर्णाः हि व्यष्टिगतत्वेन विरामेण भिन्नप्रयत्नेन न उच्चार्यन्ते। यथा लेखनवेलायां तूलिकानपसारणेन हि वर्णोत्तरं वर्णो लिख्यते प्रयत्नलाघवाय, तथा उच्चारणवेलायामपि अव्यव-धानेन अविरामेण च वर्णा उच्चार्यन्ते प्रयत्नलाघवाय। तस्मात् सन्धे द्वे एव फले स्याताम्, समीभवनं तथा श्रुतिध्वनिः। समीभवनञ्च[1] त्रिप्रकारकम्—प्रगतं[2] परागतम्[3], अन्योन्य[4]ञ्चेति।

---

१ Assimilation २ Progressive ३ Regressive ४ Mutual

पूर्ववर्णप्रभावात् परवर्णस्य यद् रूपान्तरं तत् प्रगतं, परवर्ण-प्रभावात् पूर्ववर्णस्य रूपान्तरञ्च परागतम्, अथ च उभयोरपि परस्परप्रभावबलेन परिवर्तनमन्योन्यसमीभवनम्। एवं मनवर्णयोः सावर्ण्याभावेऽपि दृश्यते म-त-वर्णयोस्तथा म-द-वर्णयोः संहितायां म स्थाने नो भवति। ओष्ठ्यवर्णस्य मकारस्य दन्त्यवर्णस्य च तकारस्याव्यवधानेनोच्चारणे प्रयत्नगौरवं स्यात्, तस्मात् न् त् इति द्वयोः दन्त्यवर्णयोः अव्यवधानेन उच्चारणे प्रयत्नलाघवात् न् त् इत्येवं-रूपेणोच्चार्यते।

तथा च यदा अघोषघोषवद्वर्णयो रेकतरा भिन्न-प्रयत्नलभ्यवर्णस्य सन्निकर्षं लभते तदा तयोरुच्चारण-प्रयत्नयो-र्विभेदं निराकृत्य साम्यं सम्पाद्यते। अन्यवर्णः अन्यस्य धर्मं धर्मान् वा गृहीत्वा तेन समतां याति।

श्रुतिध्वनिश्च[१] अविरतभावेन वर्णोच्चारणकाले वर्णयोरन्त-रालेऽविद्यमानस्यापि अपरस्य कस्यचित् वर्णस्योच्चारणम्। स च भिन्नवर्णयोः स्थानासाम्ये सति अन्यवर्णोच्चारणात् परम् अन्य-वर्णोच्चारणकाले तयोरन्तर्वर्तिनो विरामस्य ध्वनिरूपेण प्रकाश एव। एवं कदाचिद् दृश्यते—न-वर्णोच्चारणानन्तरं रेफोच्चारण-काले न-वर्णात् कश्चिद् द-वर्ण उच्चार्यते, तच्च उच्चारण-सौकर्यार्थम्। यथा वैदिक-सूनर-शब्दात् संस्कृतभाषायां सुन्दर-शब्दस्योद्भवः। द् इति अधिकवर्णागमे च न परिश्रमगौरवं, किन्तु लाघवमेव। एवं सन्धिः प्रयत्नलाघवमुच्चारणसौकर्यञ्च साधयति।

---

१ Glide

# संहिता-विमर्शः

[ R. Antoine S. J. ]

यथा प्राण्यवयवाः सन्धीयन्ते तथार्थवति वाक्येऽपि पदादीन्यङ्गानि सन्धीयन्ते। स्वभावतो मनुष्योऽल्पप्रयत्नशीलः। यदा स भाषया स्वचित्तं प्रकटयति तदा स उच्चारणायासं यथासम्भवं न्यूनीकरोति। यद्यपि सर्वासु भाषासु सन्धिः प्रवर्त्तते तथापि सुरभारत्यां संहिता अतिविततविषया भवति।

'परः सन्निकर्षः संहिता' इति लक्षणाद् वर्णानां सन्निधौ सति सदृशतमेनादेशेनोच्चारणायासो न्यूनीक्रियते। सदृशतमत्वं तु किमपेक्षम् इति चेत्, 'स्थानेऽन्तरतमः' इति जागर्ति सूत्रम्। सादृश्यं हि चतुर्विधम्। तात्वादिस्थानसादृश्यं नादघोषादिगुणसादृश्यं ह्रस्वत्वादिप्रमाणसादृश्यमर्थसादृश्यं च। 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीय' इति यदुच्यते तेन स्थानसादृश्यं गुणादिसादृश्यापेक्षया बलवदित्यवगम्यते। यथा 'वाग् हरिः' इति प्रसङ्गे हकारस्यादेशः स्थानसादृश्यमपेक्ष्य कवर्गीयेण केनापि वर्णेनेति लभ्यते। क, ख, ग, घ, ङ इति हि सर्व स्थानेन हकारस्य सदृशाः। गुणसादृश्यानुसारेण ककारः खकारश्चाघोषौ इति बहिष्क्रियेते। गकारघकारयोर्घोषवतोरपि घकारो महाप्राण इति हकारस्य सदृशतरः। अत एव हकारस्यादेशो घकारो भविष्यति।

विवक्षितार्थस्य संक्रान्तिर्यदि भाषाया अभिप्रायो भवति तर्हि यत्र संहिता संक्रान्तेर्विरोधिनी वर्तते तत्र सापास्येत। एवमेव सति प्रकृतिभावः सम्भवति। प्रकृत्या स्वभावेन स्पष्टताहेतोर्वक्ता यदा सन्निहितौ स्वरौ न सन्दधाति तदा प्रकृतिभावः सन्ध्यभावो दृश्यते।

'प्लुतप्रगृह्या अचि नित्य'मिति सूत्रेण भाषायाः स्वाभाविकी प्रवृत्तिरेव प्रकाश्यते ।

हल्-सन्धिप्रकरणे अन्या स्वाभाविकी प्रवृत्तिः प्रकट्यते । यत्र सन्निहितयोर्वर्णयोः सादृश्यं सम्पादयितुं न शक्यते तत्रान्येनोपायेनोच्चारणायासो न्यूनीक्रियते । नद्यास्तीरान्नद्यास्तीरं यथा नाविक उडुपेन तरति तथा वर्णाद्वर्णं वक्तानायासेन सर्पति । 'ङ्णोः कुक् टुक् शरि' इत्यादिभिः सूत्रैस्तादृक् सर्पणं दर्शितम् । समग्रं सन्धिप्रकरणं चतुर्भिस्तत्त्वैः संक्षिप्यते ।

१ । उच्चारणायासो न्यूनीकर्तव्यः ।

२ । सादृश्यसम्पादनेनोच्चारणायासस्य न्यूनीकरणम् ।

३ । स्पष्टताहेतोर्यत्र सन्निहितौ वर्णौ न सन्धीयेते तत्र प्रकृतिभावः ।

४ । सादृश्यसम्पादनाभावे मध्यस्थवर्णोऽन्तर्यम्यते ।

---

# पृच्छाया उत्तरम्

ग० वा० पलसुले-महोदयस्य पृच्छाया उत्तरम्—

'प्रकृतिषु * * * न कोपि अन्योन्यम् अद्वेट्' इति वाक्यं नोपपद्यते, कर्त्तुरनेकत्वे एव अन्योन्यशब्दप्रयोग-सम्भवात्—इत्याशङ्कितम् । तत्रोच्यते—यथा 'इदं द्वन्द्वम् अन्योन्यं ( परस्परं वा ) द्वेष्टि' इति प्रयोक्तुं शक्यते, तथा अत्रापि सङ्घपदमध्याहृत्य प्रकृतिषु न कोपि सङ्घः अन्योन्यम अद्वेट् इति समर्थयितुं शक्यते, शब्दतः कर्तुरेकत्वेऽपि वस्तुगत्या कर्तुरनेकत्वात् । प्रयुक्तं च कालिदासेन ( रघुवंश ३।१४ ) 'परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत्' इति ।

व्याख्यातं च मल्लिनाथेन—'इदं द्वन्द्वं मिथुनम् परस्परेण न अयोजयिष्यच् चेन्न योजयेद् यदि' इति। तत्र णिच्-प्रकृत्यर्थकर्तृत्वमेकस्यैव द्वन्द्वस्य दृश्यते। तत्र च अन्योन्यशब्दार्थकः परस्परशब्दप्रयोगोऽपि दृश्यते।

श्रीरघुनाथ शास्त्री
ग० स० कलेज, बनारस।

प्रकृतिषु न कोऽप्यन्योऽन्यमद्वेट् इति वाक्ये प्रकृतिशब्दः प्रजावाचीति प्रतीयते। अत एव पलसुले-महोदयेनोक्तम्—कोऽपि अन्योन्यम् * इति विप्रतिषिद्धमिति। अघटनसङ्घटनपटीयसाध्याहारेण तु यत् किञ्चिदपि विधातुं शक्यते, माता पूज्या इति वाक्ये पुत्रस्येत्यध्याहारेण भार्य्या पूज्येत्यर्थकरणमप्यध्याहारबलेन विनैवायासं संसिध्यति। अर्थावगत्यर्थः खलु शब्दप्रयोगः। अतो यथा श्रवणसमनन्तरमेव विस्पष्टतयार्थस्य प्रतीतिः स्यात् तथैव वाक्यं प्रयोक्तव्यम्। कालिदासेन च सुविस्पष्टं द्वन्द्वशब्दः प्रयुक्त इति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं स्फुटमेव। अत एव वैयाकरण-करिकेसरिणो रघुनाथशास्त्रिमहोदयस्य समर्थनं क्लिष्टमिवाभाति। अस्माकं

---

*"आधुनिकप्रणाल्या संस्कृतमधीयानानां बालानां कृते विरचित एकस्मिन् पुस्तके 'प्रकृतिषु ... न कोऽपि अन्योन्यमद्वेट्' इति प्रयोगो दृक्पथमायाति। स च चिन्त्य इवाभाति। तथाहि अन्योन्यशब्दोऽत्र परस्परकरणद्योतनाय प्रयुक्तः तच्च कर्त्रनेकत्व एव सम्भवति। यथा देवदत्तो यज्ञदत्तं द्वेष्टि, यज्ञदत्तोऽपि देवदत्तं द्वेष्टि। अत्र शक्यते एव वक्तुं 'देवदत्तयज्ञदत्तौ अन्योन्यं द्विष्टः' इति। यदा वा बहवोऽन्योन्यं द्विषन्ति तत्रापि शक्यते वक्तुं 'सर्वेऽप्येते अन्योन्यं द्विषन्ति' इति। एवं सति यत्रान्योन्यकरणमभिप्रेतं तत्रानेकत्वविशिष्टस्यैव कर्तुः प्रयोगो न्याय्यः, यत्र तु कर्त्रैकत्वविवक्षा तत्रान्योन्यशब्दो न प्रयोक्तव्य इत्यर्थादेवायाति। कर्त्रैकत्वविवक्षा च अन्योन्यशब्दप्रयोगश्च इति विप्रतिषिद्धम्'' इति।

मतेन सर्वथेदृशाः प्रयोगाः परिहार्या एव। यदि साधुत्वं साधनीयमित्याग्रहस्तर्हीत्थम्—"स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः" इत्यमरवचनात् प्रकृतिशब्दः स्वाम्यादिराज्याङ्गवचनः। तत्र अमात्याः परस्परं नाद्विषुः, सुहृदः परस्परं नाद्विषुरित्येवं प्रातिस्विकरूपेण स्वाम्यमात्यादीनामवबोधनाय "कोऽपि" इत्यत्रैकवचनं प्रयुक्तमिति। मन्ये एतदेव शास्त्रिमहोदयस्याभिप्रेतमिति। इति श्रीक्षितीशचन्द्रशर्मा।

---

# पुस्तकपरिचयः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

**जयदाम।** जयदेवविरचितच्छन्दोग्रन्थस्य जयकीर्तिकृतस्य च्छन्दोऽनुशासनस्य केदारभट्टविहितस्य वृत्तरत्नाकरस्य हेमचन्द्र-प्रणीतस्य च च्छन्दोऽनुशासनस्य संग्रहात्मको ग्रन्थः। श्रीहरिदामोदर-वेलाङ्करेण संस्कृतः। Poona Oriental Book House 330A Sadashiv Peth, Poona 2 इत्यतो लभ्यमिदं "जयदाम"। पृष्ठानि Demy 8vo., viii + 60 + 173। मूल्यं रूप्यकदशकम्।

विद्वद्वृन्दवन्दनीयस्याध्यापकप्रवरमूर्धन्यस्य हरिदामोदर-वेलाङ्करमहोदयस्य भक्तिमद्भिश्छात्रैः पुण्यपत्तने "हरितोष-समितिः" संस्थापिता। समित्या चानया प्राच्यविद्याप्रचारसमुत्सुकया "हरितोष-ग्रन्थमाला" प्रकाशनीयेति निर्णीतम्। तस्या एव ग्रन्थमालाया आदिमं पुस्तकं "जयदामे"ति। जयदेव-जयकीर्त्योर्ग्रन्थावद्यापि न मुद्रणपथमवतीर्णौ। वृत्तरत्नाकरो बहुशो मुद्रितोऽपि

पाठान्तरादिसन्निवेशेन सम्यङ् न संस्कृतः । हेमचन्द्रच्छन्दोऽनुशासनमपि सुदुर्लभम् । अत एवैतेषां सम्यक्तया सम्पादनेन महदेवोपकृतं संस्कृतसाहित्यानुरागिणां वेलाङ्करमहोदयेनेति तस्मै सहस्रशो धन्यवादा वितीर्यन्ते। सुविस्तीर्णेऽत्रत्योपोद्घाते वैदिकानां लौकिकानां च च्छन्दसामुत्पत्तिं परिपुष्टिं चाधिकृत्य प्रवर्तितो विचारः कस्य वा सचेतसश्चेतो न चमत्कुर्यात्। अन्ते च सन्निविष्टानि गणानुसारतश्छन्दांसि भृशमेवोपकरिष्यन्ति च्छन्दोऽनुरागिणाम्।

गुणगणगरिष्ठस्यास्य ग्रन्थस्य कतिचित् स्खलितानि समालोचकधर्ममनुपालयद्भिरस्माभिरिह प्रदर्श्यन्ते, परं न खल्वेतैर्लेशतोऽप्यपकृष्यते पुस्तकस्योपादेयत्वमिति विभाव्यतां वाचकमहाभागैः।

अत्र जयदेवच्छन्दसष्टीकायाः प्रारम्भ उपलभ्यते—

शंकरं शाश्वतं सौरिं प्रणम्य विवृणोम्यहम्।
जयदेवानि सूत्राणि स्वरूपविधिना स्फुटम्॥

इति। अत्र तृतीयचरणे 'जयदेवीयसूत्राणि' इति वा 'जयदेवस्य सूत्राणि' इति वा 'जायदेवानि सूत्राणि' इति वा पाठः स्यात्।

अस्मिन्नेव प्रथमे पृष्ठे दृश्यते—

"गायत्र्येव गायत्रम्। प्रज्ञादित्वात् स्वार्थे अण् (पा० ५. ४. ३८) अथवा च्छन्दसः प्रत्ययविधानो नपुंसकात् स्वार्था इत्यण" इति।

अत्र टीकाकृता "छन्दसः प्रत्ययविधाने नपुंसकात् स्वार्थ उपसंख्यानम्" [४।१।५५।१] इति वार्त्तिकमुद्धृतम्। तदनुसारेण प्रमादशबलितोऽयं पाठः संशोधनीयः।

अस्मिन्नेव पृष्ठे भर्तृहरेर्नीतिशतकगतः सुप्रथितः श्लोक इत्थं समुद्धृतष्टीकाकृता—

केयूराणि न भूषयन्ति पुरुषं हाराश्च चन्द्रप्रभाः
न स्नानं न च वर्णको न कुसुमं नाकुण्ठिता मूर्धजाः।

एका वाक् समलङ्करोति पुरुषं या संस्कृता भाष [ष्य? स?] ते
क्षीयन्ते किल भूषणान्यभरणा वाग्भूषणं त्वक्षयम् ॥

इति। अत्र प्रथमतस्तावत् प्रथमपादान्तद्वितीयपादाद्योः सन्धिरपेक्षितः, तेन च चन्द्रप्रभाः इत्येतस्य विसर्जनीयस्य लोपो विधेयः। ततश्च चतुर्थचरणगतः "क्षीयन्ते किल भूषणान्यभरणा" इति पाठः शोधनीयः। 'भूषणान्यमरहो' इति द्वितीयपुस्तके पाठ इति पादटीकातोऽवगम्यते। कदाचित् "क्षीयन्तेऽखिलभूषणान्यहहहा वाग्भूषणं त्वक्षयम्" इति टीकाकृदभिप्रेतः पाठः स्यात्। 'अमरणा वाग् तु अक्षयं भूषणम्' इत्यतोऽप्यर्थउ-प्रतीतिर्भवति।

द्वितीयपृष्ठे "तादर्थ्ये च चतुर्थी" इत्यत्र चकारोऽनपेक्षित इति प्रतिभाति।

द्वितीयपृष्ठे टीकाकृतोक्तम्—छन्दांस्यभिधेयानि। तत्परिज्ञानं प्रयोजनम्। वैदिका ( + ना ) मुपस्थानादौ विनियुक्तानां गायत्र्यादीनां परिज्ञानस्य पुरुषार्थसाधनविधि पधिव्य ( ? ) धिकारित्वसंपत्त्या स्वर्गाद्यवाप्तिप्रयोजनमिति। तथाचच्छन्दोज्ञानस्याधिकारश्रुतिरियं दर्शयति। यो हि वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वा अध्यापयति वा स्थाणुं वांछति ( वार्छति ) गंत्तं ( गर्तं ? ) वा प्रपद्यते प्र वा मीयते। पापीयान् स भवति। यातयामान्यस्य छन्दांसि भवन्तीति।

अत्र "पुरुषार्थसाधनविधिविहिताधिकारित्वसम्पत्त्या स्वर्गाद्यवाप्तिः प्रयोजनम्। .. यो ह... वाध्यापयति वा स्थाणुं वर्छति गर्तं वा पद्यते" इति शुद्धः पाठ इति प्रतिभाति। अत्रत्यं वचनमार्षेयब्राह्मणस्यादितः समुद्धृतम् "यो ह वा" इत्यत्र यो वा-शब्दः सन्दृश्यते स परमार्थतो वै-शब्दः सन्धिवशेन

वारूपः सञ्जातः। "याजयति वा अध्यापयति" इत्यत्र यो वाकारः स "वा" एव, अत एव सन्धौ "याजयति वाध्यापयती"त्यपेक्षितम्।

आङ्‌लभाषामय उपोद्घाते letter इत्येतस्य स्थाने syllable इति सन्निवेशनीयम्।

जयदेवस्य बहूनि वचनान्यष्टाङ्गहृदयटीकायामरुणदत्तेन शिशुपालवधव्याख्यायाञ्च वल्लभेन समुद्धृतानि। निर्णयसागर-यन्त्रे मुद्रिताष्टाङ्गहृदयटीकायाम् ( sixth edition ) यान्यस्माभि-र्दृष्टानि तानि यथा—

पृ० १ ( उपजाति ), १६० ( धीरललिता * ), १८१, ९३७ † ( स्वागता ), २११ ( प्रहर्षिणी ‡ ), २३० ( मालिनी ), १३१ ( पुष्पिताग्रा ), २३१ ( वैश्वदेवी § ), २३२ ( शालिनी ¶ ), २३३ ( आर्या ), २३५ (उपचित्रा $), २३५ ( मात्रासमक ** ), २३६,

---

* "यमो न्सौ तः सस्याद् रसरविविरामा धीरललिता।" एतज्जयदेवीय-वचनमिति प्रतीयते। मुद्रिते जयदेवच्छन्दसि तु नेदमुपलभ्यते।

† ९३७ पृष्ठे 'वन'स्थाने 'रनु'पाठो लिपिकरप्रमादकृत इति प्रतिभाति।

‡ "म्नौ ज्रौ गस्त्रिदशभवा प्रहर्षिणी स्यात्।" मु० ज० "गस्त्रिदशकौ" इति दृश्यते।

§ शिशुपालवध-वल्लभव्याख्या १९।११९

¶ "म्तौ तो गौ चेच्छालिनी वेदलोकैः।" मुद्रित-जयदेवच्छन्दसि शिशुपाल-वधस्य वल्लभव्याख्यायां (१८।१) च "म्तौ तगौ गश्चेच्छालिनी..." इति पाठः। अरुणधृतः पाठस्तकारगकारसंयोगरहितत्वात् समीचीनतया प्रतिभासते।

$ "अष्टाभ्यो भाद गौ योज्यावुपचित्रा।" "अष्टाभ्यो गाद्यावुपचित्रा"। इति मु० ज० पाठः, स एव समीचीनः।

** "मात्रासमकं नवमो ल्गान्तम्।" "मात्रासमकं ल्नवमं गन्तम्" इति मु० ज० पाठः। "नवमल्गान्तम्" इति शुद्धः पाठः इति प्रतीयते।

६३९, ७२६ ( द्रुतविलम्बित ), २३९ ( शुद्धविराट् * ), २३९ ( शार्दूलविक्रीडित ), २४० ( स्रग्धरा ), ४९० ( उपगीति ), ५७० ( दोधक ‡ ), ५९१ ( पृथ्वी ), ६३९, ८८० ( रथोद्धता § ), ६३९, ७१४ ( विपुला ), ६४० ( हरिणी ♆ ), ६४० ( नर्कुटक ), ६५४ ( म्तौ ज्यौ "भद्रा" वेदवसू च विरामः $ ), ६५४ ( गीति * * ), ६५४ ( तोटक ), ७०८ ( वैतालीय † † ), ७०८ ( कुसुमितलतावेल्लिता ), ७१४ ‡‡ ( मन्दाक्रान्ता ), ७१४ ( वंशस्थ )।

चिरं जीवताद्वेलाङ्कुरमहाभागश्चिरं च साधयतान्मङ्गलं सुरभारतीसेवकानामिति शम्।

---

* "भ्सौ जगौ शुद्धविराडितं मतम्।" अत्र "शुद्धविराडिति मतम्" इति शुद्धः पाठः इति प्रतिभाति। जयदेवच्छन्दसि "शुद्धविराडुदीरिता" इति पाठः। वेलाङ्कुरमहोदयेन "शुद्धविराडितीरिता" इति पाठः कल्पितः। स च न समीचीनः।

† शिशुपालवध-वल्लभव्याख्या २।७५

‡ "भौ तु भगाविति दोधकमेतत्।" मुद्रित-जयदेवे पुनः "भौ तु भगौ गिति दोधकमेतत्" इति समीचीनः पाठः।

§ ६३९ पृष्ठे "रान्नरौ लगयुता रथोद्धता" इति लक्षणम्, ८८० पृष्ठे "रौ नरौ" इति। "नौं रलौ गुरुयुता" इति मु० ज० पाठः। "रान्नराविह रथोद्धता लगौ" इति वल्लभव्याख्यायाम् ( शिशु० १४।१ )।

♆ "भवति हरिणी न्सौ म्रौ स्लौ गोरसोदधिसप्तिभिः।" "गोरसोदधिसप्तकैः" इति मु० ज० पाठः।

$ इदं जयदेवीयं लक्षणमिति प्रतीयते, मु० ज० पुस्तके तु नोपलभ्यते।

** "आर्यायाः पूर्वार्धे यथोक्तमात्रादतो मया लक्ष्म।
गीतिं तत्र विधिविदो वदन्ति संवीक्ष्य तदितरत्रापि॥"
"आर्यायाः पूर्वार्धे यदुक्तमत्रादितो मया लक्ष्म।
गीतिं गीतिविधिविदो वदन्ति संवीक्ष्य तदितरत्रापि॥"
ति मु० ज०। "यदुक्तमद्यादितो मया" इति पाठान्तरम्।

†† मूले वृत्तरत्नाकरगतं लक्षणं सन्दृश्यते, पादटीकायां भ-पुस्तकतो जयदेवलक्षणं किञ्चिद्विकृतं सन्निविष्टम्।

‡‡ ७१४- पृष्ठे "मत्तमयूरस्य" लक्षणं वृत्तरत्नाकरतो निबद्धम्।

श्रीः

# महाभाष्यम्

पस्पशाह्निकम्

## अथ शब्दानुशासनम्

अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ।

केषां शब्दानाम् ?

लौकिकानां वैदिकानां च । लौकिकास्तावद् गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मणः इति । वैदिकाः खल्वपि—शं नो देवीरभिष्टये [अथर्वसं १।१।१] इषे त्वोर्जे त्वा [तै० सं० १।१।१] अग्निमीळे पुरोहितम् [ऋ० सं० १।१।१] अग्न आयाहि वीतये [सां सं १।१।१] इति

Nature and scope of the science ]

*Now the science of words.*

The word "now" ( *atha* ) is used in order to introduce the subject. We are to understand that the science entitled S'abdānus'āsana ( "word-lore" ) is introduced.

[ The question now is— ] "of what sort of words ?"

[ The answer would be— ] "of words of both vulgar and Vedic speech ; the former such as *gauh* ( cow ), *as'vah* ( horse ), *puruṣah* ( man ), *hastī* (elephant), *s'akunih* ( bird) *mṛgah* ( deer ), *Brāhmaṇah* etc. ; the latter such as *s'an no devīrabhiṣṭaye*(may the Goddesses be propitious to us for our help ), *iṣe tvorje tvā* ( thee for food, thee for strength), *agnim īle purohitam* (I worship Agni, the domestic priest ), *agna āyāhi vītaye* ( Come, Agni, to feast ).

স্ত্রীপ্রশংসা—The original slokas of Varāhamihira with a splendid original commentary. Re. 1/-

**Popular Etymology** Re. 1/-

কলিকাতা বিশ্ববিদ্যালয়ের অধ্যাপক

শ্রীক্ষিতীশচন্দ্র চট্টোপাধ্যায়, এম. এ. ডি. লিট্ প্রণীত

# শব্দ-কথা

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি ভুলগুলির আলোচনা করা হইয়াছে। সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক দিয়া, বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওতপ্রোত-শব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম ত'র পর আছে, না দ্বিতীয় ত'র পর আছে, না উভয় ত'র পর আছে, সঠিক শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতায় প্রভেদ কি? সন্ধির কথায় সন্ধির বৈজ্ঞানিক ব্যাখ্যা ইংরাজী, লাটিন ও আরবী ভাষায় সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব, ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে। বাঙ্গালা, ইংরাজী ও সংস্কৃত ভাষায় অধ্যাপক ও ছাত্র, সাহিত্যিক, সাংবাদিক প্রভৃতির পক্ষে এই গ্রন্থ অত্যাবশ্যক।

**মূল্য দুই টাকা মাত্র**

# ঊষার আলো

ইহাতে দেশ-বিদেশে প্রচলিত হাস্যরসাত্মক কৌতূহলোদ্দীপক অথচ শিক্ষাপ্রদ শতাধিক ছোট গল্প সন্নিবিষ্ট হইয়াছে। পড়িতে পড়িতে হাসিয়া অস্থির হইতে হইবে।

**মূল্য বার আনা মাত্র,**

**নক্ষত্রমালা।** শ্রেষ্ঠ শ্লোকসমষ্টি, ব্যাখ্যা ও অনুবাদ। মূল্য পাঁচ আনা মাত্র

**শ্রীবিশ্বনাথ চট্টোপাধ্যায়**

৮১নং নিউ শ্যামবাজার ষ্ট্রীট, কলিকাতা—৪।

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Jyotish Chandra Chatterjee, B.A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press, 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

४र्थ-वर्षे संख्या ९

# मञ्जूषा

संस्कृतभाषामयी मासिक-पत्रिका

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Next Month.

Unpublished stotra of Shri Shankaracharya

Shiva-nadi ( a work on Astrology)

Mahabhasya of Patanjali with Notes and Translation.

**If you have not yet subscribed to the Manjusha, for yourself or for your school or college, do it now. See what great educationists say :**

Professor Satyendra Nath Sen Vidyavagish, M.A., ex-M. L. A. (Central),

*Secretary, Varnasrama Svarajya Sangha* says :

The Manjusha is the most interesting of the Sanskrit periodicals published in India. Students and teachers of Sanskrit will read the Manjusha with pleasure and profit. The Manjusha should find an honoured place in the libraries of schools and colleges and tols and in students' common rooms all over India.

Office : 81 Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign : Rupees Eight.

# MAHABHASHYA

A big instalment of notes next month, discussing the correctness of "atha s'abdānus'āsanam."

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदः सभाष्ये मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत।

श्रीविश्वनाथश्चट्टोपाध्यायः।
८१ श्यामबाज़ार ष्ट्रीट, कलिकाता ४।
81, Shyambazar Street, Calcutta 4.
Phone: B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

May, 1950. | १८७२-शकीय-ज्यैष्ठस्य ४र्थ-वर्षस्य ९म-संख्या | Vol. IV No. 9

## आभाणकादि

१ । God's mill grinds slow but sure.

२ (ग्री) Opse theon aleousi muloi, aleousi de lepta.

The mills of the gods grind slowly, but they grind small.

कामं शनैः पिनष्ट्युर्व्यां देवयन्त्रं हि पापिनः ।
तथापि नात्र सन्देहश्चूर्णपेषं पिनष्टि तत् ॥

(ज) Gottes Mühlen mahlen langsam,
mahlen aber trefflich klein,
Ob aus Langmuth er sich säumet,
bringt mit Schärf' er alles ein.

FRIEDRICH von LOGAU.

Though the mills of God grind slowly,
yet they grind exceeding small ;
Though with patience He stands waiting,
with exactness grinds He all.

LONGFELLOW, *Retribution.*

२। ( व ) अन्नप्राशनेइ तालेर ग्रास ।
अन्नप्राशनमात्रेण तालवद् ग्रास इष्यते ।

३। ( हि ) जग मे यब् आया सब् हासे तोम् रोये ।
एसा काम करो पिच्छु हासि ना होय ।
जगत्यागा यदा सर्वे जहसुस्त्वं तदारुदः ।
तथा कार्यं कुरु जनै र्न पश्चान्न हस्यसे ॥

---

# निष्कृतिः

[ शरच्चन्द्र-चट्टोपाध्यायः ]

( ३ )

शैलजा स्वच्छन्दमवदत्, भवतु, पयस्तावत् पीयताम्, अहं गच्छाम्येव। पात्रेणानेन मे प्रयोजनम् इति।

तस्या निरुद्विग्नं वचनजातमाकर्ण्य सिद्धेश्वर्यग्निमूर्त्तिः सञ्जाता। "न पास्यामि, किमपि न पास्यामि। याहि त्वम्। त्वं वा गृहतो निर्गच्छ, अहं वा निर्गच्छानि, अनयोरेकतरमसम्पाद्य न खलु जलस्पर्शनमहं करिष्यामि।"

शैलजा तथैव स्वच्छन्दकण्ठेनावदत्, अहं तावत् सद्य एव समागतेति नालमस्मीदानीं प्रयातुम्। त्वमेव तावद् गत्वा पुनरपि दिनकतिपयान् काटोयामधिवस, गङ्गा तावत् सप [illegible], सति प्रसङ्गे तत्र ते नयनं सुकरमेव स्यात्। ननु मध्यमान्तिके, किं वा तुच्छं वचनमुपादाय प्रातः सर्वं समान्दोलयसि? पुनः पुनर्ज्वरेणान्तिका तावदर्धमृता वर्तते, किमित्यत्रभवतीं निस्तक्षसि। यदि मयापराद्धं मह्यमेव कथनीयम्। ब्रूहि तावत् किं वा वृत्तमिति।

सिद्धेश्वरी नेत्रे प्रमृज्यावदत्, अद्यातुलस्य जन्मदिनम्। किमिति वत्सं तथाविधवचनमुक्तवत्यसि ?

शैलजोच्चैर्जहास। अहो! एतन्ननु। लेशतोऽपि मा भैषीर्मध्यमान्तिके, त्वमिवाहमपि तावन्मातैव। यथा मे हरिचरणः, कानुः पटोलश्च, अतुलोऽपि तथैव। न खलु मातुर्वचनेन गालिर्भविष्यति मध्यमान्तिके। भवतु, अहं तावत् तमाहूयाशिषा योजयामि। गृहाणान्तिके, त्वं तावत् पिब। अहं चुल्लीमुखे कटाहं स्थापयित्वा समागतास्मि इति।

सिद्धेश्वर्या वदनमण्डले क्रन्दनेन सार्कं हसितमपि प्रस्फुटमभवत्। सावदत्, भवतु, मध्यमान्तिकायाः समीपेऽपि स्वीक्रियतां स्वीयोऽपराधः। त्वया तावत् तस्या अपि कटूक्तिः कृतेति।

"भवतु स्वीक्रियते" इत्युक्त्वा शैलजा तदात्व एवानतकाया पाणिना नयनतारायाः पादौ स्पृष्ट्वावदत, अन्याय्यं चेदाचरितं मया क्षमस्व मध्यमान्तिके, स्वीकरोम्येवापराधमहम् इति।

नयनतारा पाणिं प्रसार्य्य तस्याश्चिबुकस्पर्शनेन तां चुम्बित्वा मुखं तावद् घनघटाच्छन्नं विधाय तूष्णीमेव तस्थौ।

सिद्धेश्वर्या वक्षःस्थलाद् भारोऽपगतः। सा च स्नेहेन हर्षेण चार्द्रा नयनतारेव कनिष्ठाया यातुश्चिबुकं स्पृष्ट्वा मध्यमयातरं सम्बोध्यावदत्, मा तावत् कदाप्युन्मत्ताया अस्या वचनेन कोपं कार्षीः, मध्यमवधु। ननु मय्येव दृष्टिं निपातय—इमां तावत् तर्जये च, कति वा न गालीरस्यै वर्षामि, परं दण्डमेकं न पश्यामि चेद् वक्षोऽभ्यन्तरे किमपि कषतीति प्रतीयते। न खल्वेतावद् दुग्धं प्रभविष्यामि पातुमन्तिके।

प्रभविष्यसि। पिब।

सिद्धेश्वरी पुनरपि वितर्काद्विरता बलात् सर्वं पयो निपीया-

वदत, इदानीमेव वत्सं समाहूयाशिषा योजय शैलजे।

इदानीमेव क्रियते इत्युक्त्वा शैलजा विहस्य रिक्तपात्रहस्ता बहिर्निष्क्रान्ता। ( क्रमशः )

---

# संज्ञाविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कात्यायनीयेषु वार्त्तिकेषु संज्ञायां छन्दसि च इत्यर्थे त्रिः 'तणि' पदम् उपलभ्यते। तथाहि—

(१) "चक्षिङः ख्याञ्" [ २।४।५४ ] इत्यत्र वार्त्तिकम् "बहुलं तणि" ॥ ११ ॥ इति। "अदो जग्धिः" [ २।४।३६ ] इत्यादयो धात्वादेशाः संज्ञायां छन्दसि च बहुलं प्रवर्तन्ते इति तदर्थः। अत एवोक्तं भाष्यकृद्भिः—बहुलं तणीति वक्तव्यम्। किमिदं तणीति? संज्ञाछन्दसोर्ग्रहणम्। इति। काशिकायां वार्त्तिकमिदं 'बहुलं संज्ञाछन्दसोः' इति रूपेणोपलभ्यते।

(२) "गापोष्टक्" [ ३।२।८ ] इति सूत्रे "सुराशीध्वोः पिबतेः" इति वार्त्तिकस्यानन्तरम् "बहुलं तणि" इति द्वितीयं वार्त्तिकं पठ्यते। व्याख्यातञ्चेदं भाष्यकृद्भिः—बहुलं तणीति वक्तव्यम्। किमिदं तणीति? संज्ञाछन्दसोर्ग्रहणम्। या ब्राह्मणी सुरापी भवति नैनं देवाः पतिलोकं नयन्ति। या ब्राह्मणी सुरापा भवति नैनं देवाः पतिलोकं नयन्ति इति। अत्र काशिकायां 'बहुलं छन्दसीति वक्तव्यम्' इत्युपलभ्यते।

(३) "बहुव्रीहेश्चान्तोदात्तात्" [ ४।१।५२ ] इति सूत्रे तृतीयं

वार्त्तिकं 'बहुलं तणि' इति। तत्रापि भाष्यम्—बहुलं तणीति वक्तव्यम्। किमिदं तणीति? संज्ञाछन्दसोर्ग्रहणम्। इति।

"अस्वाङ्गपूर्वपदाद्वा" [४।१।५०] इति सूत्रस्य काशिकायां बहुलं संज्ञाच्छन्दसोरिति वक्तव्यम् इत्युपलभ्यते।

कथं तण्-शब्देन संज्ञाछन्दसोर्ग्रहणमिति विचारयन्तो नूनं प्रतिपद्येरन् विपश्चितः छन्दः-पर्याय-श्रुति-शब्दतस्तकारं संज्ञापर्याय-नाम-शब्दतश्च नकारमुपादाय "परोक्षप्रिया वै देवाः प्रत्यक्षद्विषः" इति नीतिमनुसृत्य वा श्रुतिशब्दगतं रेफमनुस्मृत्य वा नकारस्य मूर्धन्यत्वं विधाय तण्-शब्दः प्रकल्पित इति।

---

## श्रीकालिदास-चरितसंग्रहः।

श्रीकालिदासमधिकृत्य त्रयाणां गुरुकुलवासिनां किमपि सम्भाषणं च।

[ श्रीमहालिङ्गशास्त्रि-विरचितम् ]

श्रूयते कालिदासोऽयं बाल्ये सञ्चारयन्नजान्।
विटपस्याग्रमास्थाय मूलं परशुनाऽच्छिनत्॥

रूपयौवनसम्पन्नं कुलीनं मधुरस्वरम्।
ददृशुस्तं तथाकृत्यं विप्रा राजसभासदः॥

वैदुष्यवादशुल्काऽभूत् तदानीं राजकन्यका।
बहुपण्डितवैदग्ध्यनित्यन्यक्कारगर्विता॥

सा राजपुत्री तरुणं विद्वद्भिर्विमतिं गतैः।
अस्मद्गुरुरिति स्तुत्वा तमेव परिणायिता॥

तया तन्मौर्ख्यमचिरात् ज्ञात्वा निष्कासितो गृहात्
स प्राप कालीसदनं तप्यमानो ह्रिया भिया ॥

अथार्धरात्रे काल्याऽसौ गेहं प्रतिनिवृत्तया ।
याचमानोऽक्षराण्यत्वं प्रहसन्त्याऽन्वगृह्यत ॥

देव्या वदनताम्बूलरसं कर्पूरवासितम् ।
वक्त्रे विनिहितं लब्ध्वा स बभूवाद्भुतः कविः ॥

निवृत्तं पतिमालोक्य प्रज्ञाभासुरमादरात् ।
प्रतिजग्राह विदुषी राजपुत्री प्रहर्षिता ॥

अस्ति कश्चिद्वाग्विशेष इत्यपृच्छ्यत कान्तया ।
तया, स च पदस्यैकं काव्यरत्नमुदाहरत् ॥

अस्त्युत्तरस्यामिति यत् कश्चित्कान्तेति यत्ततः ।
वागर्थाविव चेत्यन्यत् तत्काव्यत्रितयं कृतम् ॥

विवाहं विप्रलम्भं च गार्हस्थ्यमभिरोचयन् ।
उभयोः काव्ययोरूचे राजधर्मान् रघौ ततः ॥

मानुषं चाग्निमित्रीये दैव्यमप्युर्वशीगतम् ।
शृङ्गारं मिश्रमन्यत्र व्यवृणोन्नाटकत्रये ॥

विप्रलम्भेऽप्युपचितं शृङ्गारमुपवर्णयन् ।
स तमुत्कृष्टमक्षेभ्यो व्यतारीत्प्रत्ययात्मनो ॥

स कालिदासकविरित्यवन्त्यामगमत्प्रथाम् ।
त्रीणि त्रीण्यस्य काव्यानि नाटकानि न वेद कः ॥

राज्ञा श्रीविक्रमादित्यबिरुदेन शकारिणा ।
स विदर्भेषूज्जयिन्यामध्यारोप्यत गौरवम् ॥

बौद्धैरुत्खण्डिते मार्गे वैदिके प्रत्यतिष्ठिपत् ।
प्रामाण्यं धर्मरक्षार्थं स वेदस्येश्वरस्य च ॥

म्लेच्छैर्विध्वंसनाद्राजा धर्मप्रख्यापनात्कविः ।
उभौ तौ कालकालुष्यं समशोधयतां भुवि ॥

कविमध्ये-सार्वभौमः सार्वभौम-सभाजितः ।
अजितः कालिदासोऽयं दासो यं प्रत्यसौ जनः ॥

* इति श्रीकालिदासचरितसंग्रहः *

---

अथ श्रीकालिदासमधिकृत्य त्रयाणां गुरुकुल-
वासिनां किमपि सम्भाषणम् ।

ततः प्रविशतः गौतम-शाण्डिल्यौ

शाण्डिल्यः । सखे, गौतम, साधूक्तं केनापि,

पुरा कवीनां गणनाप्रसङ्गे
कनिष्ठिकाऽऽधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावाद्,
अनामिका साऽऽर्थवती बभूव ॥ इति ।

गौतमः—सखे, शाण्डिल्य, पूर्वेऽपि महाकवयः तस्य निरतिशयं यशो गायन्ति । तथाहि बाणः,

"निर्गतासु नवा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥"

इति । दण्डिनाप्युक्तम्—

लिप्ता मधुद्रवेणासन् यस्य निर्विवरा गिरः ।
तेनेदं वर्त्म वैदर्भं कालिदासेन शोधितम् ॥

इति। किन्तु स्वसमानकालीनैः कविर्न सम्भाव्यते इति हि प्रथा। किं कालिदासस्य विषयेऽपि सैव स्थितिरासीत् ?

शाण्डिल्यः—सखे सत्यमेतत्। "बोद्धारो मत्सरग्रस्ताः" इति भर्तृहरिणापि परिदेवितम्। आसीत् कालिदासस्यापि निन्दकस्तत्काले दिङ्नागो नाम आचार्यः। परन्तु निचुलो नाम राजाऽऽस्थाने कविं कालिदासं सरसेन वचसा नित्यं प्रास्तौत्।

गौतमः— कथमिदं ज्ञायते ?

शाण्डिल्यः—शृणु तावत्। मेघसन्देशे कालिदासेनैवमुक्तम् स्वकाव्यमेवानुसन्धाय—

"स्थानादस्मात् सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्।" इति।

गौतमः—अहो वचनचातुर्यम्। सखे, अन्यच्च मे प्रष्टव्यं—अचेतनो मेघः सन्देशहरश्चेति अनुचितमिवाभाति।

शाण्डिल्यः—सखे! असावाक्षेपो न नूतनः। तथाचोक्तं भामहेन,

"अवाचोऽव्यक्तवाचश्च दूरदेशविचारिणः।
कथं दूत्यं प्रपद्येरन्निति युक्त्या न युज्यते॥" इति

गौतमः—बाढम्। किं समाधानम् ?

शाण्डिल्यः—समाधानं कालिदासेनैवोक्तम्, भामहेन च तदङ्गीकृतम्। तथाहि पश्य, मेघसन्देशे—

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थः क्व पटुकरणैः प्राणिभिः प्रापणीयः।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु॥ इति॥

भामहोऽप्याह,

"यदि चोत्कण्ठया यत्तदुन्मत्त इव भाषते ।
तथा भवतु भूम्नेदं सुमेधोभिः प्रयोज्यते ॥" इति ॥

ततः प्रविशति कौण्डिन्यः ।

गौतमः—दिष्ट्या कौण्डिन्योऽप्यत्र मिलितः । सखायौ, कुमारसम्भवमधिकृत्य किमपि प्रष्टुमिच्छामि ।

कौण्डिन्यः—गौतम, किमिति ।

गौतमः—तत्काव्यं किमर्धे परित्यक्तं कविना । कुमारस्य जन्मापि न वर्णितम् ॥

कौण्डिन्यः—एवमेतम् । कुमारजन्मनः पूर्वरङ्गो गौरी-महेश्वरयो र्विवाह एव वर्णितः । तावतैव कविश्चरितार्थः ।

गौतमः—तत्र कश्चित् प्रवादः, "उमादेव्या शप्तः कालिदास" इति ।

कौण्डिन्यः—अस्त्येतत् । तत्र किल अष्टमे सर्गे अतिमात्रं गाढ़तया जगत्पित्रोः प्राकृतवधूवरयोरिव चरितं कालिदासेन वर्णितम् इति । एतन्मूलोऽयं प्रवादः, न तु तत्त्वाख्यानं भवितुमर्हति । श्रीमानानन्दवर्धनाचार्योऽपि विषयेऽस्मिन् जुगुप्सते ।

गौतमः—एवं च दोषो भवति खलु— ।

कौण्डिन्यः—"यत्त्वेवंविधे विषये महाकवीनामसमीक्ष्यकारिता लक्ष्ये दृश्यते, स दोष एव । स तु शक्तितिरस्कृतत्वात् तेषां न लक्ष्यते" इति समाधित्सत्याचार्यः ।

शाण्डिल्यः—सखे कौण्डिन्य, आदिरसे कालिदासः अप्रतिमः इति सर्वानुमतमेतत् । स हि सरस्वत्या "विलास" इति वर्णितः जयदेव-कविना । अनेन वीर-करुणादि-रसेषु तस्योदासीन्यम् असामर्थ्यं वा किं प्रतिपत्तव्यम् ॥

कौण्डिन्यः—मैवम्, विशेषत आदिरस-रसिकोऽपि कालिदास इतरेषु रसेषु अवैमुख्यं भूयसा प्रदर्शितवान्। तथाच, शोकः पुंसः स्त्रियश्चेति विभज्य रघुवंश-कुमारसम्भवयोः क्रमेण अष्टम-चतुर्थयोः सर्गयोः निबद्धः। तस्यैव प्रभेदान्तरं सीता-प्रवासनप्रसङ्गे रघुवंश-चतुर्दश-सर्गे हृदय-द्रावकतया वर्णितम्। कवेर्भावोऽप्यस्मिन् निपुणभङ्गितो वर्तते। यथा—

"तदेष सर्गः करुणार्द्रचित्तै र्न मे भवद्भिः प्रतिषेधनीयः।
यद्यर्थिता निर्हतवाच्यशल्यान् प्राणान् मया धारयितुं चिरं वः॥"
इति।

शाण्डिल्यः—रघुवंश-नवम-सर्गे यमकक्रीड़ायां बालिश इव समासक्तः कविः कालिदासो न भवितुमर्हतीति केचित् तदुप-क्रमाणां सर्गाणां कालिदासकृतित्वे प्रत्यवतिष्ठन्ते, तत्र का भवतः प्रतिपत्तिः।

कौण्डिन्यः—या प्रतिपत्तिः काव्यत्रयं प्रथमेन, नाटकत्रयं द्वितीयेन, ऋतुसंहारं तृतीयेन, पुष्पबाणविलास-शृङ्गारतिलक-नवरत्नमालिकादिकं चतुर्थेन, ज्योतिर्विदाभरणं पञ्चमेन, लम्बोदर-प्रहसनं षष्ठेन, श्रुतबोधं सप्तमेन, नलोदयमष्टमेन, अन्यदन्यच्च नवमेन दशमेन वा कालिदासेन रचितमाचक्षाणेषु। (उभौ हसतः)

शाण्डिल्यः—तर्हि तस्य यमकप्रियत्वे किं समाधानम्?

कौण्डिन्यः—किं नाम यमको यमक इति काव्यविदामुद्वेगाय, किमुताश्लीलम्। नैवं दृश्यते। स च संघटनाधर्मे ष्वन्तर्भावितो ध्वनिकृता। यमकमात्रे वैदग्ध्यमयमकविलक्षणं तावद्भवतु। प्रतिभा-वतः सरसकवेः काचित्कादाचित्कशब्दस्तोमावृत्तिविहा-रोन्मुखता परं भूषणमेव, एवमपि सम्भाव्यते—घटकर्परो नाम

यमककविः कश्चित् कालिदासस्य समकालिकः इति श्रूयते। तेन चोक्तम्—"जीयेय येन कविना यमकैः परेण
तस्मै वहेयमुदकं घटकर्परेण ॥" इति।

तद्गर्वसर्वङ्कष: असौ दिङ्मात्रप्रदर्शकः संरम्भः कविना समादृतः अभवदिति च शक्यमुत्प्रेक्षितुम्। तदेवमस्तु मा वास्तु। यमकोऽपि सरलः, सुकुमारः, प्रसन्नो मधुरः, पुष्टार्थः, मनोहरः प्रयुक्तः अत्यनर्घतामावहतीति अहो, प्रसन्नवाग्देवताऽनुवृत्तीनां कविकुलजानां पारेगिरां महिमातिशयः ॥

गौतमः—सख्यौ, घटकर्परप्रसङ्गेनेदं चोच्यते यद् विक्रमसभायां नव कविरत्नान्यासन्निति, तेषु कालिदासोऽन्यतम इति कैश्चिदुद्घुष्यते। किं तदुपपन्नम्?

शाण्डिल्यः—न खलूपपन्नम्। कालिदासकृतमित्यभिहिते ज्योतिर्विदाभरणे इमौ श्लोकौ भवतः—

"धन्वन्तरि-क्षपणकामरसिंह-शङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचि र्नव विक्रमस्य ॥"

"काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं
जातं ततो ननु कियच्छ्रुतिकर्मवादः।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव ॥" इति।

नूनमप्रशस्तपाकावेतौ श्लोकौ कालिदासोदितत्वेन जातु न प्रामाण्यमर्हतः। फुरुफुरायमाणजिह्वाहेवाकिना केनाप्यर्वाचीनेन लेखकेन प्रक्षिप्तौ भवितुमर्हतः इति मे मतिः। अन्येऽपि ये तत्र

परिगणिता: तेऽपि न मिथ: समकालिका:। स्याद्वा कश्चिदन्य: तद्ग्रन्थकर्ता कालिदासोपाह्वयः।

गौतम:—तेन हि बहवः कालिदासा अभूवन्निति खलु अभ्युपगन्तव्यम्।

शाण्डिल्यः—यद्यपि राजशेखरपद्यम्—

"एकोऽपि जीयते हन्त कालिदासो न केनचित्।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥"

इत्येतत् तत्र प्रमाणयतां भृशमस्वरसव्युत्पत्तिकृतो भ्रमः सुव्यक्तः, तथापि, मुञ्जसभायां परिमलः पद्मगुप्तो वा कश्चन कविः कालिदासबिरुदमवहत् इति सुष्ठु ज्ञायते। यथा बहवो वीरा विक्रमादित्यबिरुदमध्यगच्छन्, तथैव कालिदासबिरुदमपरे च केचन कवयः साभिमानमध्यूहुरिति विश्वसनीयम्। वयं तावदाद्यं विक्रमादित्यम् आद्यं च कालिदासमद्य अनुसरामः॥

गौतमः—यः काव्यत्रयस्य नाटकत्रयस्य च कर्ता।

शाण्डिल्यः—ऋतुसंहारस्य चेति सविस्रम्भं वक्तुं शक्यते॥

कौण्डिन्यः—अनेन च भोजप्रबन्धे कालिदाससमकालिकतया संमेलितानां बाणभवभूतिमाघमल्लिनाथादीनां कथाः परास्ताः।

शाण्डिल्यः—बाढम्। किन्तु चरित्रपरतया·अनुपयुज्यमानत्वेऽपि भोजप्रबन्धस्य सहृदयहृदयसंवादिनी कविकाव्यविमर्शनरीति निर्भरमनुमोदितव्या। तत्र हि भवभूतेः कालिदासस्य च कविता-तारतम्यसङ्घर्षे सरसरुचिरा निर्णयपद्धतिरवतारिता कथारूपेण॥

गौतमः—स्मरामि खलु। यथा देवीसन्निधौ राज्ञि च
५८ साक्षिणि तुलाघटयोरारोपितौ उभयोः प्रमाणश्लोकौ।
तदानीं भवभूतेर्घटः उत्तानतां प्राप्तलते। देवी सद्यः

स्यावतंसकलिकान्याधूय मधुबिन्दुं तस्मिन् क्षिप्त्वा तुलायाः समरेखतामापादयति ॥ तस्मिन्नवसरे कालिदासेनोक्तम्—

"अहो मे सौभाग्यं मम च भवभूतेश्च भणितं
घटायामारोप्य प्रतिफलति तस्मिन्लघिमनि ।
गिरां देवी सद्यः श्रुतिकलितकल्हारकलिका-
मधूलीमाधुर्यं क्षिपति परिपूर्त्यै भगवती ॥" इति ।

अहो प्रतिभाजुषां कल्पनास्वपि पारमार्थिकप्रायता ॥

कौण्डिन्यः—कालिदासस्य समकक्ष्यतया व्यवहर्तुं योग्यो भवभूतिरिति, तस्यापि माधुर्यगुणे किञ्चिन्न्यूनतेति च अनया कथया सहृदय-हृद्य-तत्वमवगम्यते ॥

गौतमः—भवभूतिरुत्तररामचरिते कालिदासमप्यतिशेते इति हि केचिदभिमन्यन्ते ॥

कौण्डिन्यः—अस्त्येतत् । तत्तु करुणरसावलम्बबलात् । कालिदासेन तदैदम्पर्यं न खलु निर्व्यूढम् । कालिदास एव किलैवमुक्तवान्—

"काव्ये वा नाटके वापि वयं वा वयमेव वा ।
उत्तरे रामचरिते भवभूतिर्विशिष्यते ॥" इति ।

शाण्डिल्यः—सखे, कौण्डिन्य, सेतुबन्धकर्तुः कुन्तलेश्वरस्य प्रवरसेनस्य, जानकीहरणकर्तुः सिंहलेश्वरस्य कुमारदासस्य च कालिदासेन सख्यमावेदयन्ति प्रवादाः ॥

कौण्डिन्यः—अमीषां प्रवादानां प्रामाण्ये सन्दिग्धे मे मनः । तत्काव्यद्वयमपि कालिदाससाहाय्येन कृतमिति यत् प्रोच्यते तत् तदुत्कर्षं केवलं पर्यवस्यतीति अवधार्यम् । न किंचिदन्यत् ॥

शाण्डिल्यः—विक्रमादित्यकुन्तलेश्वरयोर्मध्ये दूत्यमङ्गीकृत्य कालिदासः अवसरप्राप्तमेकैकत्र श्लोकमेकैकमुदाजहारेति ग्रन्थतः

किल समुपलभ्यते। स च विक्रमादित्यः द्वितीयचन्द्रगुप्त इति, स च कुन्तलेश्वरः प्रथमं वाकाटकपृथ्वीसेनः, ततश्च तन्नप्ता चन्द्रगुप्तदौहित्रो द्वितीयप्रवरसेनश्चेति प्रतिपादयन्ति। अथ च स्वदौहित्रनाम्ना विक्रमादित्यः कालिदासेन सेतुबन्धकाव्यं कारयामासेति पारम्पर्यप्रवादोऽपि भवति॥

कौण्डिन्यः—अस्त्येतत्। किन्तु कालिदासस्यास्मदनुस्मर्यमाणस्य चन्द्रगुप्तप्रवरसेनादिकालापेक्षया बहुप्राचीनत्वावगत्यां विशदानि गमकान्तराणि सन्ति। प्रतिपक्षोक्तीनाम् अनुमानप्रायत्वं, स्वच्छन्द-भङ्गुरमूलावलम्बनदौर्बल्यं च त्वरयानुपतताम् अविश्रान्तिदौःस्थ्यमेव भूयः पर्युपस्थापयतः।

किञ्च, कालिदासीयप्राकृतपद्यभावितचेतसां सचेतसां सेतुबन्धस्य कतिपयपद्यपरिशीलनमात्रत एव अस्मिन् पारम्पर्यप्रवादे अभिमानो विगलितप्रायः सम्पद्येत॥

शाण्डिल्यः—साहित्यसंसारे खल्वस्मत्पूर्वपुरुषाणां, न केवलं यः कालिदासः स कालिदासः, न केवलं येऽर्वाचीनाः तद्विरुदभाजः ते कालिदासाः, परं तु ये सरसोदारपद्यनिर्मातारः अज्ञातविशेषाः तेऽपि कालिदासाः, येषामनाकलितनामस्वरूपाणाम् आदिरसोद्गारसौरस्योद्रिक्ता वाचस्तेऽपि नाम कालिदासाः, ये दुर्ग्रहचित्रकटुकाव्यकर्तृतया क्रमेलकप्रायरसना वैदग्ध्यवित्तकानाम् अभ्यर्हणास्पदं तेऽपि खलु कालिदासाः, ये च व्रीडाकरमुक्त्वा ग्रन्थप्रचारार्थिनः निजनामनिगूहनश्रद्धालवः तेऽपि बत कालिदासाः॥

[ सर्वे हसन्ति ]

शाण्डिल्यः—कल्हणकृतौ हर्षविक्रमादित्याश्रयेण प्राप्तकाश्मीरराज्यो मातृगुप्त एव कालिदास इति केषाञ्चिदभिमतमप्यसम्बद्धमेव॥

गौतमः—कालिदासस्याग्निमित्रकालिकत्वं किं सुवचम् ?

कौण्डिन्यः—अत्रेदमवधेयम्। मालविकाग्निमित्रीयं नाटकं कवेः स्वप्रत्यक्षचरित्रानुसंहितमिति वक्तुं शक्यम्। किञ्च तत्र भरतवाक्ये—

"आशास्यमीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥"

इति वर्तमाननिर्देशो दुरतिक्रमः ॥ अन्यच्च,

अग्निमित्रसमकालिकत्वस्य विक्रमसभास्यर्हितत्वस्य च न तावद्विरोधः, उभयोः भूपयोः अनतिविप्रकृष्टकालान्तःपातित्वात् ॥

गौतमः—यथा अग्निमित्रसमकालिकत्वमाविष्कृतं कविना किं तथा विक्रमसमकालिकत्वमपि सूचितं क्वचित्तेन।

कौण्डिन्यः—बाढम्। विक्रमोर्वशीयं तत्सूचनपरमेव सूक्ष्मदृष्ट्या विमर्शने प्रतिभायात्। तत् स्वाभिमतराजनामाङ्कितं नाटकम्। पुरूरवाः खलु तत्र नायकः। किञ्च, "अनुत्सेको विक्रमालङ्कारः" इति मध्ये चाटुमुपक्षिप्य स्वस्यैव राज्ञः अनितरसुलभं गुणविशेषं व्याजेन लब्धावसरः स्तौति कविः ॥

गौतमः—सङ्गच्छते ॥ अथ कालिदासो वेश्यासङ्गेन कालं निनायेति हि वदन्ति। किं तदनुमोदनार्हम्।

कौण्डिन्यः—यस्त्वादिरसकविः स स्वयं विटः भवितुमर्हतीति पामरोत्प्रेक्षैषा। वस्तुतः स महात्मा कविसार्वभौमः शिवध्यानभावितान्तरङ्गः मुमुक्षुरासीदिति निश्चप्रचम्। इयं हि तस्य चरमा प्रार्थना—

'ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥'

इति। अत्रैष समासः। "बौद्धैरुत्खण्डिते वैदिकमार्गे—

शाण्डिल्यः—म्लेच्छच्छटाविप्लवोद्वेजिते च देशे,—

गौतमः—कवि-भूपौ तौ—

कौण्डिन्यः—ईश्वरप्रामाण्यं, वेदप्रतिष्ठां वैदिकधर्मपारस्यं च कान्तासम्मितनीत्या समुन्नीय,—

शाण्डिल्यः — अकुण्ठविक्रमोपक्रमैरागन्तुकराष्ट्रोपसर्गशमल-शोधनं च विधाय,—

कौण्डिन्यः—भुवनकल्याणं प्रत्यतिष्ठिपताम् ।

गौतमः—अहो महानुभावौ पुण्यश्लोकपुरोगमौ कविसार्वभौम-नृपसार्वभौमौ ॥

सर्वे—अनयोः स्मृतिमात्रेणाद्य धन्या अभूम ॥ [इति निष्क्रान्ताः]

---

# सेविका वा सेवका वा

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सेवकशब्दस्य स्त्रियां कीदृशं रूपमिति विचारे प्रथमत एव "प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः" [ ७।३।४४ ] इति सूत्रं स्मृतिपथमधिरोहति, ततश्च यथा पाचक-शब्दस्य स्त्रियां 'पाचिका' इति रूपम्, कारकशब्दस्य स्त्रियां 'कारिका' इति रूपम्, तथा सेवक-शब्दस्य स्त्रियां 'सेविका' इति रूपम् इति प्रतीतिरुपजायते। सेयं प्रतीतिः प्रातिभासिकी वा पारमार्थिकी वेति विचार्यते।

तत्र "क्षिपकादीनां च" [७।३।४५।४] इति वार्त्तिकेनास्याः प्रतीतेर्मूले कुठारः समर्प्यते इतीदानीन्तनाः केचन ब्रुवते। तत्तु न समीचीनतया प्रतिभाति। महाभाष्ये "क्षिपकादीनां च" इति वार्त्तिकव्याख्यानावसर उक्तम्—क्षिपकादीनां चोपसंख्यानं कर्तव्यम्। क्षिपका ध्रुवका।

ध्रुवका। इति। "न यासयोः" [ ७।३।४५ ] इति सूत्रस्थकाशिकायामपि क्षिपकादीनां चोपसंख्यानम्। क्षिपका। ध्रुवका। इत्येतावन्मात्रमुपलभ्यते। न्यासे पदमञ्जर्यां चैतद् द्वितयमेव व्याख्यातम्।

चान्द्रव्याकरणे "क्षिपकादीनाम्" [ ६।१।७९ ] इति सूत्रस्य वृत्तौ क्षिपका ध्रुवका एड़का चटका देवका इति पञ्चकमेवोपलभ्यते।

चटकाशब्दो महाभाष्ये "जातेरस्त्रीविषयादयोपधात्" [४।१।६९] इत्यत्र पठ्यते—कथं चटका मूषिकेति। अजादिषु पाठः कर्तव्य इति। "चटकाया ऐरक्" [४।१।१२८] इत्यत्र च भाष्ये दृश्यते—

चटकायाः पुंलिङ्गनिर्देशः ॥१॥

चटकायाः पुंलिङ्गेन निर्देशः कर्तव्यः। इहापि यथा स्यात्। चटकस्यापत्यं चाटकैरः। यदि पुंलिङ्ग-निर्देशः क्रियते चटकाया अपत्यं चाटकैर इति न सिध्यति। प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवं भविष्यति।

स्त्रियामपत्ये लुक् ॥ २॥

स्त्रियामपत्ये लुग् वक्तव्यः। चटकाया अपत्यं स्त्री चटका। इति।

देवकार्थं च कात्यायनेन पृथग् वार्त्तिकं प्रणीतम्—उत्तरपदलोपे च [ ७।३।४५।४ ] इति। व्याख्यानञ्च भाष्ये—उत्तरपदलोपे चोपसंख्यानं कर्तव्यम्। देवदत्तिका देवका। यज्ञदत्तिका यज्ञका इति।

जैनेन्द्रव्याकरणे लघुवृत्तौ क्षिपकादिगण एव नोपलभ्यते, यदादिनैव तस्य क्रोड़ीकारात्। तत्र च सूत्रम्—त्यस्थेऽचित्क्यापीद्‌तोऽसुपोऽयदादेः [ ५।२।५३ ] इति। व्याख्यातं च शब्दार्णवचन्द्रिकायाम् "अयदादेरिति किम् ? यका सका क्षिपका" इति।

हेमचन्द्रव्याकरणे "अक्ष्यायत्तत्क्षिपकादीनाम्" [ २।४।१११ ] इति सूत्रस्य बृहद्वृत्तौ सेवकाशब्दः सन्दृश्यते। तथाच तत्रत्या वृत्तिः—

यत्तत्क्षिपकादिवर्जनं किम्? यका। सका। क्षिपका। ध्रुवका। धुवका। लहका। चरका। चटका। इष्टका। एड़का। एरका। करका। अवका। अलका। दण्डका। पिष्पका। कन्यका। मेनका। द्वारका। रेवका। सेवका। धारका। उपत्यका। अधित्यकेत्यादि। बहुवचनं गणार्थम्। अत्र हेमचन्द्र-लघुन्यासः—एड़केत्यादि। अत्र ईड़िक् ईरिक् आभ्यां "कीचक—" इति निपातनाद् गुणे एड़का एरका। क्षिपका आयुधविशेषः। ध्रुवका धुवकेति। आवपनविशेषौ। लहका सविलासा स्त्री। चरका ऋषिः। एड़का अजाविशेषः। एरका तृणम्। करका घनोपलः त्रिलिङ्गम्। अवका शेवालः इति।

शाकटायनव्याकरणे "त्यायदाद्यतः" [ १।३।९० ] इति सूत्रम्। तत्र यक्षवर्मविरचिता वृत्तिः—यदादिनिषेधः किम्? यका सका क्षिपका ध्रुवका। इति।

गणरत्नमहोदधौ यदादिगणे विस्पष्टतया सेवकाशब्दस्य समुल्लेखः सन्दृश्यते—

यच्छब्दो मेनका चात्र दण्डका-पिप्पकेष्टकाः।
रेवका धारका चैव द्वारकादेवकैरकाः॥
क्षिपका ध्रुपका चरका तत्सेवकया करकाचटके स्तः।
अवका-लहके अलका स्यात् कन्यकया ध्रुवकैड़कया च॥

[ १।६१-६२ ] इति। तत्र ग्रन्थकृता वृत्तावुक्तम्। सेवा भक्तिः। कुत्सिता वा सेवा सेवका इति।

भोजराजविरचिते सरस्वतीकण्ठाभरणव्याकरणे बहवः शब्दाः समुल्लिखिताः, सेवका पुनर्नोपात्तः। तथाहि तत्रत्यं सूत्रम्—

क्षिपका-ध्रुवका-धुवका-लहका-चरका-चटकेष्टकैड़कैरका-करका-ऽवकाऽलका-दण्डका-पिप्पका-कन्यका-मेनकादीनाम् [७।१।९४] इति।

यद्यप्यत्रादिशब्द उपात्तस्तथापि सेवकासदृशस्य सुप्रथित-शब्दस्यादिग्रहणेनेन ग्रहणं सर्वथाऽयुक्तमेव। अत एव सेवकाया अत्र गणे निवेशो ग्रन्थकर्तुरनभिमत इति प्रतिभाति।

संक्षिप्तसारव्याकरणस्य तद्धितपरिशिष्टे "क्षिपकादयः" [१४५१] इति सूत्रमुपलभ्यते। तत्र च वृत्तिः—क्षिपकादयो निपात्यन्ते। निपातनात् सर्वत्र इत्वाभावः। क्षिपका ध्रुवका। क्षिप प्रेरणे ध्रु गतिस्थैर्ययोः। इजुपान्त्यप्रादेरत् [ कृदन्त ३०८ ] इत्यत्। तदन्तात कः। चटका। एड़का। उपत्यका। अधित्यका। इति।

अत्रापि सेवाशब्दो न सन्दृश्यते।

मुग्धबोधे—काप्यनाशीरकेऽदिदय तत्क्षिपादेः [२५५] इति सूत्रस्य वृत्तौ "यदादेस्तु यका सका क्षिपका ध्रुवका चटका" इत्युक्तम्। टीकायां रामतर्कवागीशेनोक्तम्—

क्षिपका ध्रुवका चैव चटका धारकेष्टका।
करकाधित्यका प्रोक्ता चरकोपत्यकैड़का॥
अलका यक्षपुर्यान्तु पिटका वासकेत्यपि।
अष्टका तु पितर्यर्थे तारका भ-दृगंशयोः॥
वर्तका शकुनौ प्रोक्ता वर्णभेदे च वर्णका।
अत्यप्रकृतिकाः सर्वे नरिकामामिके विना॥ इति।

दुर्गादासविद्यावागीशेनाप्युक्तम् —

क्षिपका ध्रुवका चैव कारका धारकेष्टका॥

एड़का चटकाद्याश्च पितृणामष्टका भवेत् ॥
उपत्यकाधित्यका च तारका भटगंशयोः ।
वर्णका वस्त्रभेदे स्याच्छकुनौ वा तु वर्तका ॥ इति ।

उभाभ्यामपि टीकाकृद्भ्यां सेवकाशब्दोऽवज्ञयोपहत इति प्रतिभाति।

सुपद्मे "इदस्य कात् पूर्वस्यापि स्वार्थेऽक्षिपकादेः" [ ४।४।८५] इति सूत्रस्य वृत्तौ वा पञ्जिकायां वा सेवकाशब्दो न दृश्यते ।

हरिनामामृतेऽपि "प्रत्ययस्थात् कात् पूर्वस्याराममस्येराम आपि, न तु स्याद्यन्तादापि, क्षिपकादेश्च न" [ ७।६९ ] इति सूत्रगते क्षिपकादिगणे सेवकाशब्दो नोपलभ्यते । तथाच "त्यणत्यययोश्च" [ ७।७१] इति सूत्रस्य वृत्तिः—क्षिपका ध्रुवका चटका उपत्यका अधित्यका देवदत्तका इति ।

भाषावृत्तौ सिद्धान्तकौमुद्यां च यो गणपाठो मुद्रित उपलभ्यते तत्र सेवकाशब्दस्य सन्निवेशः समुपलभ्यते, स च हेमचन्द्राद्यनुरोधेनेति स्पष्टमेव। परं पाणिनित आरभ्याशाकटायनं कस्यापि प्रबन्धे क्षिपकादिगणे सेवका नोपलभ्यते इति पूर्वमेव प्रतिपादितम् ।

प्रक्रियाकौमुद्यामपि ( पृ० ३२९-३३० ) क्षिपकादिगणे सेवकाशब्दो नोपलभ्यते । तथाहि प्रसादसमाख्यायां टीकायां विट्ठलाचार्येण लिखितम्—क्षिपका ध्रुवकेति ।... चटति भिनत्ति गृहीतधान्यादिकं मुखेनेति चटका । चट स्फुट भेदे । दण्डका । इष्टका । हलका । ध्रुवका । चरका । पिप्पका । एड़का । अलका । करका । मेनका । कन्यका । एरका । इत्यादयोऽन्ये प्रयोगाज् ज्ञेयाः । इति ।

अयमत्र सारः । पाणिनिना वा कात्यायनेन वा पतञ्जलिना वा जयादित्येन वा चन्द्रेण वा पूज्यपादेन वा क्षिपकादिगणे सेवकाशब्दो न परिगणितः । क्रमेण कतिषुचित् स्थलेषु सेवैव इति स्वार्थे कुत्सिता सेवेति कुत्सार्थे च सेवाशब्दात् के सेविकाशब्दतो

भेदाकाङ्क्षया सेवकाशब्दस्य प्रयोगमुपलभ्य वर्धमान-हेमचन्द्रादिभिः सेवकाशब्दोऽपि क्षिपकादिगणे पठितः, परं सेवकशब्दस्य स्त्रियां सेविकेत्यत्र सर्वेषामैकमत्यम्। अर्वाचीनैर्वैयाकरणैरीदृशसेवका-शब्दस्य प्रयोग एव नास्तीति मत्वा पुनरपि गणतः सेवकाशब्दः समुत्सारितः।

---

# रसमञ्जरी

[ श्रीफाल्गुनि-मुखोपाध्याय-विरचितात् "प्रिया ओ पृथिवी' इति ग्रन्थात्। ]

रन्ती तावत् प्रथमत एव पुस्तकस्य प्रच्छदपटमेवापश्यत्—सुमनोहरं विविधवर्णभासुरं चित्रमेकम्। पुस्तकस्य समाख्या—नष्टचन्द्र इति। लेखकः—सुवीर-चतुर्धुरीणः। मूल्यं रूप्यकद्वितयम्। प्रकाशकः—

अरक्षद् रन्ती पुस्तकं टेबिलोपरि। सुवीरोऽवदत्—"किमिति रक्षितम्? दृश्यताम्" इति।

"कस्य पुस्तकं यदहं द्रक्ष्यामि? न खलु मह्यमुपहृतमिदं पुस्तकम्।"

"माई गड्। इट्स् फर् इउ। भवत्या एव कृते आनीतम्। अपि लेखनमपेक्ष्यते? अल् राइ ।"

पुस्तकं समाकृष्य सुवीरः कञ्चुककोषाल्लेखनीं निष्कास्या-लिखत्—कुमारी रन्ती अधिकारी करकमलेषु। "एहि गृह्यताम्" इत्यवदत् सुवीरः।

"मदीयं नाम तावदवन्ती। नामैव विस्मृतं भवता, उच्यते च मदर्थमेवानीतमिति।"

"अहो! सरी।" ततश्च रन्त्या रेफं वकारमापाद्य तस्माच्च पूर्वमकारं विनिवेश्य अवन्तीति विहितं सुवीरेण। रन्त्या पुनरुक्तम्—"प्रमादः संवृत्तः। अनया बुद्ध्या साहित्यं करोति भवान्!" इति।

"क्व प्रमादः? कच्चिद् अवन्तीति न भवत्या नाम!"

"अथ किम्। परं करकमलेषु इति प्रामादिकम्। अहं तावत् स्त्रीजातीयेति। संस्कृतभाषया चेन्नालेखिष्यत शोभनमभविष्यत्। स्त्रियां कीदृशं रूपं स्यात्?"

"आइ सी!" सुवीरेण लिखितम्—"करकमलासु" इति।

"इदानीमपि प्रमादो वर्तत एव। दन्त्यसकारोपरि ह्रस्वोकारः स्यात्।"

"भवती स्वयं वाग्देवीति पश्यामि।" सुवीरः पुनरपि निकृत्य विलिख्यावदत्—"आइ अ्याम् सो भेरी प्लीजड्। वङ्गभाषायां भवत्या ईदृशी व्युत्पत्तिः। एतादृशोऽनुरागो वङ्गभाषायाम्।" इति।

---

# महाभाष्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( २ )

Patañjali's commentary on Pāṇini's Aṣṭādhyāyī is known as the Mahābhāṣya or the great commentary, or the commentary *par excellence.* There are many Bhāṣyas in Sanskrit, but this Bhāṣya has been known from time immemorial as the Mahābhāṣya, because it is great in bulk, great in intellect, great in power and great in splendour*.

* Cf. Kathāsaritsāgara CI. 38:

महान्तश्च महान्त्येव कृच्छ्राण्युत्तीर्य धैर्यतः।
महतोऽर्थान् समासाद्य महच्छब्दमवाप्नुवन्॥

"Atha s'ābdānus'āsanam" is generally regarded as belonging to Patañjali himself, and since he explains his own words at the very beginning, a Bhāṣya has come to be defined thus :—

सूत्रस्थं पदमादाय वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

'That which takes up the words of the rule one by one and explains them with sentences in keeping with the drift of the rule and which explains its own words also is a Bhāṣya*.'

In Rājas'ekhara's Kāvyamīmāṃsā we find :

आक्षिप्य भाषणाद् भाष्यम् ।

'A Bhāṣya is so named because it raises objections and offers solutions to them.'

Haradatta's definition is more lucid :

आक्षेपसमाधानपरो ग्रन्थो भाष्यम् ।

The portion of a work which is taught in one day is known as āhnikam ( ahnā nirvṛttam ). The first āhnika, here, is known as the Paspas'āhnika, because it gives a bird's eye-view of the entire work. The word Paspas'a or Paspas'ā is derived from the intensive of the root *spas'* ( to see ) which is the older form of *pas'* ( to see ), but which became obsolete in the later language, being retained in a very few words like *spas'a* spy, *spaṣṭa* clear etc. The root is cognate

---

* This reminds one of Byron's delightful description of Coleridge :

"Explaining metaphysics to the nation—
I wish he would explain his Explanation."

with Greek *skeptomai* 'look about', Lat. *specio* 'behold' and Old High German *spehon* and occurs in the English words speculum, spectacles, scope, sceptic, spy etc. In Greek there has been metathesis of *k* and *p*.

Acc. to Kātyāyana *paspas'ā* appears to be derived from the curādi root *spas'* which is read in the Dhātupāṭha as *spas'a grahaṇa-saṃs'leṣaṇayoḥ* and which evidently has spās'ayate in the present. Thus Kātyāyana has the Vārttika :

**अभ्यस्तानामुपधाह्रस्वत्वमपि पस्पशाते चाकशीमि वावशतीरिति दर्शनात् । ७।३।८७।१**

But forms like *aspaṣṭa, paspas'e* etc. occurring in Vedic literature clearly demonstrate the existence of a non-causal *spas'* from the intensive of which *paspas'a* is derived.

Coming now to the Bhāṣya proper, the very first words of the Mahābhāṣya **अथ शब्दानुशासनम्** have been the subject of much dispute. The exact meaning of the particle *atha* and of the compound *s'abdānus'āsanam* have been discussed at great length by annotators and commentators and even poets and poetasters have aspired to give us the sense of the entire expression. One poet writes :

**गुर्वन्तिके क्रिया पूर्वं संज्ञयार्थावबोधनम् ।**
**करोति पत्युर्युवतिरथ शब्दानुशासनम् ॥**

'In the presence of the elders the (bashful) young bride instructs her husband in love by means of signs, then (after the elders have moved away) she conveys her instructions in words.'

The following stanza from the Mahābhārata (S'āntiparvan, ccxxix, 76) will be read with interest in this connexion :

**श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानशासत ।**
**अन्वशासच्च भर्तारं समाह्वायाभिजल्पति ॥**

'The daughter-in-law storms at her servants in the pre-

sence of her father-in-law and mother-in-law. And she instructs her husband, sends for him and talks to him (in their presence).'

This is all very interesting but we are not concerned with it just at present. What is a matter of moment to us now is the authorship of the words—अथ शब्दानुशासनम्. According to several ancient writers this is the very first rule of Pāṇini's Aṣṭādhyāyī. Thus Medhātithi says in his Bhāṣya on Manu i. 1 : पौरुषेयेष्वपि ग्रन्थेषु नैव सर्वेषु प्रयोजनाभिधानमाद्रियते। तथाहि भगवान् पाणिनिरनुक्त्वैव प्रयोजनम् अथ शब्दानुशासनम् इति सूत्रसन्दर्भमारभते, i.e. even in human compositions (the canon regarding) the mention of the object and aim (of the particular treatise) is not observed in all cases; thus the revered Pāṇini begins his series of rules अथ शब्दानुशासनम्. etc. without so much as a mention of the object (of the study). It is clear from this statement of Medhātithi that he regards अथ शब्दानुशासनम् as the first rule of the Aṣṭādhyāyī.

Patañjali, however, while apologizing for Pāṇini's use of the word वृद्धि in his rule वृद्धिरादैच् says that the word has been used at the very beginning for the sake of auspiciousness; कथं वृद्धिरादैजिति? एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। (ed. Kielhorn, Vol. I. p. 40). Thus according to Patañjali, वृद्धिरादैच् is the first rule of the Aṣṭādhyāyī. According to Bhartṛhari, Kaiyaṭa and others also अथ शब्दानुशासनम् is the first sentence of Patañjali. Thus Kaiyaṭa who follows Bhartṛhari says: भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात् प्रयोजनमाह—अथ शब्दानुशासनमिति।

This difference of opinion on the authorship of अथ शब्दानुशासनम् does not appear to us hard to reconcile. It is well-

known that ancient sūtra treatises generally begin with अथ* and it is just possible that the first rule in all or most ancient works on grammar was अथ शब्दानुशासनम् and since it was so common it was not felt as the first rule. (Readers of Edgar Wallace will appreciate this point.) It was looked upon as the name of these works. This is why Patañjali refers to वृद्धिरादैच् as the first rule.

Mādhava says under *spas'a bādhana-spars'anayoḥ :*

पस्पशा। यङ्लुगन्तादचि टाप्। संज्ञापूर्वको विधिरनित्य इति नाभ्यासस्य दीर्घः। अत्र स्वामी पष इत्येके इति, तेन पाषण्ड पाषाण इत्याह। दुर्गशाकटायनयोरप्ययमेव पक्षः। अनयोः पाठे, "प्रति स्पशो वि सृज तूर्णितमः" [ ऋ सं ४।४।३ ] "यतो व्रतानि पस्पशे" [ ऋ स १।२२।१९ ], "उपसर्गश्च स्पशः" "शब्दविद्येव नो भाति राजनीतिरपस्पशा" [ शिशुपाल २।११२ ] इत्यादिप्रयोगा अननुगुणाः।

Vallabha says under S'is'. ii. 112 :

अपस्पशा। अनुक्तप्रयोजना।...अविद्यमानः पस्पशः प्रयोजनग्रन्थो यस्याः सा अपस्पशा। यावन्न तत्रोक्तम् — "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति, तावन्न तत्र गौरवं स्यात्।

Mallinātha says ;

पस्पशः शास्त्रारम्भसमर्थक उपोद्घातसन्दर्भग्रन्थः।

Annambhaṭṭa says in his Pradīpoddyotana ( p. 66 ) :

अत्र विषयप्रयोजनाभावाच्छास्त्रानारम्भशङ्का तदशक्तिकथनेन, जातिव्यक्त्योरन्यतरस्य शब्दार्थत्वे शास्त्रस्याव्यापकत्वदोषेणानारम्भशङ्का उभयार्थत्वकथनेन, शब्दार्थसम्बन्धानित्यत्वे अन्योन्याश्रया-

---

* Thus the Vājasaneyi Prātis'ākhya says :
ओङ्कारं वेदेषु। अथकारं भाष्येषु। १।१७-१८ where भाष्येषु evidently means in works composed in classical Sanskrit.

दिदुष्टतया अनारम्भशङ्का "सिद्ध-" [वार्त्तिक १] इत्यादिना तन्नित्यत्व-कथनेन च निरस्तेत्युपोद्घातत्वेनेदमाह्निकम्। चतुर्दशसूत्र्या अपि शास्त्रप्रवृत्त्यर्थत्वात् तत्समर्थनमप्युपोद्घात एव। अत एवेदं पस्पशाह्निकमित्युच्यते। शास्त्रारम्भसमर्थकोपोद्घातग्रन्थसन्दर्भस्य पस्पशाशब्देन वृद्धैर्व्यवहारात्।

शास्त्रस्यारम्भको ग्रन्थ उपोद्घात इतीरितः।
स एव ग्रन्थसन्दर्भः पस्पशः कथितो बुधैः॥

---

## PRIZE COMPETITION

**The prize of Rupees Ten is awarded to Sahitya-lankara Sree Nagaraja of 11 Wilsons Gardens, Bangalore**

Jesu, lover of my soul,
Let me to Thy bosom fly,
While the nearer waters roll,
While the tempest still is high.
Hide me, O my Saviour, hide,
Till the storm of life be past;
Safe into the haven guide,
O receive my soul at last!

Other refuge have I none;
Hangs my helpless soul on Thee;
Leave, ah! leave me not alone,
Still support and comfort me!
All my trust on Thee is stayed,
All my help from Thee I bring,
Cover my defenceless head
With the shadow of Thy wing.

Wilt Thou not regard my call?
Wilt Thou not accept my prayer?
Lo! I sink, I faint, I fall,
Lo! on Thee I cast my care.
Reach me out Thy gracious hand
While I of thy strength receive;

Hoping against hope, I stand ;
    Dying, and behold I live !

Thou, O Christ, art all I want,
    More than all in Thee I find ;
Raise the fallen, cheer the faint,
    Heal the sick, and lead the blind.
Just and holy is Thy name,
    I am all unrighteousness;
False and full of sin I am,
    Thou art full of truth and grace.

Plenteous grace with Thee is found,
    Grace to cover all my sin;
Let the healing streams abound,
    Make and keep me pure within.
Thou of life the fountain art,
    Freely let me take of Thee ;
Spring Thou up within my heart,
    Rise to all eternity.

## ईशस्तुतिः

[ साहित्यालङ्कारः श्रीनागराजः ]

भ्रमज्जवाम्भोनिधिभङ्गमध्यादुड्डीय शम्भो त्वरितं त्वदीयम् ।
महोन्नते तिष्ठति दुःखवाते पादाब्जमध्ये तु मनो मदीयम् ॥ १ ॥
आजीवितान्तं परिपालय त्वं सर्वेश लोकावनदक्ष दीनम् ।
आत्मानमूरीकुरु देवलोकमार्गं ममाचक्ष्व च दीनबन्धो ॥ २ ॥
नान्यं विना त्वां शरणं हि जाने त्वय्येव लीनः खलु मेऽन्तरात्मा ।
जहीहि मा निर्गतिकं विभो मां गतिस्तथालम्बनमेव मे त्वम् ॥ ३ ॥
त्वय्येव भक्तिर्मम निश्चलास्ति ददासि सर्वं सुखमेव मे त्वम् ।
अरक्षितं रक्ष तवेह पक्षच्छायावृतं शीर्षमपायतो मे ॥ ४ ॥
शृणोषि नाक्रन्दितमत्र किं मे मत्प्रार्थनामप्युररीकरोषि ।
पताम्यधोऽधो न लभे स्मृतिं च त्वामेव देवं शरणं प्रपद्ये ॥ ५ ॥

त्वत्पाणिपङ्केरुहलालितं मां कुरुष्व शक्त्या कृतिनं तवेह ।
आशाशतैरुद्ग्रथितान्तरात्मा जीवामि मध्येमरणं महेश ॥ ६ ॥
सर्वाणि वस्तून्यतिरिच्य शम्भो देवाय तुभ्यं स्पृहयामि नूनम् ।
आश्वासयार्तान्नय देव त्राणान् समुद्धर त्वं पतितान् हि लोके ॥७॥
नाम त्वदीयं परमं पवित्रं स्थितोऽस्म्यहं धर्मविरुद्धमार्गे ।
पापावृतात्माहमनिन्दितस्त्वं सत्यप्रतिष्ठः करुणाभिपूर्णः ॥ ८ ॥
प्रभूतकारुण्यनिधिस्त्वमीश निहंसि तेनैव ममाघसङ्घम् ।
कृपाप्रवाहाः परमं पवित्राः पुनन्तु मेऽन्तःकरणं समस्तम् ॥९॥

आधारभूतो जगतामसि त्वं
त्वत्तोऽभिगृह्णाम्यखिलं यथेष्टम् ।
प्रादुर्भव त्वं हृदये मदीये
त्रैलोक्यमाक्रम्य च तिष्ठ शश्वत् ॥ १० ॥

---

## पुस्तकपरिचयः

**व्याकरणमहाभाष्यम् ।** कैयटविरचित-प्रदीपेनान्नंभट्ट-विहितेन च प्रदीपोद्द्योतनेन समलङ्कृतम् । ( प्रथमादिचतुर्थाह्निकरूपः प्रथमो भागः । ) स्वर्गत पी पी एस् शास्त्रि-महोदयेन ए. शङ्करन्-महाभागेन च सम्पादितम् । मूल्यं द्वादशाणकाधिकविंशतिरूपकाः । Madras Government Oriental Mannscript Series No. 7 रूपोऽयं ग्रन्थः । Superintendent, Government Press, Madras इत्यतो लभ्यम् ।

सहृदयाः, सुविरलान्येवात्र तथाविधानि पुस्तकानि येषां पुनः पुनरनुशीलनेनाप्ययातयामत्वमनुभूयते, यानि च प्रतिक्षणमेवाभिनवतामादधानानि विमोहयन्ति मानसानि सहृदयानाम् । ईदृशेषु च सुविरलेषु ग्रन्थेषु प्रामाणिकप्रवरपतञ्जलि-विरचितस्य महा-

भाष्यस्यान्तर्भावः कस्य वा सचेतसो नाभिमतः स्यात् । अत एव "महाभाष्यं वा पठनीयं महाराज्यं वा पालनीयम्" इति जागरूकाभियुक्तोक्तिः । स्वप्रज्ञया परिशीलितं महाभाष्यं स्वहस्तधृतदण्डमातपत्रमिव यथा श्रमाय भवति न तथा श्रमापनोदनाय । यद्यपि महाभाष्यगताः शब्दाः प्रायेण सर्व एव सुपरिचिता एव सुरभारतीसेवकानाम्, तथापि बहुत्र वाक्यानामाशयः सर्वथा दुरवबोध एव। अत एव व्याकरणमहाभाष्यमिदं व्याख्यानसापेक्षं संवृत्तम् । महाभाष्यस्य च व्याख्यानद्वितयमेवेदानीमुपलभ्यते—भर्तृहरिविरचिता महाभाष्य-प्रदीपिका (खण्डिता) कैयट-प्रणीतश्च महाभाष्यप्रदीपः। तत्र च महाभाष्यप्रदीपिकाया एकमेव हस्तलिखितं पुस्तकं बर्लिन-प्रदेशे वर्तते, तदपि खण्डितमेव, केवलमादित आरभ्य कतिचिदाह्निकानि तत्र व्याख्यातानि वर्तन्ते । सौभाग्यतः पुनरस्माकं महाभाष्यप्रदीपः समग्र एवोपलभ्यते । कालक्रमेण च प्रदीपोऽपि व्याख्यानसापेक्षः संवृत्तः । तस्य च व्याख्यानेषु नागेशभट्ट-विरचित उद्द्योत एव मुद्रणपथमवतीर्णः । इदानीमन्नंभट्टविरचितस्य प्रदीपोद्द्योतनस्य प्रकाशनेन सुमहदेवोपकृतं संस्कृतभाषानुरागिणाम् । तर्कसंग्रहस्य विरचयितान्नंभट्टः कस्य वा न परिचितः संस्कृतज्ञस्य । स च नागेशभट्टतः प्राचीन इति प्रतिभाति । "काशीगमनमात्रेण नान्नंभट्टायते द्विजः" इति वचनं तस्यानितरसाधारणं वैदुष्यं प्रमापयति ।

सुमनोरमे पत्रे सुरम्यैः सीसकाक्षरैः सयत्नं सम्मुद्रितोऽयं ग्रन्थः सन्दृष्टमात्र एव वाचकस्य मानसं समाकर्षति । सम्पादनशैली पुनर्न समीचीना । न केवलं मुद्रणप्रमादानामतिमात्रं बाहुल्यं सुतरां समुद्वेजकम्, समुद्धृतवचनानामाकरस्थानानामसन्निवेशोऽपि क्लेशायैव वाचकस्य। तथाहि ६७ पृष्ठे दृश्यते—यद्यपि ज्ञाना-

ध्ययनयोरध्यापकपरम्परासिद्धत्वान्न व्याकरणापेक्षा, तथापि "अणोरणीयान्" "अणवश्च मे" इत्यादावेकस्यैवाणुशब्दस्यान्तोदात्तत्वाद्युदात्तत्वदर्शनेन धान्यवाचिन आद्युदात्तत्वं परिमाणवाचिनोऽन्तोदात्तत्वमिति विवेकस्य व्याकरणाधीनत्वादित्यादि। तत्र "अणोरणीयान्" "अणवश्च मे" इति श्रुतिद्वयं सस्वरचिह्नं मुद्रणीयमासीत्, वचनयोर्मूलमप्युल्लेखनीयमासीत्, तद्द्वयमपि संस्कारकमहाभागैर्न कृतमिति नितरां विषादकरम्। अत्र "अणश्च" "धान्ये नित्" [ उणादि १।८-९ ] इति सूत्रद्वयं संस्मरणीयम्। तत्र प्रथमेन सूत्रेण अण शब्दे इत्यस्मादुप्रत्ययः स्यात् प्रत्ययस्वरेणाणुशब्दस्यान्तोदात्तत्वं सिध्यति, द्वितीयेन च सूत्रेण धान्यवाचिनोऽणुशब्दस्य प्रत्ययस्य नित्त्वादाद्युदात्तत्वम्।

३५ पृष्ठे दृश्यते—"सकृदिति। सकृद्गतौ विप्रतिषेधेन यद्‌ बाधितं तद्‌ बाधितमेवे"ति। भाष्ये तु सर्वत्र 'विप्रतिषेधे' इति पाठ उपलभ्यते।

५१ पृष्ठे—"शब्दान् जानाति" "पुनः ऋषिः"—इति स्थलद्वितये सन्ध्यकरणमुद्वेजकमेव।

सत्यप्यङ्गवैकल्ये ग्रन्थोऽयं सुतरामेवोपादेयः संवृत्तः। आशास्यते चावशिष्टा अपि भागा नातिचिरादेव प्रकाश्येरन्, अवदधीरंश्च सम्पादकमहाभागाः प्रूफ्संशोधने समुद्धृतवचनानां मूलान्वेषणे चेति।

**Span of Life**—( आयुर्गणना ) ज्योतिषाचार्य जी श्रीराममूर्त्तिना विरचितोऽयं ग्रन्थः, ग्रन्थकारसकाशात् ( Tekkali P. O., B. N. Ry., North Vizag ) लभ्यम। मूल्यं रूप्यकपञ्चकमात्रम्।

"आयुरादौ परीक्षेत" इति ज्योतिःशास्त्राणि समामनन्ति। आयुषः परीक्षणं च न सुकरम्। जैमिनिपराशरादीनां मुनि-

प्रवराणां वचनानीदानीं प्रायेण दुरवबोधान्येव सञ्जातानि । अत एव ज्योतिःशास्त्रे कृतश्रमेण लब्धप्रतिष्ठेन श्रीरामसूर्त्तिमहोदयेनाङ्गलभाषामयेऽस्मिन् ग्रन्थे सरलया सुबोधया च प्रणाल्या विविधा आयुर्विचारप्रकाराः प्रतिपादिताः। अत्र च द्वादशस्वध्यायेषु क्रमेण बालारिष्टयोगाः, बालारिष्टभङ्गयोगाः, अल्प-मध्य-पूर्णापरिमितायुर्योगाः, अल्पमध्यपूर्णायुर्निर्णयोपायाः, कालिदास-प्रदर्शित-नक्षत्रायुर्दायः ग्रहदत्तपिण्डायुर्दायः, जैमिनिमतेनायुर्निर्णयः, अष्टवर्गविचारः, गोचरायुर्दायः, दशान्तर्दशायुर्दायः, प्रकारान्तराणि, पताकीरिष्टिश्च समुपवर्णितानि । सर्वत्रैव सति प्रसङ्गे उदाहरणान्युपन्यस्तानि । अवश्यं संग्राह्यमिदं सुमनोहरं पुस्तकं ज्योतिषशास्त्रानुरागिभिराङ्गलभाषामिज्ञैरिति शिवम् ।

**सुसिद्धान्त-पञ्जिका ।** पण्डित-श्रीद्विजपद-गोस्वामिना १०२।३ बकुलबागान रोड, भवानीपुर, कलिकाता २५ इत्यतः प्रकाशिता । मूल्यं सपादरूप्यकम् ।

सूर्यसिद्धान्ताभिप्रायसम्मतदृग्गणितैक्यसाधनेन विनिर्मितमिदं वङ्गभाषामयं पञ्चाङ्गं विशेषतो नः प्रीतिमुत्पादयति । अत्र प्रथमत एव ग्रहस्पष्टानि सन्निवेशितानि, ततो दिवसानुक्रमेण तिथ्यादिकं वारवेलाकालवेलादिकं च निर्दिष्टम् । अभिनवेयं पञ्जिका वङ्गीयानां धर्मकार्ये साहायकं विधास्यतीति नो बुद्धिः ।

**नृत्तमञ्जरी ।** श्रीमत्या लीलारावा विरचिता । Indian Society of Oriental Art, Calcutta इत्यनेन प्रकाशिता । मूल्यं पञ्चदशरूपकाः ।

अतिमात्रं समीचीनस्य पञ्चशताधिकनृत्तचित्रसमुद्भासितस्य ग्रन्थस्यास्य समालोचनमागामिन्यां संख्यायां प्रकाशयिष्यते । त्वरन्तां ललितकलानुरागिणो ग्राहका अस्य संग्रहायेति शिवम् ।

MANJUSHA ( Sanskrit Monthly Magazine )

*Registered No. C. 3278*



Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्



४२-वर्षे १०म-संख्या

# मञ्जूषा

संस्कृतभाषामयी मासिक-पत्रिका

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Special Articles.

Unpublished stotra of Shri Shankaracharya

Shiva-nadi ( a work on Astrology)

Sanskrit Digvijaya
by Prof. Suniti Kumar Chatterji, M. A., D. Lit.

Mahabhasya of Patanjali with Notes and Translation.



Office : 81 Shyambazar Street, Calcutta—4.

Annual Subscription : Rupees Six only.

Foreign : Rupees Eight.

# MAHABHASHYA

A big instalment of notes next month, discussing the propriety of the examples of classical and vedic speech.

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदः सभाष्ये मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। —ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत।

श्रीविश्वनाथ चट्टोपाध्यायः।

८१ श्यामबाजार ष्ट्रीट, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone : B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

June, 1950. | १८७२-शकीयाषाढस्य ४र्थ-वर्षस्य १०म-संख्या | Vol. IV No. 10

॥ श्रीगणेशाय नमः ॥

## श्रीमच्छङ्कराचार्य-विरचितम्

## ॥ श्रीशिवाष्टकम् ॥

—:o:—

कर्पूराभं ध्याननिविष्टं सुरवन्द्यं
कालातीतं योगविशुद्धैश्चिरमृग्यम् ।
आशापाशध्वान्तविनाशं जगदाद्यं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ १ ॥

तारानाथद्योतितचूडं नयनाग्नि-
ध्वस्तानङ्गं गजवरचर्माम्बरवाहम् ।
चञ्चद्रत्नालङ्कृतसिंहासननागेशं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ २ ॥

ज्ञानातीतं ज्ञानवरिष्ठं जपसारं
वेदावेद्यं वेदविचारैकनिदानम् ।
कर्णद्वन्द्वे वासुकितक्षौ कलयन्तं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ ३ ॥

सच्चिद्रूपं मूर्ध्नि जटौघाङ्कितगाङ्गम्
ब्रह्मोत्पत्तेः कारणमाद्यं पुरुषाभम् ।
पार्थावाप्तपाशुपतास्त्रं त्रिपुरारिं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ ४ ॥

खट्वां कण्ठे वक्षसि हस्ताङ्गुलिमूले
पादद्वन्द्वे पन्नगपङ्क्त्या विलसन्तम् ।
लङ्केशाद्ध्यानगमाशार्पितराज्यं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ ५ ॥

सम्यग्ज्ञानानन्दसुधाब्धिं प्रणवाख्यं
...नन्दं ब्रह्म पुराणं परमेशम् ।
विश्वाकारं विश्ववरिष्ठमृषिगीतं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ ६ ॥

लोकालोकं लोकविनाशं गिरिजार्धम्
पारावारान्तर्गतशेषाकृतिपट्टम् ।
गोकर्णेशं किन्नरगानार्पितचित्तं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ ७ ॥

पद्मासीनं स्थापितपद्मापतिचित्तं
विश्वोत्पत्तेः कारणमाद्यं स्फटिकाभम् ।
कम्बुग्रीवं भूषणवामाङ्गनवाहं
गौरीकान्तं श्यामलकण्ठं शिवमीडे ॥ ८ ॥

पूजाकाले भावविशुद्धिं विदधानम्
भक्त्या नित्यं चाष्टकशैवं पठते यः।
वाचासिद्धिं सम्पदमुच्चैः शिवभक्तिं
तस्यावश्यं शङ्कर एवं विदधाति ॥ ९ ॥

इति श्रीमच्छङ्कराचार्यविरचितं श्रीशिवाष्टकं स्तोत्रं सम्पूर्णम् ॥ श्रीसदाशिवार्पणमस्तु ॥

---

## ॥ श्रीमच्छङ्कराचार्यविरचितं श्रीगौरीदशकम् ॥

लीलारब्धस्थापितलुप्ताखिललोकां
लोकातीतैर्योगिभिरन्तश्चिरमृग्याम्।
बालादित्यश्रेणिसमानद्युतिपुञ्जां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १ ॥

प्रत्याहारश्रेणिसमानस्थितिभाजां
नित्यं चित्ते निर्वृतिकाष्ठां कलयन्तीम्।
सत्यज्ञानानन्दमयीं तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ २ ॥

नानाकारैः शक्तिकदम्बैर्भुवनानि
व्याप्य स्वैरं क्रीडति येयं स्वयमेका।
कल्याणीं तां कल्पलतामानतिभाजां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ३ ॥

चन्द्रापीडानन्दितमन्दस्मितवक्त्रां
चन्द्राचूडालङ्कृतिलीला······भाराम्।
इन्द्रोपेन्द्राभ्यर्चितपादां कृतयुग्मां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ४ ॥

मूलाधारादुत्थितवक्त्राधररन्ध्रां
सौरं चान्द्रं व्याप्य विहाय ज्वलिताङ्गीम्।
येयं सूक्ष्मात्सूक्ष्मतनुस्तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ५ ॥

आदिक्षान्ताद्यक्षरमूर्त्या विलसन्तीम्
भूते भूते भूतकदम्बप्रसवित्रीम्।
शब्दब्रह्मानन्दमयीं तां तनुमध्यां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ६ ॥

यस्याः कुक्षौ लीनमखण्डं जगदण्डं
भूयो भूयः प्रादुरभूदुत्थितमेव।
पत्या सार्धं तां रजताद्रौ विहरन्तीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ७ ॥

आशापाशक्लेशविनाशं······
पादाम्भोजपराणां पुरुषाणाम्।
ईशामीशाङ्गार्धहरां तामभिरामां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ८ ॥

यस्यामेतत्प्रोतमशेषं मणिमाला-
सूत्रे यद्वत् क्वापि चलं चाप्यचलं च।
तामध्यात्मपदव्या गमनीयां
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ ९ ॥

नित्यः शुद्धो निष्कल एको जगदीशः
साक्षी यस्याः सर्गविधौ संहरणे च॥
विश्वत्राणक्रीडनलोलां शिवपत्नीं
गौरीमम्बामम्बुरुहाक्षीमहमीडे ॥ १० ॥

सायं प्रातर्भावविशुद्धिं विदधानो
भक्त्या नित्यं जल्पति गौरीदशकं यः ।
वाचांसिद्धिः सम्पदमुच्चैः शिवभक्तिं
तस्यावश्यं पर्वतपुत्री विदधाति ॥ ११ ।

इति श्रीमच्छङ्कराचार्यविरचितं श्रीगौरीदशकं स्तोत्रं सम्पूर्णम् ॥ श्रीगौरीसमर्पणमस्तु ॥

---

श्रीशः शरणम्

# श्रीमच्छङ्कराचार्यविरचितम् अद्य यावदप्रकाशितं स्तोत्रयुगलम् ॥

[ प्रेषकः—रघुनाथ-कृष्ण पाटणकरः, राजापुर ( रत्नागिरिः )]

श्रीमद्भगवत्पूज्यपादानां शङ्कराचार्याणां कृतिषु प्रस्तुतं श्रीशिवाष्टकं श्रीगौरीदशकं चेति लघु स्तोत्रयुगलं नाद्य यावन्मम नयनसरणिं गतं नापि ममोपलब्धग्रन्थसूचीग्रन्थेषु । गते विरोधिसंवत्सरान्तेऽत्रत्ये श्रीसंस्कृतपुस्तकसंग्रहालये अस्मान्नगरान्नातिदूरं विंशतिक्रोशे स्थिते देवालय-( देवेले )-ग्रामवासिनां वर्षद्वयात्प्राग् दिवं गतानाम् आठल्ये इत्युपाह्वानां पण्डितवर्याणां सीतारामशास्त्रिणाम् आत्मारामतनयानां प्रायोऽष्टोत्तरसंस्थानां प्रायस्तत्पूर्वजैः झांशीप्रान्ते सपादशताब्द्याः प्राग् लिखितानां ग्रन्थानां संग्रहः संप्राप्तः, तत्र तदपूर्वं स्तोत्रयुगलं लोचनगोचरतां गतम् । पण्डितवर्या इमेऽशीतिवर्षा माहुलीक्षेत्रवासिनां पण्डितप्रकाण्डानाम् ऋषिकल्पानां गोडबोले इत्युपाह्वयानां रामशास्त्रिणामन्तेवासिनः महामहोपाध्यायानाम् अभयंकरवासुदेवशास्त्रिणां पुण्यपुरनिवासिनां सहाध्यायाश्चासन् ॥ श्रीमद्भगवत्पूज्यपादानां

स्तुतिरत्नावलि-( हरिमीडेनाम्ना प्रसिद्ध )-स्तोत्रयत्र श्रीशिवाष्टके "गौरीकान्तं श्यामलकण्ठं शिवमीडे" इति श्रीगौरीदशके "गौरीमम्बामम्बुरुहाक्षीमहमीडे" इति च प्रतिश्लोकं तुरीयचरणत्वेन स्थितम्। अतस्त्रयाणां स्तोत्राणां नापरः कोऽपि प्रणेता श्रीमद्भगवत्पूज्यपादेभ्य इति समध्यवसीयतेऽस्माभिः।

"मञ्जूषा"-मासिकस्य प्रकृतेऽब्दे तुरीये द्वितीयसंख्यायां श्रीमद्भगवत्पूज्यपादानां "श्रीसच्चिदानन्दानुभवप्रदीपिका"-नामकोऽनुपलब्धपूर्वः पञ्चप्रकरणात्मको लघुग्रन्थः प्राथम्येन प्रकाशितः। नातिचिरेण प्रकृतं स्तोत्रयुगलम् इहैव प्रथमत एव प्रकाश्यत इति परं सौभाग्यम्। अन्येऽन्येऽप्येवंविधा नैके ग्रन्थाः श्रीमद्भगवत्पूज्यपादविरचिताः समुपलप्स्येरन्निति न स्तोकोऽपि सन्देहस्यावसर इति सकलं शिवम्॥

चैत्रशुद्धप्रतिपद् ( १८७२ शकाब्दस्य ) रविवारः
श्रीसंस्कृतपुस्तकसंग्रहालयः श्रीसंस्कृतपाठशाला, राजापुर
( रत्नागिरि )

दत्तात्रेयजनार्दनौ गुरुवरौ सौभ्रात्रसन्दर्शकौ
छात्रव्रातसमन्वितौ समुचिते पात्रे गुणानां सताम्।
राधाकृष्णपदारविन्दनिरतौ विद्वज्जनैः संस्तुतौ
स्यातां वै रघुनाथहृत्कुवलये नित्यं प्रतिष्ठापितौ॥

---

## आभाणकादि

१। (अ) "Wenn dich die Lästerzunge sticht,
So lass die dies zum Troste sagen:
Die schlechtsten Früchte sind er nicht
Woran die Wespen nagen."

BUERGER

"When the tongue of slander stings thee, let this be thy comfort—they are not the worst fruits on which the wasps alight."

यदापवादजिह्वा त्वां पीडयेत्, तदेयं ते सान्त्वना भवतु—नहि कुत्सिततमेष्वेव फलेषु भ्रमरा निषीदन्तीति।

२। It is a good horse that never stumbles and a good wife that never grumbles.

स एव शोभनोऽश्वो यः कदापि न स्खलति, सैव च शोभना पत्नी या कदाप्यसन्तोषवचनं नोच्चारयति।

३। (व) अजा कचा बुड़ा मेष दधिर आद्य घोलेर शेष।
हाँसेर तला वकेर गला मुर्गीर रान कवुतरेर सव
खान॥

अजो युवाद्यं दधि वृद्धमेषो
हंसोदरं कुक्कुट-गल-तक्र-शेषौ।
सर्वः कपोतः कृकवाकुपक्षं
तत्तद्विदः स्वादु वदन्ति भक्ष्यम्॥

४। (व) घर जामाइ पोष्यपुत्र महन्तेर चेला।
महाराजेर युवराज, अपुत्रेर शाला॥
गृहस्थितो विट्पतिरत्र दत्तकः
सन्न्यासिनः श्रेष्ठतमश्च सेवकः।
श्यालोऽसुतस्यावनिपस्य चात्मजः
प्रभोरमी नाशमुशन्ति सत्वरम्॥

५। (व) नाइ देशे भेरण वृक्ष।
"यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥"

# भगवान् श्रीरमणः

[ श्रीमहालिङ्ग-शास्त्री ]

अद्य भगवान् श्रीरमणः चैत्र-कृष्ण-त्रयोदश्यां ( 14-4-1950 ) भृगुवासरे विदेह-कैवल्यं श्रित इति हर्षविषादान्तरे पतिताः स्मः। तेषां मुक्तिकाले वय एकाधिका सप्ततिर्वर्षाणि। आ सप्तदशाब्दात् ते अरुणाचलक्षेत्रे कृतवसतयो मुनिचर्यामन्वतिष्ठन्, आत्मारामाश्चाभवन्। चिराय गिरिगुहागृहाणां तेषां कालक्रमेण भक्तैः अधस्तादाश्रमः प्रतिष्ठापितः। तत्र सुलभदर्शनानां तेषामनुग्रहपात्रीभवन्तः शतशो भक्तजना नरन्तरं समभिलन्। ममापि कदाचित् तेषां दर्शनसौभाग्यं समघटिष्ट। सप्ताष्टवासरेभ्यः पूर्वं तेषां दर्शनानन्तरं स्वग्राममुपगतेन मया मनसि प्रत्यावृत्ततत्समागमसौभाग्येन श्रीरमणपञ्चकमिदं निरमायि। समनन्तरमेव काव्येऽस्मिंस्तेषामनुग्रहदृष्टिं काङ्क्षता मया तदेतत् सप्रश्रयनिवेदनं तेषां सकाशं प्रेषितम्। तैश्च तदवलोकनानुग्रहं कृत्वा, तदात्व एव स्वसविधवास्तव्यैः अद्वैतविद्याभूषणादिबिरुदलाञ्छितैः पण्डितमण्डलीमण्डनैः श्रीजगदीशशास्त्रिभिः तदेव समाजे प्रकाशं वाचयित्वा काव्यार्थविवरणं कारितम्। श्रीजगदीशशास्त्रिभिर्महर्षीणामामोदनमित्थं मह्यं पत्रिकया न्यवेदि—

"विसृष्टं त्वत्कृतं यन्मे श्रीमद्रमणपञ्चकम्।
तदादाय स्वतोऽपाठि रमणेनैव पूर्वतः॥
तदाज्ञया मया पश्चाद् दिष्ट्या संवृत्तमीदृशम्।
सन्निधौ च गुरोः सायं भावस्तस्य विवेचितः॥
भगवांश्च भवत्स्तोत्रबुभुत्सासक्तमानसः।
स्मितेन विशदेन स्वां मुदमाविश्चकार सः॥

पप्रच्छ च दयालुस्ते लोकदृष्ट्या त्वनामयम् ।
तत एवार्थतः सिद्धः प्रसादस्तस्य ते शुभः ॥ इति ।"

अद्य प्रकरणवशात् स्मृतिपथमागत्यास्मान् पुनानः सन्दर्भोऽयं सचेतसामपि स्वाद्यत्वमावहत्विति साम्प्रतं सादरमस्माभिरत्र प्रदीयते । क्षम्यतां चापलम् ।

## श्रीरमण-पञ्चकम्

(१)

चिदानन्दस्पन्दं रमण रमणीयाश्रमपदं
मदोदन्तस्यान्तर्मृषितविषयैः सद्भिरुषितम् ।
यदृच्छादृक्छायाव्यतिकरपराध्यैक्षणलव-
स्फुटोद्यद्रोमाञ्चिततनु तवागाहिषि गुरो ॥

(२)

अये तत्राद्राक्षं वटविटपिमूले हरमिव
स्थितं मञ्चे सञ्चोदितदशमलक्ष्येऽम्बरतले ।
भवन्तं निध्याने लयमनुभवन्तं स्वविषयं
मुनिं मौनव्याख्याविदलितबुभुत्सुभ्रमशतम् ॥

(३)

परित्रातुं मृत्योर्मुनिसुतमकस्मात् समुदितो
निजाल्लिङ्गाकाराद्धर इति पुराऽश्रृण्म हि कथाम् ।
इदानीं नः शोणाचलपतिविवर्तो नृवपुषा
भवान् मुष्णन्नार्तिं भवगहनभाजां विजयते ॥

(४)

नमो निर्मायाय प्रमथितहृषीकाय च नमो
नमः प्रत्यक्चक्षुःप्रणिहितपराद्वैतमहसे ।

नमः शोणाद्रीशप्रसभकरुणाऽन्याकृतिभृते
नमस्तुभ्यं श्रीमन् रमण, शरणार्थिश्रमसुषे ॥

( ५ )

विभिन्द्या नः शोकं विदलय महामोहमचिरात्
स्फुरन्त्वन्तर्मोदाः परमविशदाः पावनतमाः ।
भवाभावे भावात्ययनिरुपमव्योम्नि महा-
निशायाः प्रत्यूषे प्रभवतु चिदाख्यो दिनमणिः ॥

इति श्रीमन्महालिङ्ग-कवि-विरचितं श्रीमद्रमणपञ्चकम् ॥

---

# सुभाषितानि

[ श्रीदत्तात्रेय नारायण देशपाण्डे ]

A courageous foe is better than a cowardly friend.

शौर्यवान् हि वरं शत्रुर्न मित्रं भीरु तत्पुनः ।

Happiness is a great love and much serving.

सुखं हि महती प्रीतिः सेवा च विपुला तथा ।

All that glitters is not gold.

दीप्यमानमखिलं न सुवर्णम् ।

सर्वं यद् भ्राजते नूनं वर्तते तन्न काञ्चनम् ।

Where there is a will there is a way.

इच्छा बलीयसी यत्र तत्र मार्गो हि विद्यते ।

Art is the daughter of joy.

कला मोदस्य कन्यका ।

---

# श्रीशिवनाडीहोराशास्त्रम्

[ श्रीपरदेवताऽवतार-शेषमहामुनि-विरचितम्

अनुवादक :—दैवज्ञभूषण-पण्डित-द्विवेदि-नारायणशास्त्री ]

### शुक्रदशायां रव्यन्तरफलम्

भानौ लग्नगते द्रशौ भृगुयुते केन्द्रेऽथवा कोणगे
द्रष्टेत्केन्द्रत्रिकोणगे शुभयुते मित्रालये स्वोच्चगे।
भूलाभो गृहबन्धुदर्शनपरो दासीजनैस्संयुतो
वापीकूपतटाकनिर्मितिपरो जातस्सुयोगी भवेत् ॥

अर्थः। रविः लग्ने स्थितो यदि, दृष्ट्वा लग्नं यदि शुक्रेण युक्तो वा, लग्नं दृष्ट्वा केन्द्रकोणेषु—१-४-५-७-९-१० स्थानेषु सन् शुभैः युक्तो वा मित्रक्षेत्रे वा उच्चे वा सन्—भूगृहलाभं—बन्धुदर्शनपरं दासदासी-जनयुक्तं वापीकूपतड़ाकनिर्माणादि करोति। शुक्रे रविरेतानि फलानि करोति।

### शुक्रदशायां चन्द्रान्तरफलम्

चन्द्रे केन्द्रत्रिकोणगे शुभयुते मित्रालये स्वोच्चगे
भाग्ये मङ्गलसंयुते प्रभुधनं व्यापारमूलाद्धनम्।
प्राप्तकीर्तिं नरो जनः प्रभुयुतो दासीजनैस्संयुतः
पुण्यस्त्रीगमनादिकं भवेदिदं कार्यानुकूलो भवेत् ॥

अर्थः। चन्द्रः—१-४-५-७-९-१० स्थानेषु (केन्द्रकोणयोः) स्थितः अथवा शुभैः युतः शुभैः दृष्टो वा, स्याद् यदि स्वोच्चमित्रस्थानेषु भवेत् कुजेन मिलितो वा—प्रभुधनप्राप्तिः वाणिज्येन धनं भवति—यशस्वी प्रतिष्ठावान् स्यात्—दासदासीजनै र्युक्तः—पवित्रस्त्रीभोग-

वान्, सर्वकार्येषु विजयी भवेत्। स पूर्णचन्द्रश्चेत् पूर्णं फलं नोचेत् न्यूनं फलं भवेत्।

सर्वत्र-लग्न–चन्द्रलग्न–रविलग्न–दशानाथानाम् इति बोध्यम् ।

पूर्णचन्द्रजातकस्य फलम्

तीर्थयात्रापरश्चापि सदाचाररतो भवेत् ।
स्वकुलाचारसम्पन्नो विद्वज्जनसमागमः ।
सद्ग्रन्थरचनासक्तिः पठनं वा भविष्यति ।

तीर्थयात्रापरः, सदा भाग्यवान्, कुलाचारधर्मनिष्ठः, विद्वद्गोष्ठीपरः—ग्रन्थकर्ता वा, भारत-भागवत-रामायणादिपुराण-ग्रन्थ-पाठकः भवेत् ।

शुक्रदशायां कुजान्तरफलम्

शुक्रस्यान्तर्गते भौमे स्वोच्चकेन्द्रत्रिकोणगे ।
दायेण मित्रशुभांशे वा केन्द्रमूलत्रिकोणके ॥
गृहे वैवाहमाप्नोति रत्नभूषणसम्पदः ।
भ्रातृवर्गं शुभं भूत्वा राजसम्मानमाप्नुयात् ॥
नूतनोद्योगसम्पन्नः शत्रुनाशं करोति सः ॥

अर्थः । कुजः स्वोच्चे मित्रगृहे वाऽवस्थितः—केन्द्रकोण (१-४-५-७-९-१०) स्थानेषु वा शुभांशगतोऽपि वा गृहे शुभानि करोति—मणिभूषण-युतिः, कनकचयः, सोदरसोदरीलाभः, राजसम्मानः, श्रेष्ठोद्योग-लाभः, शत्रुविजयश्च भवेत् ।

शुक्रे राह्वन्तरफलम्

शुक्रस्यान्तर्गते राहौ दायेट् केन्द्रत्रिकोणगे।
स्वांशे स्वोच्चगतो वापि शुभग्रहयुतोऽपि वा ॥

व्यापारोद्योगसम्पन्नो यत्नकार्यजयी भवेत् ।
नूतनोद्योगदं विद्यात् पशुवाहनसम्पदः ॥
सत्कथाश्रवणासक्तः पुत्रोत्पत्ति भविष्यति ।
इत्यादींश्च महायोगाल्लँभते नात्र संशयः ॥

अर्थः । राहुग्रहः लग्न-चन्द्रलग्न-दशानाथानां यस्य कस्यापि केन्द्रकोण ( १-४-५-७-९-१० ) स्थानेषु वा शुभांशे वा मेष-वृषभ-मिथुन-कर्कटक-सिंह-कन्या-राशिषु यत्र कुत्रापि वा सन् बलयुतश्चेत् उद्योगलाभं वर्तकलाभं कुटुम्बवृद्धिं यत्नकार्यजयं तनोति—सत्कथा-कालक्षेपं च सर्वलाभं च करोत्येव । अवस्था-समय-चेष्टा आलोचनीयाः ।

शुक्रदशायां बृहस्पतेरन्तर्दशाफलम्

शुक्रस्यान्तर्गते जीवे स्वोच्चकेन्द्रत्रिकोणगे ।
दायेण्मित्रत्रिकोणे वा शुभांशे शुभसंयुते ॥
नष्टराज्यधनप्राप्तिर्दैवतोत्सवदर्शनम् ।
नूतनोद्योगसम्पन्नः प्रभुसम्मानमाप्नुयात् ॥
मित्रस्त्रीगमनासक्तिः प्रयाणं पश्चिमोत्तरे ।
पुराणगीतवाद्यादि श्रोतुमिच्छा प्रजायते ॥

अर्थः—गुरुः—धनुर्मीनयोः—कर्कटके वा, लग्न-चन्द्रलग्न-दशानाथानां वा केन्द्रकोणयोः—१-४-५-७-९-१०—स्थानेषु सन् मित्रक्षेत्रे वा शुभांशे वा शुभसंयुतो वा—नष्टराज्यधनलाभः—दैवतोत्सवदर्शनं—प्रभुसम्माननं—मित्रपत्नीसुखं च, पुराणश्रवणं नृत्तगीतवाद्यगोष्ठीप्रसक्तिः— वायव्यदिग्यानं — प्रभृतिशुभफलानि भवेयुः ।

शुक्रदशायां शन्यन्तरफलम्—

तुङ्गे केन्द्रे त्रिकोणे वा स्वांशे मित्रर्क्षगेऽपि वा ।
शुभग्रहसमायुक्ते व्यापाराद्धनवर्धनम् ॥
स्वानुगार्थाभिवृद्धिः स्याद् गृहे कल्याणमाप्नुयात् ।
पुत्रपौत्राभिवृद्धिः स्यात् प्रयाणं पश्चिमोत्तरे ॥
राजबन्धुसमायुक्तः सत्कथाश्रवणं लभेत् ।
आरामस्थापनं कर्तुमिच्छते साध्यते नरः ॥
पुराणपठनं चैव अथवा श्रवणं लभेत् ।
धनधान्यसमृद्धिः स्याद् भूलाभं प्राप्नुयान्नरः ।
बन्धुमित्रसमायोगो देवतोत्सवदर्शनम् ।
इत्यादींश्च महायोगाल्लँभते राज्यकारकः ॥

अर्थः । मन्दः—पूर्वोक्तस्थानेषु सन् तुला-मकर-कुम्भेषु धनुषि वा सन्—व्यापारमूलधनलाभश्च सर्वकार्यविजयश्च च—कुटुम्बवर्धनं—वायव्यदिशि सञ्चारः—अथवा तत्र उद्योगप्राप्तिर्भवेत् । गृहे विवाहादिशुभकार्याणि भवेयुः—पुराणश्रवणं पठनं वा भूमिलाभः देवतोत्सवसन्दर्शनं च इत्यादिशुभयोगा भवेयुः । राजपुत्राणां राज्यलाभः—इतरेषां तत्तुल्यधनप्राप्तिर्भवेत् ।

शुक्रदशायां बुधान्तरफलम्—

भाग्यराज्याधिपयुते स्थिते वा केन्द्रकोणके ।
सिंहे कुलीरे मीने वा, भानुना संयुतोऽपि वा ॥
स्वोच्चमित्रक्षेत्रगे सौम्यो वाणिज्याद्धनवर्धनम् ।
सुन्दरागारसंवासं भूलाभं प्राप्नुयान्नरः ॥
सदाचाररतो नित्यं देवब्राह्मणभक्तिमान् ।
शरीरारोग्यसम्पन्नो विफणी भोगकारकः ॥

अथवा वैश्यकान्ताभिः सांगत्यं ध्रुवमिच्छति ॥
यज्ञकर्मादिकं लाभं तत्फलं प्राप्नुयान्नरः ।
देवब्राह्मणसन्दर्शनादिकं हीष्टसिद्धिदम् ॥

अर्थ :—बुधः भाग्यराज्याधिपतिभ्यां युक्तः सन्—पूर्ववत् केन्द्रकोण-१-४-५-७-९-१० स्थानेषु सन्—सिंह-कर्कोटक-मीनराशिषु यत्र क्वापि वा सन् रविणा दृष्टः युतोऽपि वा स्वोच्चे मित्रगृहे शुभताराायां स्थितोऽपि वा वर्तकव्यापारादिना अधिकधनलाभः—सुन्दरमन्दिरे निवासः—भूलाभः—कुलाचारधर्मरतिः—देवब्राह्मणेषु भक्तिः--शरीरारोग्यं---भोगः, कान्ताभोगः---वैश्यस्त्रीसांगत्यं यज्ञयागादिकर्मपरत्वम्-इत्यादीनि पुण्यफलानि भवन्ति ।

शुक्रदशायां केत्वन्तरफलम्—

शुक्रस्यान्तर्गते केतौ लग्नात्केन्द्रत्रिकोणगे ।
शुभांशे शुभसंयुक्ते लाभस्थानं गतेऽपि वा ॥
मन्त्रोपासनसिद्धिः स्यात् नित्यमृष्टान्नभोजनम् ।
विघ्नवागमनासक्तिर्मणितन्त्रादिसिद्धि म् ।
सन्न्यासिदर्शनप्राप्तिः इत्येतत्फलदं विदुः ॥

अर्थः—केतुः पूर्ववत् केन्द्रकोण १-४-५-७-९-१० स्थानेषु सन् वा शुभांशे वा शुभदृष्टो वा मन्त्रोपसनासिद्धिः—नित्यं मृष्टान्नभोजनं--सन्न्यासिसन्दर्शनं — मणितन्त्रादिसिद्धि-( अष्ट )प्राप्तिश्च भवेयुः ।

इति श्रीमहाकालीप्रत्यक्षसाक्षात्कार-महातेजोयुत-सकलदिङ्-मण्डलयशोवितानधवलीकृतकलिप्रत्यक्षदैवज्ञ - शेषमहामुनिविरचित - श्रीशिवनाडीहोराशास्त्रे परदेवतास्वरूपशुक्रदशायाम् अन्तर्दशाफलानि समाप्तानि ।

# व्याकरण-विमर्शः

( ५ )

[ श्रीक्षितीशचन्द्र-चट्टोपाध्याय ]

## परःशतादयः शब्दाः ।

परःशतादयः शब्दाः शास्त्रेषु काव्येषु च समुपलभ्यमाना वैयाकरणानां शिरःशूलमुत्पादयन्ति। अर्वाचीनैष्टीकाकारैः पारस्करादिगण एषां सन्निवेशः स्वीक्रियते, परं महाभाष्यकाशिकादिषु प्राचीनपुस्तकेषु पारस्करादिगणे परःशतादयः शब्दा नैवोपलभ्यन्ते। यद्यपि भाष्यकारेणोक्तम्—अविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्यः इति, काशिकाकारेण च समर्थितम्—पारस्करादिराकृतिगण इति, तथापि गणमिममधिकृत्य परःशतादीनां समुल्लेखो लेशतोऽपि न विहितः। "पारस्करप्रभृतीनि च संज्ञायाम्" [६।१।१५७] इति सूत्रे च जाज्वल्यमानं "संज्ञायाम्" इति पदं सर्वथा गजनिमीलिकया नावधीरणीयम्। अत एव पारस्करादिगणे परःशत-शब्दस्य पाठः प्राचीनानां न सम्मत इति प्रतिभाति। "परोक्षे लिट्" [३।२।११५] इति सूत्रगत-परोक्षशब्दस्य व्याख्यानप्रसङ्गेन श्लोकवार्त्तिककारेण वा महाभाष्यकारेण वा पारस्करादीनीति सूत्रं नोपासितम्। अत एवात्र प्रकारान्तरं मृग्यम्। अस्माभिरत्र प्रथमतः संस्कृतव्याकरणादिषूपलभ्यमानानि मतानि विवृत्य पश्चात् पाश्चात्यानां मतमालोचयिष्यते। (क्रमशः)

---

# ॥ संस्कृत-दिग्विजयः ॥

[ अध्यापकश्रीसुनीतिकुमारदेवशर्मचट्टोपाध्यायविरचितः ]

आर्याणाम् पितृभूरासीत् पुरोत्तरकुरोः परे ।
कौकसं गिरिमुल्लंघ्य प्राप्तास्ते धाम वै नवम् ॥ १ ॥

*Uttarakuru* = Central Asia (Sin-Kiang); *Kaukasa* = Caucasus Mts.

तिग्रा-सुप्रातु-नद्योर्वा अन्तर्वेदी यदुच्यते ।
तत्रासुर-बवेरुभ्यः प्राप्तवन्तः कलाः बहूः ॥ २ ॥

*Tigrā* = Old Persian *Tigrā* = Assyrio-Babylonian *Diglat*, Arabic *Dig'lat* or *Dijlah* = Tigris River; *Suprātu* = Old Persian *Ufrātu* = Assyrio-Babylonian *Purātu*, Arabic *Furāt* = Euphrates River. *Asura* = *Ashshur* = Assyrian *Baveru* = *Bābilu* = Babylonian.

छान्दसस्य हि या मूलम् आर्य्यवाग् वै प्रवैदिकी ।
प्राप्य सा भारतं वर्षं रूपं जग्राह संस्कृतम् ॥ ३ ॥

*Pravaidikī Ārya-vāk* = Pre-Vedic Aryan Speech.

निषादैर् द्रमिडैश्चापि किरातैः परिवर्धिता ।
सा संस्कृताभिधा भाषा देवभाषापदं गता ॥ ४ ॥

*Nisāda* = Austric ( Kol and other ) peoples ; *Dramiḍa* = Dravidian speakers ; *Kirāta* = Mongoloid or Sino-Tibetan speakers.

विद्यावैभवसम्पन्ना साहित्यकलयान्विता ।
मण्डले सर्वभाषाणाम् आसीत् सा चक्रवर्तिनी ॥ ५ ॥
वाल्मीकिव्यासयोः कीर्तिर् यदीये मूर्ध्नि वर्तते ।
ऋषिभिर्बहुभिर्यासीत् कविभिः सेविता सदा ॥ ६ ॥

२

मण्डिता योगिभिः सिद्धैर्, भक्तै लोकहितैषिभिः ।
आचार्यैः पण्डितैः सद्भिर् या च नीताऽमृतम् पदम् ॥ ७ ॥
सर्वेभ्यो भूमिपुत्रेभ्यो जाताः सन्ति हि येऽमृतात् ।
निःश्रेयसस्य लाभाय दिशन्ती विविधान् पथः ॥ ८ ॥
विनिःसृता भारतात् सा भूत्वा संस्कृतिवाहिनी ।
ऋषिबुद्धजिनाचारं ततानाखिलकृष्टिषु ॥ ९ ॥
गम्भीरा ललिता वाणी पुष्पवज्र-स्वरूपिणी ।
धृता शिरसि यत्नेन सर्वैर्भूलोकवासिभिः ॥ १० ॥
सिंहलेऽभिजगामाथ दक्षिणं नवमालयम् ।
कम्बुजेष्वथ चम्पायाम् रामण्येषु च सर्वतः ॥ ११ ॥

*Siṁhala* ( = *Laṅkā* ) = Ceylon ; *Kambuja* = the Khmer land, Cambodia ; *Campā* = the Cham country, Cochin China ; *Rāmaṇya*, Pali *Rāmañña* = the Land of the *Rmeñ* or Mon (Talaing) people, South and Central Burma and South Siam.

एवं वसन्ति ये प्राच्यां सुदुर्धर्षाः किरातजाः ।
श्याम-ब्रह्म-समाख्याता दै-म्रन्मा-संज्ञका हि ये ॥ १२ ॥

*Dai* = *Thai* or Siamese ( *S'yāma* ) people ; *Mranmā* = *Myammā*, *Byammā* or Burmese *(Brahma)* people. (These are Kirāta or Sino-Tibetan in origin and speech.)

रामण्य-कम्बुजेभ्यश्च यैर्लब्धोत्तरकालतः ।
संस्कृता प्राकृता गीश्च भारतीयाऽपि संस्कृतिः ॥ १३ ॥
आग्नेये विद्यते कोणे सागरो द्वीपशोभितः ।
तत्र नीता स्वराज्ञैषा भाषा राज्ञीव भारती ॥ १४ ॥

*Āgneya-Koṇa* = South-East.

सेवितासीच्च बर्हिण्यां स्वर्णद्वीपे तथान्यतः ।
यवद्वीपे बलिद्वीपे पूजिता च विशेषतः ॥ १५ ॥

*Barhiṇī* = Borneo, *Svarṇa-dvīpa* = Sumatra ;
*Yava-dvīpa* = Java, *Bali-dvīpa* = Bali Island.

अधुनाप्यर्चनारीतिर् बहुशो दृश्यते जनैः ।
श्यामादिप्राच्यदेशेषु देशे द्वीपमयेऽपि च ॥ १६ ॥
आसियायास्तथा मध्ये ये ये देशा भवन्ति वै ।
आर्य्यानार्य्या जनास्तत्र सितपीतादिवर्णतः ॥ १७ ॥
तेषाम् मध्ये भारतीया येऽभवन्नार्यभाषिणः ।
कुस्तनं नगरं तत्र स्थापयित्वाऽवसन् पुरा ॥ १८ ॥

*Kustana* = old Sanskrit name of Khotan.

धर्मं संस्थापयामासुस् तत्र ते बुद्धदेशितम् ।
एवं ब्राह्मं च बौद्धञ्च वचनं सुप्रतिष्ठितम् ॥ १९ ॥
जनैर्बृहीच्यदेशेषु तदाभूच्चित्रकीर्तिषु ।
प्रसारः संस्कृतेर् नो वै प्रेयसे श्रेयसेऽपि च ॥ २० ॥
अभूत् क्षेत्रमसौ देशः कृष्टीनां संगमस्य वै ।
भारतस्य च चीनस्य पर्शोश्च यवनस्य च ॥ २१ ॥

*Asāu Des'ah—i.e.* Serindia. *Pars'u* = *Pars'va*, *Parsva* = Persians ; *Yavana* = *Iavones*, *Iones* = Ionians or Greeks.

जनास्तत्राऽवसन् येऽपि शकाश्च सुलिकास्तथा ।
आर्य्याणां यवनानाञ्च ऋषीका ज्ञातयश्च ये ॥ २२ ॥

*S'aka* = *Skuthai*, Scythians ; *Sulikāh* = Sogdian Iranians ; *Rsīkāh* = the *Arshik, Ar-sik* or *An-shih* people, Indo-Europeans living in Northern Sin-Kiang at Kucha and Qara-shar, the so-called "Tokharians".

किरातजातिजा भोटास् तुरुष्का मङ्गलास्तथा ।
कोरयाश्च महाचीना यमतो-वंशजाश्च वै ॥ २३ ॥

*Bhoṭa* = the *Bod* or Tibetan people, of Mongooidl *(Kirāta)* origin ; *Turuṣkāh* = the Turks ; *Mangala* = the

Mongols; *Korayāh = Korai*, the Koreans. *Maha-Cīna = Ta-Ts'in* = Great China, China proper; *Yamato* = the Japanese people.

कैवल्यदायिनी भाषा सर्वैरेतैः समादृता।
अनूदिता क्वचिज्जाता चीन-भोटानुगामिनी ॥ २४ ॥
यवनेष्वपि सा भाषा प्रसृता प्रियदर्शिषु।
विद्याभ्यो ज्यौतिषादिभ्यो यैरासीत् समलङ्कृता ॥ २५ ॥
आरब्य-पारसीकेषु मानिता ज्ञानदायिनी।
गणितं ज्यौतिषं शास्त्रम् आख्यानं वैद्यकं तथा ॥ २६ ॥
तेभ्य एतानि दत्तानि ज्ञानञ्चाध्यात्मिकं मुदा।
जीवब्रह्मैकता प्रोक्ता ब्रह्मनिर्वाणिका तथा ॥ २७ ॥

*Ārabya-Pārasīka* = (Medieval) Arabs and Persians, influenced by Sanskrit science in the departments of Mathematics, Astronomy, Medicine and Romance, and in the philosophical ideas behind Sufiism.

एवं पाश्चात्यखण्डे च जना ये शक्तिसाधकाः।
तेषां ये वंशजाः सन्ति पाताले जनमेजयाः ॥ २८ ॥

*Pās'cāttya-Khaṇḍa* = Western World, Europe; *Pātāla* = America.

वाणीयं तैर्गृहीताऽपि भवेत् कालोपयोगिनी।
योगक्षेमस्य सत्यस्य शाश्वतस्य च सिद्धये ॥ २९ ॥
समग्रजनजातानां हितप्रियविधायिनी।
गीरियं भारतीया सा सदास्तु स्वस्तिवर्धिनी ॥ ३० ॥

---

# सुभाषितसागरः।

[ पण्डित एस्. पार्थसारथिः। ]

किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम्।

कुम्भा न कूपमपि शोषयितुं समर्थाः
कुम्भोद्भवेन मुनिनाम्बुधिरेव पीतः ॥ ६९ ॥
किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र श्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कक्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ७० ॥
किमत्र चित्रं यत् सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ७१ ॥
किं मधुना किं विधुना किं च वसुधयाऽखिलया ।
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ॥७२॥
कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ७३ ॥
[ गुणवज्जनसंसर्गाद् याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ ]
कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसम्भवोऽम्भोधिम् ।
अतिरिच्यते सुजन्मा कश्चिज्जनकान्निजेन चरितेन ॥ ७४ ॥
कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ ७५ ॥
[ मालतीकुसुमस्येव द्वे गती ह मनस्विनः ।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येदथवा वने ॥ ]
केनाञ्जितानि नयनानि मृगाङ्गनानां
को वा करोति रुचिराङ्गरुहान्मयूरान् ।

---

७० । ख । यत्राश्रिताश्च यत्र स्थिता हि । घ । शाखोटनिम्ब-
७१ । ग । नेह स्वदेह- ।

कह्लारोत्पलेषु दलसन्निचयं करोति
को वा करोति विनयं कुलजेषु पुंसु ॥ ७६ ॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ७७ ॥
क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ७८ ॥

---

## निष्कृतिः

[ शरच्चन्द्र-चट्टोपाध्यायः ]

तृतीयः परिच्छेदः ।

न खलु जन्मन आरभ्यैतादृशं वैक्लव्यमितः पूर्वमतुलस्य कदाचिदपि समुपनतम् । स हि शैशवात् प्रभृति सयत्नं सादरं च लालितः पालितश्च, न खलु मातापितरौ कदापि तस्येच्छाया अभिरुचेश्च प्रातिकूल्येन किमपि वदतः स्म । अद्य किल सर्वेषामेव समक्षमीदृशं निरतिशयमवमाननं तस्य निखिलान्यङ्गानि परिवेष्टाग्निं दीपयामास । स बहिर्विनिष्क्रम्याभिनवं कञ्चुकं भूमौ विनिक्षिप्य मुखञ्च पेचककल्पं विधायावस्थितः ।

अद्य हरिचरणस्य दुःखेनातुलोऽपि सर्वथा दुःखभागभूत्, स हि तदीयमेव पक्षं समर्थयमानो निकृत इति । अत एवातुलोऽपि तस्य पार्श्वमुपागम्य मुखं गम्भीरं विधाय समुपविष्टः । अतुलं

---

७८ । क । भूमीशय्यः, भूमौ शायी । ख । मिष्टाशनरुचिः । ग । चित्राम्बरधरो । घ । सुखं न च दुःखम्—प्रामादिकोऽयं पाठः ।

सान्त्वयेयमिति तस्य मनोरथः, परं प्रकृतोपयोगिनमेकमपि शब्द-मनुपलभ्य तूष्णीमेव तस्थौ। अतुलेन पुनरितः परं तूष्णीं स्थातुं न युक्तम्, यतो न खलु केवलमवमाननमेवात्र तस्य क्षोभस्य विषयः, स हि विदेशादुच्चावचानि पत्राशनानि, बहूनि कोटप्याण्टनेकटायीनि च गृहीत्वा गृहं प्रत्यावृत्तः। विविधैश्च प्रकारैः समुत्तोल्य स्वीयमासनं ववन्ध, अद्य तावत् कनिष्ठखुल्लमातुरेकस्यैव तिरस्कारस्य सङ्घातेन सर्वमेवाकस्मात् भग्नं च चूर्णितञ्च भूमिसाद्भवनोद्यतञ्च वीक्ष्य स समुत्कण्ठया चञ्चलः सञ्जातः। ज्येष्ठं हरिमुद्दिश्यासौ सरोष-मुक्तवान्, न खल्वहं कस्यापि वाक्यजालं विषहेय। अयं शर्मा अतुल-चन्द्रः, क्रोधितोऽसौ न खलु खुल्लतातपत्नीटत्नीं कामपि गणयतीति।

हरिचरण इतस्ततो दत्तदृष्टिः भीतभीतः प्रत्युवाच, नाप्यहम्। तूष्णीमास्स्व, कानाइ आगच्छति। कदाचिन्निर्बोधोऽतुलस्तस्यैव पुरस्तात् स्ववीरत्वं प्रकटयेदिति भीतिविभ्रस्तोऽसावुत्थाय दण्डाय-मानः स्थितः।

कानाइ द्वाराद् वहिरवस्थाय मोगलसम्राज आघोषक इवोच्चै-राचुक्रोश—मध्यमभ्रातः, मध्यमावरभ्रातः, माताह्वयति, शीघ्रं तावत्।

हरिचरणः पांशुमुखोऽवदत्, माम्? मया तावत् किं कृतम्? न खलु कदापि माम्। गच्छ, अतुल, कनिष्ठा खुल्लमाताह्वयति त्वाम् इति।

कानाइ प्रभुसम्मितेन स्वरेणावदत्, उभावेव, इदानीमेव। अहो मध्यमावरभ्रातः, केन वा तेऽभिनवं कञ्चुकं भूमौ विनिक्षिप्तम् इति। प्रत्युत्तरेण मध्यमावरभ्राता केवलं मध्यमभ्रातुर्मुखे दृष्टिं न्यपातयत्, मध्यमभ्राता च मध्यमावरभ्रातुर्मुखे दृष्टिं न्यपातयत्। केनापि कण्ठरवो न कृतः। कानाइ भूलुण्ठितं कञ्चुकमुत्तोल्य काष्ठा-सनस्य बाहौ समवस्थाप्य प्रतस्थे।

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

वृद्धाध्यापकः ( पुरत उपविष्टां छात्रीं प्रति )। वत्से वनलते, स पाठः पठ्यताम्।

सरलावर्जं सर्वाश्छात्र्यः। आर्य! सरलया सुचिरं संपाठो न पठितः, सा एवाद्य पठतु।

अध्यापकः। वत्से सरले, इदानीं सर्वतः प्रवहति जनतन्त्रता-वात्या। तत्र सतीर्थ्याभिश्च त्वयैव पठितव्यम् इति मतं प्रकटीकृतम्। अवश्यमेव माननीयं मया मतमिदम्, तच्छ्रीमत्या संपाठः पठ्यताम्।

सरला आसनादुत्थाय प्रतिपत्तिमूढ़ा स्थिता।

अध्यापकः। वत्से, किमिति मुखं ते स्फीतम्, गण्डौ च रक्तौ, चक्षुषी च विनिष्क्रमणोद्यते, ललाटं च स्वेदाञ्चितम्। किं ते संवृत्तम्, अपि नामास्वस्थासि?

सरला तथैव तूष्णीं स्थिता।

छात्र्यः। आर्य, सरलाया मुखाभ्यन्तरे भृष्टचणका वर्तन्ते। अत्रभवता पाठायादिष्टा सा न पारयति सञ्चर्व्य ग्रसितुं न वा बहिर्निक्षेप्तुं नापि वा शब्दमुच्चारयितुम्। प्रतिदिनमेव सा भवदीयायां होरायां भृष्टचणकध्वंसं समाचरति।

अध्यापकः। उपविश्यतां वत्से, उपविश्यताम्। गृहं वा गम्यताम्। न खल्वितः परं श्रेण्यां समुपविष्टया त्वया भृष्टचण-कास्वादनसुखमनुभाव्यम्। सर्वस्यैवावसरो वर्तते। अनवसरे कृतं कर्म परितापं जनयति।

वत्से मृन्मयि, त्वं तावत् पठ।

मृन्मयी। न खलु कयापि self-respect-सम्पन्नया महिलया

स्वप्नेऽपि संस्कृतं पठनीयम् । भाषायामस्यां व्याकरणे हलन्त-स्त्रीलिङ्ग-प्रकरणे प्रथमत एवोपानच्छब्दस्य रूपं प्रदर्शितम्। सम्मार्जनीशब्दोऽपि स्त्रीलिङ्ग एव, पादुकाशब्दोऽपि तथाभूत एव। स्त्रीषु प्रद्वेषप्रकटनार्थमेव भाषैषा निर्मिता पामरैरिति प्रतिभाति।

अध्यापकः । भ्रान्तासि, वत्से, भ्रान्तासि। किं न जानासि जाते यत् Fortnightly Review पत्रे बहोः कालात् पूर्वं Sir J. G. Frazerमहोदयेन विलिखितं यानि यानि वस्तूनि प्रायेण स्त्रीभिरुपयुज्यन्ते तानि सर्वाणि स्त्रीलिङ्गान्येवेति। सम्मार्जन्याः सञ्चालने यथावसरं प्रयोगे च स्त्रीणां नैपुण्यं सृष्टेः प्रारम्भतः सुप्रथितमेव, रेणुकायास्तप्तसिकतोपरि चलन्त्याः सन्तापपरिजिहीर्षयैव पादुका प्रथमतः प्रवृत्ता, इदानीमपि च स्त्रीणां स्यण्डाल्-प्रयोगे प्रावीण्यं परिलक्ष्यते, अत एव किमिवात्राश्चर्यं यद् वैज्ञानिक्यां देवभाषायां शब्दा इमे स्त्रीलिङ्गाः स्युरिति। भवतु, उपविश्यताम्। न खलु मृन्मय्या त्वया मृत्पिण्डबुद्ध्या भवितव्यम्। वत्से विप्लविके ! त्वमिदानीं पठ।

विप्लविका। न पठिष्यामि, कथमपि न पठिष्यामि। दृश्यतां किमत्र विलिखितम्—( पठति )

देशे देशे कलत्राणि देशे देशे च बान्धवाः।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः॥

अत्र कलत्राणां निरतिशयं सौलभ्यमत एव तुच्छत्वं प्रतिपादितम्। विध्वंसतां संस्कृतभाषा। विध्वंसतां राजपुरुषनिवहः। विध्वंसतां धनिकगणः।

अध्यापकः। वत्से, अलमलमावेगेन। अपि न श्रुतः श्रीमत्या महाराष्ट्रियाणामाभाणकः—यस्य विवाहस्तस्य गीतमिति ? अत्र श्रीरामचन्द्रेण सहोदरशोककातरेण विलप्यते, अत एव सहोदरस्य

सर्वातिशायित्वं वर्णितम्। भवतु वत्से! कथमपि न पठिष्यामीति वदन्त्या भवत्या पठितमेव। तदद्यात्रैव विरामोऽस्तु। शान्ता भवन्तु भवत्यः।

---

# महाभाष्यम्।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ३ )

When a finite verb is changed into a verbal noun, as a rule, it loses the power of governing cases and consequently the subject or the object of the verb takes the genitive. But when both the subject and the object are explicitly stated it will give rise to ambiguity if both of them are put in the genitive, so in such cases, to avoid ambiguity, the object is put in the genitive and the subject in the instrumental. Thus for माता पश्यति we can say मातुर्दर्शनम्, for शिशुः पश्यति we can say शिशोर्दर्शनम्, but for माता शिशुं पश्यति we must say मात्रा शिशोर्दर्शनम्, for if we say मातुः शिशोर्दर्शनम्, it will not be possible for the hearer to find out whether we mean the seeing of the mother by the child, or the seeing of the child by the mother or the seeing of the mother's child by some one else. For this reason Pāṇini has framed the rules: कर्तृकर्मणोः कृति *i.e.*, in connexion with a Kṛt suffix the subject or the object takes the genitive and उभयप्राप्तौ कर्मणि *i.e.*, when there is the likelihood of the genitive being used with both the subject and the object, the object alone takes the genitive and not the subject. Thus आचार्यः अनुशास्ति will become आचार्यस्य अनुशासनम् if the verb be changed into the verbal noun, शब्दान् अनुशास्ति will become शब्दानामनुशासनम्, but आचार्यः शब्दान् अनुशास्ति will become आचार्येण शब्दानाम् अनुशासनम्, the subject आचार्यः taking the instrumental, the proper ending for the nom., acc. to Pāṇini, when it does not agree with a finite verb.

Now there is a further rule in Pāṇini's grammar acc. to which an objective genitive cannot be the first member of a षष्ठीतत्पुरुष compound. Commentators explain this rightly to mean that the genitive of the object, when both the subject and the object are present, does not enter into a षष्ठीतत्पुरुष compound as the first member. Here since the subject 'ācārya' is not mentioned we have merely "s'abdānām anus'āsanam" and consequently there is no bar to the formation of the षष्ठीतत्पुरुष compound.

As against this view it may be pointed out that Pāṇini has himself used the instrumental in connexion with the subject in his rule अन्तर्धौ येनादर्शनमिच्छति 1. 4. 28 where the object is not expressed but understood. But here also the instrumental has been used to avoid ambiguity, for if the genitive were used, it would give rise to the idea that the person whom one does not wish to see is to be put in the ablative and consequently we should expect the ablative in sentences like चौरान् न दिदृक्षते. As there is not the least likelihood of any ambiguity arising in the case of शब्दानामनुशासनम् we need not think of the subject at all in this connexion.

This restriction of the genitive to the object does not apply, acc. to the Vārttikakāra, to feminine words formed with the Kṛt suffixes *aka* and *a* and applies optionally in other cases *i.e.*, in the case of feminine words formed with primary suffixes like *ktin*, etc. But there are some commentators who hold that the restriction will hold good optionally with the solitary exception of words formed with the feminine Kṛt suffixes *aka* and *a*. This view is against the Aṣṭādhyāyī and obviously against the Māhābhāṣya also, for we find in the Mahābhāṣya :

वार्त्तिकम् । शेषे विभाषा ।

भाष्यम । शोभना खलु पाणिनेः सूत्रस्य कृतिः । शोभना खलु पाणिनिना सूत्रस्य कृतिः । शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः, शोभना खलु दाक्षायणेन संग्रहस्य कृतिः ।

प्रदीपः। अकाकारव्यतिरिक्तस्त्रीप्रत्यय एव, नान्यस्मिन्निति केचिदाहुः। अपरे तु प्रत्ययमात्रेऽकाकारवर्जिते विकल्पमिच्छन्ति। शब्दानामनुशासनमाचार्यस्याचार्येणेति वा।

उद्द्योतः। भाष्येऽकाकारयोर्भेदिका चिकीर्षेति कृतिरिति च स्त्रीप्रत्यय एवोदाहरणदानादिति तदाशयः। अपरे त्विति। नोदाहरणमादरणीयमिति तद्भावः।

If this absurd view be accepted then there is no bar to the formation of the compound, as the genitive in शब्दानाम् is not acc. to उभयप्राप्तौ कर्मणि.

Acc. to a third view, the genitive in 's'abdānām' is not an objective genitive but a case of 's'eṣe ṣaṣṭhī'' acc. to Pāṇini's rule 'ṣaṣṭhī s'eṣe' ii 5. 30. And a "s'eṣe ṣaṣṭhī" is, as a rule, allowed to be compounded as the first member acc. to षष्ठी ii. 2. 8. Now it may be objected that "s'eṣe ṣaṣṭhī' stultifies all the rules barring "ṣaṣṭhī-tatpurṣa" compounds for in each and every case we can easily say that the genitive is not an objective genitive but s'eṣe ṣaṣṭhī or the genitive of relationship in general. To this they reply that there is a difference of accentuation in the compound acc. as it is formed with an objective genitive or with a genitive denoting relationship in general. In the former case the compound will have the accent of its second member acc. to गतिकारकोपपदात् कृत् ii. 2. 139, in the latter it will be oxytone acc. to समासस्य vi. 1. 223. So all the prohibitions of compounds will hold good in Vedic literature and not in the case of the classical language. This is clear, they say, from the usage of Pāṇini who bars the formation of genitive compounds with words formed with the primarys uffixes *tṛc* and *aka* (तृजकाभ्यां कर्त्तरि 2. 2. 15), yet himself uses जनिकर्त्तुः where कर्त्तृ ends in the suffix 'tṛc' (in जनिकर्त्तुः प्रकृतिः i. 4. 30) and तत्प्रयोजकः where प्रयोजक ends in the suffix 'aka' (in तत्प्रयोजको हेतुश्च i. 4. 55). Mādhava discusses the question very lucidly in the Sarvadars'anasaṃgraha :

अत्र केचित् पर्यनुयुञ्जते—अनुशासिक्रियायाः सकर्मकत्वात् कर्मभूतस्य 'शब्दस्य' कर्तृभूतस्य च 'आचार्यस्य' प्राप्तौ सत्याम्,

"उभयप्राप्तौ कर्मणि" [२।३।६६] इत्यनुशासनबलात् कर्मण्येषा षष्ठी विधातव्या। तथा च "कर्मणि च" [२।२।१४] इति समासप्रतिषेधसम्भवाच्छब्दानुशासनशब्दो न प्रमाणपथमवतरतीति। अत्रायं समाधिरभिधीयते। यस्मिन् कृत्प्रत्यये कर्त्तृकर्मणोरुभयोः प्राप्तिरस्ति तत्र कर्मण्येव षष्ठी विभक्तिर्भवति न कर्तरीति बहुव्रीहि-विज्ञानबलान्नियस्यते। तद् यथाश्चर्यो दोहोऽशिक्षितेन गोपालकेनेति। शब्दानामनुशासनमित्यत्र तु शब्दानामनुशासनं नार्थानामित्येतावतो विवक्षितस्यार्थस्याचार्यस्य कर्त्तुरुपादानेन विनापि सुप्रतिपादत्वादा-चार्योपादानमकिञ्चित्करम्। तस्मादुभयप्राप्तेरभावाद् "उभयप्राप्तौ कर्मणि" इत्येषा षष्ठी न भवति, किन्तु "कर्तृकर्मणोः कृति" [२।३।६५] इति कृद्योगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवतीति कृद्योगलक्षणा षष्ठी भविष्यति। कर्तर्यपि षष्ठी भवतीति केचिद् ब्रुवते। अत एवोक्तं काशिकावृत्तौ—केचिद्विशेषेणैव विभाषा-मिच्छन्ति—शब्दानामनुशासनमाचार्येणाचार्यस्य वेति। अथवा शेषलक्षणेयं षष्ठी। तत्र किमपि चोद्यं नावतरत्येव। यद्येवं तर्हि शेषलक्षणायाः षष्ठ्याः सर्वत्र सुवचत्वात् प्रतिषेध-सूत्राणामानर्थक्यं प्राप्नुयादिति चेत्, सत्यम्, तेषां स्वरचिन्तायामुप-योगो वाक्यपदीये हरिणा प्रादर्शि। तदाह महोपाध्यायवर्धमानः—

लौकिकव्यवहारेषु यथेष्टं चेष्टतां जनः।
वैदिकेषु तु मार्गेषु विशेषोक्तिः प्रवर्तताम्॥
इति पाणिनिसूत्राणामर्थवत्त्वमसौ यतः।
जनिकर्तुरिति ब्रूते तत्प्रयोजक इत्यपि॥ इति।

Similarly the Tattvabodhinī adapting from the Śabda-Kaustubha of Bhaṭṭoji says:

शब्दानामितीयं षष्ठी "कर्तृकर्मणोः" इति विहिता, न तु "उभयप्राप्तौ" इत्यनेन, आचार्यस्य कर्तुर्वस्तुतः सत्त्वेऽपीहानु-

पादानात्। "कृत्वोऽर्थप्रयोगे" [२।३।६४] इत्यतः प्रयोगे इत्यनुवर्तनात् कर्तृकर्मणोरुभयोरुपादाने एवाय नियम इति स्वीकारात्॥ 'आश्चर्यो गवां [?] दोहोऽगोपेन' इत्यत्र हि आश्चर्यं प्रतिपाद्यम्, तच्च यद्यशिक्षितो दोग्धा दुर्दोहा गावश्च दोग्धव्यास्तदैव निर्वहति न त्वन्यथा। अतः कर्तृकर्मणोर्विशिष्योपादानादस्त्युभयप्राप्तिः, इह तु शब्दानामिदमनुशासनम्, न त्वर्थानाम् इत्यर्थनिवृत्तिपरं वाक्यम्, न तु कर्तृविशेषनिवृत्तिपरम्, अतो नास्त्युभयप्राप्तिः॥ अस्तु वा यथाकथञ्चिदुभयप्राप्तिः, तथापि न क्षतिः, "उभयप्राप्तौ" इति सूत्रे 'अविशेषेण विभाषा' इति पक्षस्यापि विद्यमानतया नियमाप्रवृत्तिपक्षे 'आचार्यस्य शब्दानुशासनम्' इति प्रयोगसम्भवात्। यदि वा शेषलक्षणा षष्ठीति व्याख्यायते, तदा तु समासनिषेध-शङ्कैवात्र नास्ति।

An exactly similar compound is आत्ममाने in the rule आत्ममाने खश्च iii. 2. 83. In the Bhāṣya * on this rule Patañjali asks, "Why should आत्मनः in आत्मनः माने be the

---

* आत्ममाने खश्च।

आत्मग्रहणं किमर्थम्?

परमाने मा भूदिति।

क्रियमाणेऽपि वा आत्मग्रहणे परमाने प्राप्नोति।

किं कारणम्?

आत्मन इतीयं कर्तरि षष्ठी, मान इत्यकारो भावे। स यद्येवात्मानं मन्यतेऽथापि परम्, आत्मन एवासौ मानो भवति।

नैष दोषः। आत्मन इतीयं कर्मणि षष्ठी।

कथम्? कर्तृकर्मणोः कृतीति।

ननु च कर्तर्यपि वा एतेनैव विधीयते। तत्र कुत एतत्—कर्मणि भविष्यति, न पुनः कर्तरीति।

एवं तर्ह्यात्मग्रहणसामर्थ्यात् कर्मणि विज्ञास्यते।

genitive of the object and not the genitive of the subject? and answers 'because of the mention of the word आत्मन् in the rule'. He does not invoke the aid of the rule उभयप्राप्तौ कर्मणि. From this Nāges'a infers that उभयप्राप्तौ कर्मणि and कर्मणि च will be applicable when both the subject and the object are explicitly stated. He takes the bull by the horns and says that in अन्तर्धौ येनादर्शनमिच्छति i. 4. 28 येन is an आर्ष form. * It is difficult to subscribe to this extreme view. No doubt in most cases of उभयप्राप्तौ कर्मणि both the subject and the object must be explicity stated, but in some cases the rule is applied to avoid ambiguity even when the object is understood.

---

## पुस्तकपरिचयः

**व्युत्पत्तिवादः—लकारार्थविचारः।** महामहोपाध्याय श्रीगदाधरभट्टाचार्यविरचितः पण्डितराजेन वि सुब्रह्मण्यशास्त्रिणा विरचितेन विवरणेन संवलितः। अण्णामलैविश्वविद्यालय-संस्कृत-

---

अत्रोद्द्योतः। यद्यपि उभयप्राप्ताविति नियमादपि न कर्तरीति वक्तुं शक्यम्,तथापि उभयोः प्रयोगाभावादत्र तदप्राप्तिः। किं च तेन षष्ठ्यां समासाप्राप्तिः, कर्मणि च इति निषेधादित्याहुः।

* येनेति सौत्री तृतीया, उभयोः प्रयोगाभावात् 'उभयप्राप्तौ' इत्यस्याप्रवृत्तेः। उभयोः प्रयोग एव तत्प्रवृत्तिरित्यात्ममाने खश्चेति सूत्रे भाष्ये स्पष्टम्। उद्द्योत १।४।२८। येनेत्यत्र कर्तृकर्मणोरिति षष्ठी न, सौत्रत्वात्, आत्मन इति प्रत्यासत्तिलभ्यम्। लघुशब्देन्दुशेखरः। १।४।२८ एतेन 'आत्मनः इत्यस्य गम्यमानत्वेनोभयप्राप्तिसत्त्वेनोभयेति नियमान्न षष्ठी'ति दण्डाद्युक्तम्, 'अत एव निर्देशादनित्यं तद्' इत्यन्योक्तम्, कर्तुः करणत्वविवक्षया सा' इति शास्त्र्युक्तं चापास्तम्। चिदस्थिमाला।

ग्रन्थमाला। अङ्कः १०। Annamalai University, Annamalainagar. Demy 800, ग्रन्थे मूल्यस्योल्लेखो नास्ति।

कस्य वा न विदितः शब्द-शास्त्रे कृतश्रमस्य नैयायिकशिरोमणेः गदाधरस्य व्युत्पत्तिवादसमाख्यो महाग्रन्थः। तस्यैव लकारार्थविचारात्मकोऽन्तिमोऽयं भागः। अस्य च सुकठिनतया छात्रैर्दुष्प्रवेशत्वात् पण्डितराजेन सुब्रह्मण्यशास्त्रिमहोदयेन छात्राणां हितकाम्यया सरला सुबोधा च विवृतिर्विहिता। उक्तञ्च तेन भूमिकायाम् —

"सर्वोऽपि स्वाभिमतमर्थं परान् बोधयितुं शब्दान् प्रयुङ्क्ते, तेभ्यो जायमानमभिमततत्तत्पदार्थसंसर्गावगाहिनं बोधं वाक्यार्थबोधं संप्रचक्षते विद्वांसः। तत्तत्पदार्थान्वयनिरूपणपूर्वकं वाक्यार्थबोधवर्णने सर्वानपि दार्शनिकानतिशेरते नव्यनैयायिकाः। वाक्यार्थबोधनिरूपकेषु नव्यनैयायिकप्रबन्धेषु विषयविचारपद्धत्या विदुषां हृदयङ्गमया शाब्दबोधवर्णनसरण्या च व्युत्पत्तिमादधानोऽयं यथार्थनामा श्रीमद्गदाधरभट्टाचार्यविरचितो व्युत्पत्तिवादः प्रथमं पदमधिरूढो विलसति।

"अभेदान्वयबोधः भेदान्वयबोधश्चेति द्विविधेऽपि शाब्दबोध आकाङ्क्षाविशेषज्ञानानां कारणतां प्रतिपादयन्तः श्रीमद्गदाधरभट्टाचार्याः प्रथमतः अभेदान्वयबोधविचारं समाप्य, प्रातिपदिकार्थधात्वर्थयोः प्रत्ययार्थेन समं भेदान्वयबोधमुपक्षिप्य, सुबर्थविचारमुखेण प्रातिपदिकार्थप्रत्ययार्थयोः भेदान्वयबोधं विस्तरेण निरूप्य, धात्वर्थप्रत्ययार्थयोः भेदान्वयबोधं निरूपयितुमन्ते ग्रन्थेऽस्मिन् धातुप्रकृतिकलकारार्थविचारं घटयामासुः।" इति।

प्रमोदामहे किल वक्तुं पण्डितराजस्य विवृतिरियं छात्रजनव्युत्पादिका बुधजनमनोहरा च संवृत्तेति।

**স্ত্রীপ্রশংসা**—The original slokas of Varahamihira with a splendid original commentary. Re. 1/-

**Popular Etymology** Re. 1/-

কলিকাতা বিশ্ববিদ্যালয়ের অধ্যাপক

শ্রীক্ষিতীশচন্দ্র চট্টোপাধ্যায়, এম. এ. ডি. লিট্ প্রণীত

# শব্দ-কথা

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি ভুলগুলির আলোচনা করা হইয়াছে। **সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক দিয়া,** বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওতপ্রোত-শব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম ত'র পর আছে, না দ্বিতীয় ত'র পর আছে, না উভয় ত'র পর আছে, সঠিক শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতায় প্রভেদ কি ? সন্ধির কথায় সন্ধির বৈজ্ঞানিক ব্যাখ্যা ইংরাজী, লাটিন ও আরবী ভাষায় সন্ধি প্রদর্শিত হইয়াছে ; সন্ধি, ষত্ব, ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে। বাঙ্গালা, ইংরাজী ও সংস্কৃত ভাষায় অধ্যাপক ও ছাত্র, সাহিত্যিক, সাংবাদিক প্রভৃতির পক্ষে এই গ্রন্থ অত্যাবশ্যক।

**মূল্য দুই টাকা মাত্র**

# ঊষার আলো

ইহাতে দেশ-বিদেশে প্রচলিত হাস্যরসাত্মক কৌতূহলোদ্দীপক অথচ শিক্ষাপ্রদ শতাধিক ছোট গল্প সন্নিবিষ্ট হইয়াছে। পড়িতে পড়িতে হাসিয়া অস্থির হইতে হইবে। **মূল্য বার আনা মাত্র.**

**নক্ষত্রমালা।** নক্ষত্রের মত উজ্জ্বল, নক্ষত্রের মত চিরনূতন, নক্ষত্রের মত পথপ্রদর্শক। শ্রেষ্ঠশ্লোকসমষ্টি, ব্যাখ্যা ও অনুবাদ। মূল্য পাঁচ আনা মাত্র

**শ্রীবিশ্বনাথ চট্টোপাধ্যায়**

৮১নং নিউ শ্যামবাজার ষ্ট্রীট, কলিকাতা

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*

TECHNICAL TERMS AND TECHNIQUE OF

# SANSKRIT GRAMMAR

**A Critical, Comparative and Historical Study**

By

**KSHITISH CHANDRA CHATTERJI, SASTRI, M. A., D. LITT.**

*Lecturer, Calcutta University ;*

*Formerly Editor, Calcutta Oriental Journal,*

*Surabharati, Oriental Literary Digest, etc., etc.*

"When we were reading in the lower classes of high schools, a student once asked the teacher of Sanskrit why Lat meant the Present Tense. The learned teacher grew furious, gave the boy an inkling into the abusive powers of the elegant Bengali language, and then said, Lat means the present tense because the great Panini wanted it to mean the present tense. If he had intended to use Drum Dhrash or Chlorate of Potash for the present tense what was there to prevent him from doing so ? You ought to have greater respect for Panini than to ask such impertinent questions. The teacher belonged to the usual class of Pandits who regard grammar as a strictly normative science and who are followers of the principle :

"Theirs not to reason why,
Theirs not to make reply"

and at that time we were greatly impressed by the soundness of his reasoning. But as we grew older the argument gradually lost all its force for us. I am now firmly convinced that there is nothing arbitrary in language. To say that a thing or phenomenon is arbitrary is merely to confess our ignorance. If we could find out all the links in the chain of association in the mind of a writer, we could explain what on the face of it would appear to admit of no explanation. And this is true of the technical terms of Sanskrit grammar also." ( p. 8 )

**VISVANATH CHATTERJI**
**81, Shyambazar Street,**
CALCUTTA—4.
Phone : B. B. 4049

Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

र्थ-वर्षं July, 1950. ११श-संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र चट्टोपाध्यायः

## Special Articles, last month.

Unpublished Stotra of Shri Shankaracharya

Shiva-nadi ( a work on Astrology)

**Rasamanjari**

Sanskrita-Digvijaya

by Prof. Suniti Kumar Chatterji, M. A., D. Lit.

Mahabhasya of Patanjali with Notes and Translation.

## This Month

Akhyata-rahasyam

Mahabhasyam.

**Unpublished Stotra of Shri Shankaracharya**

Is करस्य करभो बहिः correct ?

## Nexth Month

A Sanskrit inscription with notes by Prof. Suniti Kumar Chatterjee, M. A., D. Litt. ( London )

Mahabhasya—

"‘व्याकरणाधिकरणे गर्जन्तो मीमांसकाः"

Office : 81 Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign : Rupees Eight.

# MAHABHASHYA

A big instalment of notes next month, discussing the propriety of the examples of classical and vedic speech.

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदः सभाष्ये मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। —ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत।

श्रीविश्वनाथ चट्टोपाध्यायः।
८१ श्यामबाजार ष्ट्रीट, कलिकाता ४।
81, Shyambazar Street, Calcutta 4.
Phone : B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| July, 1950. | १८७२-शकीय-श्रावणस्य ४र्थ-वर्षस्य ११-संख्या | Vol. IV No. 11 |
|---|---|---|


## आभाणकाः ।

१ । यथा प्रभुस्तथा भृत्यः ।

Like master, like man.

(ला) Qualis dominus, talis et servus.

(फ) Tel maitre, tel valet.

(शा) Wie der Herr, so der Diener.

२ । यथा राजा तथा प्रजा ।

Like prince, like people.

(ला) Qualis rex, talis grex.

३ । Like St. George who is always on horse-back and never rides.

यथा सिद्धो गर्गो यः सदैवाश्वपृष्ठे वर्त्तते, न च कदाचिद-प्यश्वेन सञ्चरते ।

[ Defer not thy well-doing ; be not like St. George, who is always on horse-back and never rides.

क्षिप्रं कुरुष्व कर्माणि शुभानीह प्रयत्नतः ।
सिद्धो हि भगवान् गर्गो हयपृष्ठे निरन्तरम् ॥
निषण्णोऽपि न कदाचिदश्वेन विचरत्यहो ।
गर्गस्य सरणिर्वत्स नानुसार्या कदाचन ॥ ]

४। Often a full dexterous smith forges a weak knife.

सुदक्षोऽपि हि कर्मारो विनिर्मात्यपटुं क्षुरम् ।

५। A word to the wise is enough.

(ला) Verbum sat sapienti.

(फ) A bon entendeur demi-mot.

(जा) Den Gelehrten ist gut predigen.

एकमेव पदं पर्याप्तं ज्ञानिभ्यः ।
"अनुक्तमप्यूहति पण्डितो जनः ॥"

## सम्यक्

प्रतिसप्ताहमेव धर्मयाजकेन धर्ममन्दिरे व्याख्यानं क्रियते। तस्य भाषणं पुनः श्रोतृभ्यो न स्वदते। प्रतिभाषणमेव श्रोतॄणामपरागो वर्धते स्म। अन्ततश्च तैः समेत्य धर्मयाजकाय कथितम्, अवश्यमेव परित्याज्यमचिरादेव स्थानमिदं भवता इति। तेनोक्तम्, पुनरपि मदीयमेकमेव भाषणं श्रूयताम्, तच्चेद् भवद्भ्यो रोचेत, सम्यक्। विपर्यये तु मम गमनं व्यवस्थितमेव इति। ते च सम्मताः।

परवर्त्तिनि रविवासरे सर्वे ग्रामीणा भाषणश्रवणाय मन्दिरे समुपस्थिताः। भाषणं च संश्रुत्य ते विस्मयस्य प्रमोदस्य च परां काष्ठामुपारूढाः। प्रदेशे तस्मिन् बहुभिर्वर्षैरीदृशो धर्मोपदेशो न श्रुत इति।

समवसिते च भाषणे सर्वं एव पाणिना तस्य पाणिं संपिष्य तस्मिन् बहुमानं निवेदयामासुः। दलपतिना चोक्तम्, अवश्यमेव भवतात्र स्थातव्यम्। अस्माभिरचिरादेव भवतो वृत्तिर्वर्धयिष्यते इति।

धर्मयाजकेन सम्मतिर्विज्ञापिता; ततश्च पुनरपि दलपतिनोक्तम्—ईदृशमुदात्ततमं व्याख्यानमितः पूर्वं कदापि मया न श्रुतम्। परमेकं वस्तु मया बोद्धुं न पारितम्। भाषणमुपक्रममाणेन भवता वामहस्तस्याङ्गुलिद्वितयमुद्धृतम्, उपसंहरता च दक्षिणहस्तगतमङ्गुलिद्वयमुद्धृतम्। इङ्गितयोरेतयोः किं वा तात्पर्य्यम्? कृपया विव्रियताम्। इति।

धर्मयाजकेनोक्तम्, "तानि खलूद्धारचिह्नानि (quotation marks)" इति।

## समीचीनमुत्तरम्

भूपतिमहोदयः सहधर्मिण्या जन्मतिथिमहोत्सवे तस्यै शुकमेकमुपजहार। सा हि दृष्टमात्र एव पक्षिणि हर्षोत्फुल्लनयनावदत्, अहो सौन्दर्यमस्य शुकस्य। परं किमिति प्रतिपदं सूत्रमेकं संबद्धं दृश्यते इति। भूपतिमहोदयेनोक्तम्, सूत्रमेकं समाकृष्य दृश्यताम् इति। अथ तया वामपदस्थे सूत्रे समाकृष्टे शुकोऽवदत्, नमस्ते मातरिति। ततश्च दक्षिणपदस्थं सूत्रं तया समाकृष्टं शुकेन चोक्तम्—भृशं प्रीतोऽस्मि भवद्दर्शनेनेति। ततश्च कौतूहलाक्रान्तया तयोक्तम्, सूत्रद्वयं युगपदेव समाकृष्यते चेत् किं वा स्यात् इति। शुकेन प्रत्युक्तम्, मूढ़े, अहं तर्हि वासयष्टेर्निपतेयम् इति।

# आख्यातरहस्यम्

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

छान्दोग्योपनिषदि श्रूयते—"एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच, रश्मींस्त्वं पर्यावर्तयाद्, बहवो वै ते भविष्यन्तीत्यधिदैवतम् ( १।५।२१) ।" इति ।

अत्राचार्यपादैरुक्तम्—"अतो रश्मीन् आदित्यञ्च भेदेन त्वं पर्यावर्तयात, पर्यावर्तयेत्यर्थः, त्वं-योगात्" इति ।

व्याख्यातञ्चैतदानन्दगिरिणा— "पर्यावर्तयादिति प्रथमपुरुषे श्रूयमाणे किमिति मध्यमपुरुषो व्याख्यायते ? तत्राह—त्वं-योगादिति। युष्मद्युपपदे मध्यमपुरुषविधानादित्यर्थ:" इति ।

पर्याङ्पूर्वस्य वृते र्ण्यन्तस्य लोण्-मध्यमपुरुषैकवचने पर्यावर्तय पर्यावर्तयतात् इति रूपद्वयं वैयाकरणानां सम्मतम् । अनयोः सङ्करेण (contamination ) पर्यावर्तयात् इत्यस्योद्भवः । लेट्प्रथमपुरुषैकवचने पर्यावर्तयात् इत्यस्य सम्भवेऽपि, अत्र तस्य प्रसक्तिर्नास्ति । "प्राणांस्त्वां भूमानमभिगायतात्" इति तस्यैव खण्डस्य चतुर्थे मन्त्रे विस्पष्टमेव तातङ् सन्दृश्यते। तत्राचार्यपादैरुक्तम्—पूर्ववद् आवर्तयेत्यर्थः। आनन्दगिरिणा च व्याख्यातम्—"मध्यमपुरुषे तातङादेशस्य चैकल्पिकत्वेऽपि प्रथमपुरुषशङ्कया दुरन्वयं व्यावर्तयति—पूर्ववदिति ।" इति ।

प्रियवाचकमहाभागाः ! पर्यावर्तयात् इत्यत्र तातङस्तकारस्य लोपः अभिगायतात् इत्यत्र च तस्य स्वरूपेणावस्थानम्, किमत्र वैषम्ये बीजमिति विचारयन्तो नूनं प्रतिपद्येरन् भवन्तो यत् पर्यावर्तयतात् इत्यत्र धातौ तकारस्य सद्भावाद् विभक्तेः प्रथमतकारस्य लोपः सञ्जातः। अयमेव च Haplology इत्युच्यते पाश्चात्त्यैः । सङ्करसाहायकेनैवायं लोपो निष्पन्न इत्यपि द्रष्टव्यम् ।

# आन्ध्रदेशीय-महाकविः रामचन्द्रकोराडः

[ श्रीरामकृष्ण-कोराडः ]

विदितचरमेव भवतां पण्डितप्रकाण्डानां सर्वेषां, भारतवर्षे लब्ध-प्रतिष्ठानाम् अर्वाचीनकविपण्डितानां मध्ये, आन्ध्रदेशीयाः कवयः पण्डिताश्च अतीव अल्पसंख्याका एवेति, तेषामपि सुप्रसिद्धः प्रथम-गणनीयश्च पण्डितराजो जगन्नाथः पण्डितराय इति निर्विवादविषय एव, स च क्रिस्ताब्दीयसप्तदशशततमशताब्दीपूर्वभागे डिल्ली-सिंहासनाधिष्ठितस्य साजहान्-चक्रवर्तिन आस्थानकविर्भूत्वा सङ्गीत-साहित्यविद्यास्वप्रतिमानप्रतिभश्चक्रवर्तिना बहुधा सम्मानितः बहूपकृतश्च रसगङ्गाधर-भामिनीविलासादि-ग्रन्थनिर्माणेन भारतीय-साहित्य-शास्त्रवीथिकायां कविताभणितौ च नूतनमार्गोपदेष्टाऽभूदिति बहुभिरङ्गीकृतमेव। तत्सदृशो भारतदेशे लब्धप्रतिष्ठो दाक्षिणात्यः अथवा आन्ध्रदेशीयः पण्डितकविः एतावत्पर्यन्तं न कोऽपि समजनि, सन्तु नाम सङ्गीतसाहित्यशास्त्रेषु अप्रतिमानप्रतिभाः शिष्टु-कृष्णमूर्तिशास्त्रिप्रमुखाः श्रीपरवस्तुरङ्गाचार्याद्याः पण्डितवर्याः कवयश्च, तथापि ते पण्डितरायवद् भारतदेशे लब्धप्रतिष्ठा इति वक्तुं न शक्यते, प्रायेण आन्ध्रदेशीयैः पण्डितैः विरचिता ग्रन्था अपि कति-चन आन्ध्रलिप्यामेव मुद्रापिता अभूवन्, नागरलिप्यां मुद्रणमन्तरा आन्ध्रपण्डितानां ग्रन्था भारतदेशे प्रचारं न विन्दन्तीति सुव्यक्तमेव, नागरलिप्यां तन्मुद्रणसौकर्यम् अल्पीयान् आन्ध्रदेशे, अत एव एतत्-प्रान्तीय-कवि-पण्डितविरचितानां ग्रन्थानां भारतदेशे प्रचारो विरलो-ऽभूत्, तेषां नामान्यपि बहुभिरश्रुतपूर्वाण्यासन्।

एवं कोराडवंशीयो रामचन्द्रकविः, जगन्नाथपण्डितराय इव, वेंगिनाटिशाखीयः, गोदावरीतीरे ग्रामवासी, कौण्डिन्यगोत्रोद्भवः, तद्वन्धुश्च अभूत्। गोदावरीतीरे मध्यपल्लीग्रामस्तस्य जन्म-

भूमिः। अस्मिन् कोराडवंशे महादेवशास्त्रिनामा कश्चन मूलपुरुष आसीत्। सोऽपि स्वीयतपःप्रभावसम्पादितेन श्रीशैलभ्रमराम्बिका-प्रसादेन सप्तपुरुषपर्यन्तं स्वीयवंशं पण्डितमण्डितमकारयत्। एतद्विषयः स्वोदयनाम्नि रामचन्द्रकविकृतस्वीयचरित्ररूपे ग्रन्थे वर्तते। तथाहि :—

"कोराड इति च सन्ततिरभवत्तस्यामभून्महादेवः,
"स सर्वशास्त्रप्रभवैकरूपकः श्रीदेवतापादसरोजषट्पदः।
स्वस्यान्वयोत्पन्नजनुष्मतां मनाग् विमूढता नोचितमित्यवेत्य सः॥
"श्रीशैलगोत्रे भ्रमराम्बिकान्ते मालूरपत्रैर्विरसैः कृताहुतिः।
शर्वाक्षिविज्ञेयमितेरनारतं चक्रेऽद्भुतं तद्व्रतमिद्धधैर्यकम्॥"
अनन्तरं साक्षात्कृतामम्बिकामिदमयाचत—
"याचे भगीरथरथानुगजन्हुकन्या-
प्रोद्यज्झरीसहचरीभवनप्रकाण्डाम्।
विद्यां विधेहि दययामृतसारवत्यां
ह्या सप्तमान्मम कुलोद्भवपूरुषाणाम्॥" इति।

तन्मूलपुरुषस्य महादेवशास्त्रिणो दशमः पुरुषः एष रामचन्द्रकविरिति ज्ञायते। अतीते पूर्वयुवसंवत्सरे लब्धजन्मायं गते शार्वरिवत्सरे (क्रिस्ताब्दीय एकोनविंशतिशततमे वत्सरे) दिवं गतोऽभूत्। पितृसकाशाल्लब्धतारकमन्त्रोपदेशः, अनवरतं जपानुष्ठानात् तत्सिद्धिं चावाप्य स्वग्रामे पण्डितशुश्रूषया शास्त्रपारं गतः, शिष्टुकृष्णमूर्तिशास्त्रिणोऽनुग्रहात् लब्धकवित्वशक्तिः, तस्यैव प्रेरणया मद्रपुर्यां 'पण्डितमुनस्वी'-नामक-धर्माधिकार-पदवीं लब्धुकामः गृहान्निर्गत्य मध्येमार्गं मचिलीपट्टणाख्यं बन्दरुपुरीमवाप। तत्र च धनाभावान्मार्गव्ययसम्पादनार्थं कञ्चित्कालमुषित्वा, तत्रत्यैः कैश्चिदाप्तमित्रैः मद्रपुरीगमनप्रयत्नान्निवारितः तत्पट्टणस्थ-नोबुल्‌कला-

शालायां संस्कृतान्ध्रभाषाध्यापकस्थाने नियुक्तः। ततः प्रभृति पञ्चचत्वारिंशद्वर्षाणि शिष्याणामध्यापने काव्यरचनायां जपतपोमन्त्रानुष्ठानेषु च व्यापृतः निर्लिप्त आत्मवान् स्थितप्रज्ञश्च भूत्वा तस्यां मचिलीपट्टणाख्यबन्दरुपुर्यामेव जीवितशेषं निनाय।

कवितागुरोः कृष्णमूर्तिशास्त्रिणः पाण्डित्यं कविताप्रभावादिकं स्वीयवंशादिक्रमश्च रामचन्द्रकविना स्वविरचित-शृङ्गारसुधार्णव-नामके भाणग्रन्थे इत्थं प्रशंसितम्—

"येन स्वैरमकारि सारशरणं वेदाननं शक्तै-
　　रूपपादात् सरस्वती स्वजनितां नीता परं प्राणिताम्।
सत्काणादकलाभवत् कृतपरिष्वङ्गेव गान्धर्विका
　　मीमांसासरणी पदानि मृदितान्यश्रान्तमश्रान्तितः॥
"तादृक् शिष्टकुलप्रकाशनकरः श्री सक्तिनित्योत्सवः
　　स्वच्छन्दं वसुदेवपोषणमनाश्चञ्चत्कलाभावुकः।
दृप्यत्पूर्वबुधप्रथाहतिलसत् सौदर्शनश्रीकरः
　　श्रीकृष्णः सुमनःशिरोमणिरिहाकामि प्रसूनुः परम्॥
"यद्वाग्गुम्फाः शुशुम्भुर्भुजगपरिवृढाक्षीणसंक्षीबभावा-
　　त्पक्षप्रत्यर्थिदृप्यत्कनकधरलसच्छृङ्गभङ्गाधिसृष्टौ।
प्रोद्यज्झञ्झानभस्वद्भ्रमणगणलसद्गुम्फशुम्भत्सगर्भाः
　　प्रावृड् धाराधरौघोद्भवदशनिसमार्भस्त्यधिक्षेपदक्षाः॥
"तदनुग्रहवारिताज्ञता जनिताञ्चत्कवितावतारकः।
　　कृतिगुम्फितमाधुरीभरो वरकौण्डिन्यशुभान्वयोदयः॥"
"ताद्वकोराडवंशे समुपगतजनिर्लक्ष्मणार्यस्सुमित्रा-
　　नन्दः श्रीरामपादाम्बुजभजनसमायत्तचेतःप्रवृत्तिः।
तत्पुत्रः कृष्णकृष्टिट्परिचरणलसद्भव्यवाग्गुम्फभारः
　　सुब्बाम्बागर्भसिन्धोरिव मणिरभवद् रामचन्द्रः सुधीन्द्रः॥

"बभाण भाणं भणितिप्रथायुताशयोन्मदालिप्रकराम्बुजाकरम्।
सदाशयं सन्ततकौतुकोदयं कृती स शृङ्गारसुधार्णवाह्वयम्॥
"सहृदयहृदयप्रमोदभाराजनपटुरीतिलसत्प्रयोग एषः।
अहमिह नितरां करोमि सभ्यांस्तदभिनयेन विशेषितप्रतोषान्॥"

इत्येवं शृङ्गारसुधार्णवनामके भाणे नान्द्यन्ते सूत्रधारः सप्रश्रयमञ्जलिं बद्ध्वा, पुष्पाञ्जलिं च विकीर्य ब्रूते। तेनैव रामचन्द्रकृतिना प्रणीते देवीविजयनामके चम्पूप्रबन्धे एवमुक्तम् —

"श्रीगुरुगुरुतरकरुणापादितकविताङ्कुरः प्रणम्य बुधान्।
कोराडरामचन्द्रो लक्ष्मणसुब्बाम्बायाः सुतः प्रथमः॥
"भाणमुखरूपकाणां निर्माता श्रीमहेशनुतिनिरतः।
देवीविजयं नाम प्रबन्धमिह कर्तुमात्तचित्तोऽस्मि॥"

रामचन्द्रकविकृतानीमानि ग्रन्थनामानि तद्रचितस्वोदयकाव्यात् सङ्गृहीतानि—

१। शृङ्गारसुधार्णवः भाणः।

२। देवीविजयः चम्पूः।

३। कुमारोदयः चम्पूः—सप्तविंशत्युल्लाससङ्घटितः।

४। घनवृत्तं काव्यं—कालिदासकृतमेघसन्देशोत्तरकथाभागरूपं—मन्दाक्रान्तावृत्तरचितम्।

५। उपमावलिः।

एतद्ग्रन्थपञ्चकम् आन्ध्रलिप्यां मुद्रापितम्।

अन्येऽप्यमुद्रितग्रन्थाः—

६। कमनान्दभाणः।

७। रामचन्द्रविजयो व्यायोगः।

८। त्रिपुरासुरविजयो डिमः।

९। मृत्युञ्जयविजयः काव्यम्।

१०। शृङ्गारमञ्जरी।

११। मञ्जरीसौरभम्।

१२। कृष्णोदयः काव्यम्।

१३। कन्दर्पदर्पः।

१४। वैराग्यवर्धनी।

१५। धीसौधम्—इति व्याकरणग्रन्थः

१६। भास्कररायप्रणीत-देवीसहस्रनाम-भाष्यार्थसंग्रहः।

१७। कालिदासविरचित-कविकण्ठपाशाख्य-प्रबन्ध-व्याख्या।

१८। अमृतानन्दयोगिविरचित-सर्वालङ्कारसंग्रहव्याख्या।

१९। रामचन्द्रीयम्—गद्यरचना।

२०। रुक्मोदयकाव्यम्।

घनवृत्ताख्ये काव्ये कालिदासकृतमेघसन्देशात्तरकथापूरणाभिलाष-मेवमाचष्टे कविः—

श्रीकालिदास-कविराज-विक्लृप्तमेघ-
सन्देशकाव्यपरिपूरणलालसा मे।
सर्वेप्सितप्रणयनक्षमकल्पवल्ल्याः
सूनैः सयत्नरचितैरुपशोभनं नो॥

ततः कथा प्रारभ्यते मन्दाक्रान्तावृत्तैः—

"इत्युक्तोऽसौ सपदि जलदस्तेन दीनात्मनालं
श्रुत्वा कामं सरसहृदयप्राग्रणीत्वात् प्रहृष्टः।
लोके दीनावनमनुपमं पुण्यमादत्त एवं
सन्तः प्रोचुस्तदिह हि मया तोषणीयः सखा मे॥
"जीमूतं मां निगदति जनस्सर्वदा खर्वभावाद्
रक्ष्यः स्वार्थः परमवहितप्रेक्षिणा दक्षिणेन।

स्वाभिख्यानं नयति न च सद्युक्तियादृच्छिकत्वं
तस्मान्नो किं परमसुहितं प्राणिभोज्यं शरीरम् ॥
"इत्याद्यात्मन्यमृतसदने संविचिन्त्याम्बुवाहः
कर्तुं मित्रेप्सितकृतिमथो यत्नवान् संबभूव।
को वा न स्यात् प्रणयवशतो याचमाने वयस्ये
शक्यं कार्यं स्वगतिवशतः साधितुं सप्रयत्नः ॥"इति।

गीर्वाणभाषापण्डितमहाशयान् प्रति एषा प्रणयपूर्वकमभ्यर्थना क्रियते, प्राचीनगीर्वाणभाषाकवितल्लजानां ग्रन्थप्रकटनपठन-प्रवचनेषु यादृशावादरोत्साहौ प्रदर्शितौ तादृशावेवाधुनिक-गीर्वाणकविग्रन्थेष्वपि प्रदर्शनीयाविति, तत्राप्यान्ध्रदेशीया अपि कवयस्तेषां ग्रन्थाश्च सादरं संस्मरणीया इति, तेषु च बहुग्रन्थप्रणेता एष रामचन्द्राख्यः कविः भवतां समादरपात्रं भवत्विति।

---

# महाभाष्यम् ।

( ४ )

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

The earliest discussion on the correctness of the compound "s´abdanus´āsanam" is probably found in the Nyāsa :

अनुशिष्यन्ते संस्क्रियन्ते व्युत्पाद्यन्तेऽनेन शब्दा इत्यनुशासनम्। शब्दानामनुशासनं शब्दानुशासनम्। अत्र केचिच्चोदयन्ति। "उभयप्राप्तौ कर्मणि" इत्यनेनात्र षष्ठी। ततश्च "कर्मणि च" इत्यनेन समासप्रतिषेधेन भवितव्यमिति। एतच्चायुक्तम्। यत्र ह्युभयोः प्राप्तिस्तत्रानेन कर्मणि षष्ठी विधीयते। क्व चोभयोः प्राप्तिः? यत्र सामर्थ्यप्राप्तमुभयोः कर्तृकर्मणोरुपादानम्। यथा 'आश्चर्यो

गवां [?] दोहोऽशिक्षितेनागोपालकेनेति। एवं नाम दुर्दोहानां गवामशिक्षितेनागोपालकेन दोह इत्याश्चर्यभूतोऽत्र गवां दोहः प्रतिपादयितुमिष्टः। स च यदि दुर्दोहानां गवामुपादानं क्रियतेऽशिक्षितस्यागोपालकस्य च कर्तुरेवं शक्यः प्रतिपादयितुमाश्चर्यशब्दः [?], नान्यथा इति सामर्थ्यप्राप्तमुभयोरुपादानम्। शब्दानुशासनमित्यत्र तु शब्दानामिदमनुशासनं नार्थानामित्येतावतोऽर्थस्य विवक्षितत्वात्, तस्याचार्यस्य कर्तुरुपादानमन्तरेणापि प्रतिपादयितुं शक्यत्वादाचार्योपादानमकिञ्चित्करम्। तस्मान्नात्रास्ति द्वयोरपि कर्तृकर्मणोः सामर्थ्यप्राप्तमुपादानम्। ततश्चोभयप्राप्तिरपि नास्त्येव। असत्याञ्च तस्यां न "उभयप्राप्तौ कर्मणि" इत्यनेन षष्ठी। केन तर्हि? "कर्तृकर्मणोः कृति" [ २।३।६५ ] इत्यनेन। ततश्चेध्मप्रव्रश्चनवत् समासो भविष्यति। अथवा शेषलक्षणैवेयं षष्ठीत्यचोद्यमेतत्।

"S'abdānus'āsana" is a well-established name of grammar.

व्याकरणस्य चेदमन्वर्थं नाम शब्दानुशासनमिति। ( न्यासः )।

The minds of grammarians have also been greatly exercised over the correctness of केषां शब्दानाम्. Thus the Nyāsa says :

कथं पुनरनुशासने गुणीभूतानां शब्दानां किंशब्देन प्रत्यवमर्शो भवति? नैष दोषः। प्रधाने ह्यन्तर्भूतस्याप्युपसर्जनस्य बुद्ध्या प्रविभज्य किंशब्देन प्रत्यवमर्शो दृष्टः। यथा राजपुरुषोऽयम्, कस्य राज्ञ इति।

"How can the word "s'abda" which is a subordinate member of the compound "s'abdānus'āsana" be referred to by the pronoun *kim*?" asks Jinendrabuddhi and answers : We find in ordinary speech the subordinate member

forming a part of the principal compound taken apart by the mind and referred to by the pronoun *kim*, as in "This man is a king's-officer. Of which king?"

Jinendrabuddhi has evidently failed to see the point. The difficulty, here, is not due to '*kim*' referrin gto "s´abdānām", because the word "s´abdānām" is explicitly mentioned, but due to 's´abdānām' being connected with "anus´āsanam" which is a part of the compound "s´abdānus´āsanam" (Cf. दारुपात्रं च म्लन्मयम्, "the high-brow and the low-" etc.). Thus Haradatta says :

कथं पुनरनुशासने गुणीभूतानां शब्दानां किं-शब्देन परामर्शो युज्यते ? स्यादयं दोषो यदि केषामित्येतावदुच्येत, तदा हि शब्दानामित्यनुषङ्ग आश्रयणीयः तच्च गुणीभूतस्यानुपपन्नम्। इह तु शब्दानामिति स्वशब्देनोपादीयते, तत्तु प्रकृतगुणीभूतशब्दपरमित्येतावत्, तच्च नानुपपन्नम्, बुद्धौ सन्निहितत्वात् राजपुरुषोऽयं कस्य राज्ञ इतिवत्।

This is good so far as it goes, but it does not go far enough. Unfortunately all the commentators take this view :

प्रदीपः। उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात् किमा प्रत्यवमर्शः। यथा राजपुरुष इत्युक्ते कस्य राज्ञ इति।

उद्द्योतनम्। ननूत्तरपदार्थसंसृष्टस्योपसर्जनस्य कथं सर्वनाम्ना परामर्शः ? अत्र आह—उत्तरेति। बुद्ध्येति। असंसृष्टतया प्राधान्येन बुद्ध्या विषयीकृतस्य परामर्शो युक्त इत्यर्थः। अतः शब्दानाम् इति स्वशब्देन पृथक्कृतानामुपसर्जनानामपि केषामित्यन्वयोपपत्तिः। अत एव "शब्दानाम्" इत्युक्तम्, अन्यथा केषामित्येवालम्। शब्दानाम् इत्यधिकम् इति केचित्। /

उद्द्योतः। ननूत्तरपदसंसृष्टार्थस्य पूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शः अत आह—उत्तरपदार्थान्तर्गतस्येति। ततः पृथगुपस्थित्यविषयस्येत्यर्थः। बुद्ध्या मानस्या। यद्वा वाक्यजन्यबुद्ध्या।

छाया। ननु मिलितैकदेशस्य विशेष्यस्य "सर्वनाम्नां प्रधानपरामर्शकत्वम्" इति नियमाङ्गीकारेण परामर्शसम्भवेऽपि गुणीभूतस्य वृत्त्याद्यन्तर्गतस्य परामर्शो नेत्याशयेन शङ्कते—ननूत्तरपदेति। प्रकृताभिप्रायमेतत्। अप्रधानस्य न स इति तत्त्वम्। संसृष्टेति। तदेकार्थीभावापन्नेत्यर्थः। यद्यप्युत्तरः पदार्थो यत्रेति बहुव्रीहिणा यथाश्रुतं सुयोजम्, तथापि पूर्वपदार्थेत्यस्य वैयर्थ्यापत्तिः। नियमेन वृत्त्यलाभेन प्रकृतार्थासिद्धिः वाक्ये तथा सत्त्वेऽपि तदङ्गीकारश्चेति तस्य दुर्वचत्वेन तथा वाच्ये तदन्तर्गतत्वं दुर्वचमत आह—तत इति। उत्तरपदार्थादित्यर्थः। समुदितादुभयोरेकैवोपस्थितिरिति भावः। तदीयशाब्दबुद्ध्याऽतत्त्वादाह—मानस्येति। ननु नियमेन तत्सत्त्वे न मानमत आह—यद्वेति। वाक्येति। लौकिकं स्वार्थमित्युक्तम्, न त्वश्वकर्णादिवच्छुद्धरूढं येनाविग्रहत्वं स्यात्। अस्याश्च नियमेन तत्र सत्त्वम्। शब्दानामिति तु तत्परामृष्टस्यार्थस्य प्रदर्शनं स्पष्टत्वाय न स्वतन्त्रम्। अत एवोत्तरे तदनुक्तिः। अत एव "दशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः"[१] इत्यादौ न दोषः।

यद्वा, अयं दोषस्तदा स्याद् यदि "केषाम्" इत्येवोक्तं स्यात्। तदा हि "शब्दानाम्" इत्यस्यानुषङ्गः। स चोक्तरीत्याऽनुपपन्नः। अत्र तु विशेष्यं शब्दानाम् इति कण्ठत उच्यते, तत्तु तत्परमित्यन्यत्। सन्निहितत्वं न बुद्धिस्थत्वात्। एवं च तथानिर्दिष्टानामेव तेन

१ "चैत्रो ग्रामगतस्तत्र मैत्रः किं कुरुतेऽधुना।"—श्लोकस्योत्तरार्धम्।

परामर्शो न तु तत्र गुणीभूतानाम्। अत एव पुनस्तदुक्तिसाफल्यम्। दण्डिमिश्रावप्येवम्। एतेन "तस्मिन्नद्रौ" [मेघसन्देशः १।२] इत्यत्राद्रिपदोक्तिर्व्याख्याता, अन्यथोक्तरीत्या न स्यात्। पूर्वमतेऽप्यत्र न दोषस्तुल्यत्वात्। निर्दयत्वकर्कशत्वादिबोधनेनानाश्रयणीयत्वादिव्यञ्जकतया महाशयत्वाद्यर्थान्तरसंक्रमिततया वा तस्य साफल्याच्च। एवं सर्वत्र बोध्यम्। द्वितीयपक्षे "दशैते" इत्यादौ सामर्थ्यात् तस्य परामर्शः "आनर्थक्यात् तदङ्गेषु" [जै सू ३।१।१८] इति न्यायेन "सविशेषणे हि"[1] इति न्यायेन च। न चैवमपि शब्दानामित्यस्य पदत्वेन वाक्येत्ययुक्तमिति वाच्यम्, "वाक्ये वाक्यैकदेशः" इति न्यायेनास्यापि तत्त्वव्यवहारात्। साकाङ्क्षपदस्थलविशेष एकपदेऽपि तत्त्वस्य जयदेवोक्तत्वाच्च। अत एव प्रश्नोत्तरयोः सिद्धान्तरीत्याशयप्रदर्शकोक्तिसङ्गतिः।

युक्तिदीपिका [ दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ (सांख्यकारिका १) इत्यत्र ] दुःखशब्दं तर्हि तच्छब्देनाभिभन्त्स्यामः; तस्मिन्नेव निषेधो विशतीति। तच्च नैवम्। कस्मात्। ... अयं खल्वपि दुःखशब्दः समास उपसर्जनीभूतः, न चैकस्मिन् काले शब्दस्य प्रधानत्वमुपसर्जनत्वञ्च युक्तितः सम्भवति। प्रधानस्य च पदार्थेनाभिसम्बन्धः। ... सत्यम्, उपसर्जनस्य पदान्तरेणाभिसम्बन्धो नोपपद्यते। न तु वयं समासवृत्तेरेव तच्छब्देनाभिसम्बन्ध इति प्रतिपद्यामहे। किं तर्हि ? समासादपोद्धृतस्य बुद्धिव्यवस्थितस्योपर्जानतस्वातन्त्र्यस्य शब्दान्तरेण सम्बन्धमिच्छामः। इति। अथैतदनिष्टम्—"योगप्रमाणे च तदभावेऽदर्शनं स्यात्" [ १।२।५५ ] "अथ शब्दानुशासनम्। केषां शब्दानाम्" [ महाभाष्ये

---

१ "सविशेषणे हि विधिनिषेधौ विशेष्ये बाधे सति विशेषणमुपसंक्रामतः" इति न्यायशरीरम्।

पस्पशायाम् ] इति चैवमादीनां प्रयोगाणां विरोधः प्राप्नोति। अनिष्टश्च तत्।

रायमुकुटः। [(श्रुतिः स्त्री वेद आम्नाय-) स्त्रयी धर्मस्तु तद्विधिः १।६।३ ] त्रयीति। त्रयी वक्ष्यमाणा। तया विधिर्विधीयमानो यज्ञादिस्त्रयीधर्मः। उक्तञ्च "विधानमृग्यजुःसाम्नां त्रयीधर्मं विदुर्बुधाः" इति। समासे गुणीभूतस्यापि त्रयीशब्दस्य विवक्षावशात् तच्छब्देन परामर्शः। यथा 'अथ शब्दानुशासनम्। केषां शब्दानाम्?" इति। "ददृशुस्ते दिवौकसः। तत्फणामण्डलोदर्चिर्मणिद्योतितविग्रहम्" इति रघुः [ १०।७ ]।

विद्युल्लता। तस्मिन्नद्राविति। तच्छब्देन प्रकृतः समासे गुणीभूतो रामगिरिः परामृश्यते, "अथ शब्दानुशासनम्। केषां शब्दानाम्" इति, "तवास्य नीलोत्पलचारुचक्षुषो मुखस्य तद्रेणुसमानगन्धिनः" [काव्यालङ्कारसूत्रवृत्तिः ५।१।११ ] इति च शास्त्रे काव्ये चैवं प्रयोगदर्शनात् "सर्वनाम्नानुसन्धिवृत्तिच्छन्नस्य" [ का: ५।२।११ ] इति लक्षणाच्च।

केषां शब्दानाम्?—

न्यासः। कः पुनरत्र प्रष्टुरभिप्रायः? एवं मन्यते। शब्दानुशासनमित्यत्र शब्द-शब्दः सामान्यवचनः। न च सामान्यशब्दः प्रकरणादिरहितो विशेषे वर्तितुमुत्सहते। सन्ति च समुद्रघोषादयो बहवः शब्दाः। अतस्तेषामपि व्युत्पादनं प्राप्नोतीति। इह तु व्याकरणं प्रस्तुतम्, तच्च वेदाङ्गम्। अङ्गञ्चोपकारकं भवति। एवञ्च तद् वेदस्योपकारकं भवति, यदि तेनैव वैदिकाः शब्दाः संस्क्रियन्ते, लौकिकाश्च तदुपकारिणः। वैदिकोपकारित्वं तु लौकिकानाम्, तैस्तदर्थस्याख्यानात्। तस्माच्छब्दानुशासनाधिकाराद् विशिष्टा एवात्र शब्दा व्युत्पादयितुमभीष्टाः, न तु समुद्रघोषादयोऽपि

तथाविधशब्दव्युत्पादने हि व्याकरणस्यावेदाङ्गतापि स्यात्—इति मन्यमान आह—लौकिकानामित्यादि।

पदमञ्जरी। पृच्छतश्चायमभिप्रायः। शब्दानुशासनमित्यत्र शब्दशब्दः सामान्यवचनः। सन्ति च समुद्रघोषादयः शब्दा येषु वर्णाभिव्यक्तिरपि नास्ति, सन्ति च गाव्यादयोऽपभ्रंशाः, सन्ति च गवादयोऽनादयः साधवः, तत्राविशेषात् सर्वेषामनुशासनं प्राप्नोतीति। इतरोऽपि शब्दानुशासनशब्दस्य व्याकरणे योगरूढत्वात्, तस्य च वेदाङ्गत्वात् समुद्रघोषगाव्यादिव्युत्पादनस्य च वेदानुपयोगित्वादाह—लौकिकानां वैदिकानां चेति।

प्रदीपः। शब्दशब्दस्य सामान्यशब्दत्वाद् विना प्रकरणादिना विशेषेऽवस्थानाभावात् तन्त्रीशब्दकाकवाशितादीनामप्यनुशासनप्रसङ्ग इति मत्वा पृच्छति—केषामिति।

उद्द्योतनम्। ननु शब्द-शब्दस्य लोकप्रसिद्धार्थकत्वात् केषाम् इत्ययुक्तम्? अत आह—शब्दशब्दस्येति। यत्तु "तपरस्तत्कालस्य" [ १।१।७० ] इति सूत्रे "शब्दानां ध्वनिः" इति ध्वनिव्यतिरिक्ते शब्दशब्दप्रयोगस्य भाष्ये दर्शनाद् ध्वनिव्यतिरिक्तस्यैव लक्ष्यत्वनिश्चयाच्छङ्कायागमाशङ्क्याह—शब्देति। वृद्धैर्ध्वनावपि शब्दशब्दप्रयोगाद् गोबलीवर्दन्यायेन "शब्दानां ध्वनिः" इति व्यङ्ग्यमात्रे प्रयोगोपपत्तिरिति भावः' इति। तच्चिन्त्यम्। अग्रिमव्यवहारेण पूर्वशङ्कानुत्थाने प्रकृत्यादिव्युत्पादनस्य लौकिकवैदिकविषयत्वनिश्चयाच्छङ्कयमनुपपन्ना स्यात्। सामान्येति ध्वनिवर्णवाचकत्वादित्यर्थः। "व्रीहीन् प्रोक्षति" इत्यादौ व्रीहिपदस्य प्रकरणादपूर्वीयव्रीहिपरत्वं युक्तम्, नैवमत्रेत्याह—विनेति। आदिना वाक्यशेषादिसंग्रहः। प्रसङ्ग इति। तथाच तेषामननुशासनात् प्रतिज्ञाविरोध इति मत्वेत्यर्थः।

उद्द्योतः। सामान्यशब्दत्वादिति। लोकव्यवहारे ध्वनावपभ्रंशे च शब्दशब्दप्रयोगादिति भावः। एतेन ध्वनिव्यङ्ग्य एव तपरसूत्रादौ शब्दशब्दप्रयोगादिदं चिन्त्यमित्यपास्तम्। ननु व्रीहीन् प्रोक्षतीत्यादौ सामान्यशब्दस्याप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवद् वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह—विनेति। व्रीहिशब्दस्य तु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः। वाशितादीनामित्यादिनापभ्रंशसंग्रहः।

छाया। ननु तपरसूत्रे "शब्दानां ध्वनिः" इति व्यङ्ग्यव्यञ्जकयोः शब्दशब्दस्य प्रयोगाद् अन्वर्थत्वाच्चानतिप्रसङ्गोऽत आह—लोकेति। त्रैविद्यवृद्धेत्यर्थः। ध्वनाविति। अनेनापरिस्फुटाकारादिवर्णसकलशब्दपरिग्रहात् काकवाशितादीनां पृथगनुक्तिः। उक्तरीत्या तत्रानतिप्रसङ्ग एवेति सूचनमेवमुक्तेः फलम्। तथाच शुद्धरूढः शब्दशब्दः। तपरसूत्रप्रयोगस्तु प्रकृताशयक इति भावः। विशेषेषु व्रीहिविशेषेषु। वाचकत्वस्य सिद्धान्तेऽपभ्रंशसाधारण्यादाह—साधाविति। प्रकरणात् यागप्रकरणात्। ननु तन्त्र्यादिशब्दानां न तत्त्वप्रसङ्गः, प्रकृत्यादिविभागस्य तत्रासम्भवात्, शकुनागमगान्धर्ववेदादिभिरेव तन्निर्णयाच्च। अत एव कैयटे 'मत्वा' इत्युक्तिः, अत आह—वाशितेति। बहुवचनं तु शब्दभेदाभिप्रायमिति।

सायणभाष्यम्। मारुतायेति तद्धितवृत्तावन्तर्भूतानामपि बुद्ध्या प्रविभागाद् य इति प्रत्यवमर्शः। यथा महाभाष्ये "अथ शब्दानुशासनम्। केषां शब्दानाम्" इति। यथा लोके राजपुरुष इत्युक्ते कस्य राज्ञ इति। ऋग्वेदभाष्यम् ६।६६।९।

There are various sounds in the world—sounds like the rumbling of the thunder, the roaring of the ocean, the dulcet notes of the cuckoo, the silvery song of the nightingale, the sound of laughing and the sound of coughing, sounds of

corrupt words like *goṇī* etc , and of correct words like *gauḥ* etc. With which of these particular sounds does grammar concern itself ? The answer is "s'abdānus'āsana" means grammar and not instruction in sounds in general, just as 'paṅkaja' means the 'lotus' and not 'whatever grows in mud.' Further it is a Vedāṅga, a propaedeutic to the Vedas and since the sound of the ocean's roar, the cuckoo's notes, corruptions like *gāvī*, *goṇi*, etc., have nothing to do with the Vedas, these are excluded from the scope of "s'abdānus'āsana."

**लौकिकानां वैदिकानां च**—All words—be they proper names or words denoting substance or quality or action, be they nāmans or ākhyātas or upasargas or nipātas—all words that occur in the Vedas or that are current in popular speech come within the scope of the science. Since we proceed from the known to the unknown and since words current in popular speech are more or less known to us and since we explain and understand the Vedas with their help, "laukika" is mentioned first.

न्यासः। लोके विदिता लौकिकाः। "तत्र विदितः" इत्यनुवर्तमाने "लोक-सर्वलोकाट् ठञ्" [ ५।१।४४ ] इति ठञ्। अथवा लोके भवाः लौकिकाः। अध्यात्मादित्वात् [ ४।३।६०।१ ] ठञ्। एवं वैदिकाः। वैदिकानां लौकिकेभ्यः पृथगुपादानं प्राधान्यख्यापनार्थम्। यथा ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति। अत्र ब्राह्मणत्वादेव वसिष्ठस्याप्यागमने सिद्धे प्राधान्यख्यापनार्थं तस्य पृथगुपादानम्। प्राधान्यख्यापनन्तु वैदिकानां यत्नेनापभ्रंशनिरासार्थम्। तेषां ह्यपभ्रंशे याज्ञे कर्मणि महान् प्रत्यवायो दृष्टो हेलयो हेलय इति। अथवा ये लोकयात्राहेतवो भाषाशब्दास्तैरेव लौकिकत्वं प्रसिद्धमिति वैदिकानां पृथगुपादानम्।

पदमञ्जरी। यद्यपि गाव्यादयोऽपि लोके विदितास्तथापि ते न सर्वलोके विदिताः, प्रतिदेशं भिन्नत्वादपशब्दानाम्, लोकशब्दश्चायं

सर्वस्मिल्लोके वर्तते, सङ्कोचकाभावात्, अतः सर्वलोकप्रसिद्धानां गवादीनामित्यर्थः। साधूनामिति यावत्।

प्रदीपः। सिद्धान्तवादी तु व्याकरणस्य वेदाङ्गत्वात् सामर्थ्याद्विशेषावगतिरिति मत्वाह—लौकिकानामिति। लोके विदिता इति "लोकसर्वलोकाट् ठञ्" इति ठञ्। अथवा भवार्थेऽध्यात्मादित्वाट् ठञ्। एवं वेदे भवा वैदिकाः। वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम्, यथा ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति वसिष्ठस्य। तेषां तु प्राधान्यं यत्नेनापभ्रंशपरिहारात्। अथवा भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः। तत्र लोके पदानुपूर्वीनियमाभावात् पदान्येव दर्शयति—गौरश्व इति, वेदे त्वानुपूर्वीनियमाद् वाक्यान्युदाहरति—शं न इति।

उद्द्योतनम्। उत्तरतात्पर्यमाह—सिद्धान्तेति। व्याकरणस्य वेदाङ्गत्वमागमानुभवाभ्यां सिद्धम्। सामर्थ्यादिति। अङ्गत्वानुकूलवैदिकपदार्थज्ञानजननसामर्थ्यादित्यर्थः। दृष्टद्वारसम्भवेऽदृष्टद्वारत्वानुपपत्तेर्वैदिकपदव्युत्पादनेन तदर्थज्ञानद्वाराङ्गत्वं वाच्यम्, तच्च तन्त्रीशब्दादिव्युत्पादने न सम्भवतीत्यङ्गत्वनिर्वाहार्थं विशेषपरत्वमिति भावः। लौकिकवैदिकपदयोरसङ्कीर्णार्थत्वाद् वैदिकानामिति वक्ष्यमाणायोगमाशङ्क्याह—लोके विदिता इति। वैदिकशब्दसाधारण्यायाह—अथवेति। लोकवेदाधिकरणन्यायेन[1] वैदिकानां लौकिकत्वात् पृथगुपादानायोगमाशङ्क्याह—वैदिकानामिति। प्राधान्यमुपपादयति—तेषामिति। अध्ययनविधिना नियतवर्णस्वरानुपूर्वीविशिष्टवेदस्याध्ययनविधानाद् वेदसाध्ये कर्मणि तदपभ्रंशे वैगुण्यप्रसङ्गाद् यत्नेन तन्निराकरणं कर्तव्यमिति प्राधान्यमित्यर्थः। नन्वेवं

---

१ जैमिनिसूत्रम् १।३।३०-३५

वेदाप्रयुक्तभाषाशब्दानामन्वाख्यानं न स्यात्, तस्य वेदाङ्गत्वानुपपादकत्वात्, अत आह—अथवेति। शब्दाः केचिद्वैदिका एव, केचिल्लौकिका एव, केचिल्लोकवेदसाधारणाः, सर्वेषां लक्ष्यत्वप्रतिपत्तये राशिद्वयग्रहणम्। [1]प्रासादवासिन्यायेनोभयत्रसाधारणशब्दग्रहणेऽप्यसाधारणग्रहणार्थं पृथगुपादानं युक्तम्। एतेन बहूनां लोकवेदयोरभेदे सत्यप्यत्यन्तभेदाश्रयं पृथगुपादानं न युक्तमिति वार्त्तिकं[2] निरस्तम्, सर्वसंग्रहाय तदावश्यकत्वात्। "एकः शब्दः सम्यग् ज्ञातः" इति श्रुतिपर्यालोचने साधुशब्दमात्रज्ञानस्य प्रयोजनवत्तया भाषाशब्दान्वाख्यानस्याप्यङ्गत्वोपपादकत्वात्। अत एव छान्दसानामन्वाख्येयत्वं "लोकतोऽर्थप्रयुक्ते" इति [3]वार्त्तिकविरुद्धमिति निरस्तम्, लोकग्रहणस्य वेदोपलक्षणत्वात्, 'प्रयुक्तानामन्वाख्यानम्' इत्येतावन्मात्रस्य विवक्षितत्वात्। लौकिकान्वाख्याने वेदाप्रयुक्तगाव्यादीनामेवान्वाख्यानप्रसङ्गोऽङ्गत्वानुपयोगादेव निरस्त इति भावः। लौकिकेषु पदमात्रोदाहरणस्य तात्पर्यमाह—तत्रेति। राशिद्वयमध्य इत्यर्थः। आनुपूर्वीति। 'आहर पात्रम्' 'पात्रमाहर' इति दर्शनात्। यद्यपि 'गामानय' 'ग्रामं गच्छ' इत्यादिवाक्योदाहरणं सम्भवति, तथापि पदद्वारैव वाक्यान्वाख्यानं न साक्षादिति पदानामन्वाख्यानमिति द्योतयितुं पदोदाहरणम्। न च 'गवादिशब्दानां वेदेऽपि सत्त्वाल्लौकिकोदाहरणत्वानुपपत्तिः, लोकेऽपि सत्त्वादुपपत्तौ तेषामेव वैदिकोदाहारणत्वमपि स्यात्' इति वाच्यम्, अनियतानुपूर्वीकपदत्व-नियतानुपूर्वीकपदत्वोपाधिभेदेनोदाहरणभेदो-

१ "केचित् प्रासादवासिनः, केचिद् भूमिवासिनः, केचिदुभयवासिनः। ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन, ये भूमिवासिनो गृह्यन्ते, ते भूमिवासिग्रहणेन, य उभयवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च।" महाभाष्यम् १।१।८

२ तन्त्रवार्त्तिकम्

३ कात्यायनवार्त्तिकम्

पपत्तेः। अत एव शमादीनां लोकसिद्धत्वान्न वैदिकोदाहरणत्वमिति निरस्तम्, आनुपूर्वीविशेषविशिष्टानां वेदमात्रप्रयोगात्। यद्यपि गामालभते अश्वमालभते पुरुषमालभते इत्यादीन्युदाहर्तुमुचितानि, उक्तोपाधिभेदसद्भावात्, तथापि वेदचतुष्टयस्यापि विषयत्वज्ञापनाय तदादिवाक्यचतुष्टयस्योदाहरणम्। एतेन 'गृभ्णामि' इत्येवमाद्येव वैदिकमुदाहरणीयमिति निरस्तम्, वेदचतुष्टयमध्ये तस्यापि सत्त्वात्। न च नियतप्रतिपदपाठेषु वैदिकेषु न लक्षणापेक्षेति वाच्यम्, प्रमादालस्यादिनापभ्रंशसम्भवेन लक्षणावश्यकत्वादिति भाष्यप्रदीपयोस्तत्त्वनिष्कर्षः।

उद्द्योतः। वेदाङ्गत्वादिति। तत्त्वं चागमसिद्धम्। अनेन तन्त्रीशब्दादीनामविषयता सूचिता। न च वेदाङ्गत्वाद्वैदिका एव विषयाः स्युः। तत्र तत्र "भाषायां" "छन्दसि" इत्याद्युक्तेरुभयोरपि विषयत्वात्। ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद् वेदस्यापि लोकान्तर्गतत्वाद् भेदेनाभिधानं न युज्यते इत्यत आह—वैदिकानामिति। वैदिकानां लौकिकत्वेऽपीति पाठः। तेषां त्विति। लौकिकानां याज्ञे कर्मण्येव तत्परिहारः, तेषां तु सर्वत्रेति भावः। भाषाशब्दानामिति। भाषा प्रयोज्यप्रयोजकवृद्धव्यवहारः, तत्र प्रयुज्यमानानाम् इत्यर्थः। एवं च वेदमात्रान्तर्गत-'कर्णेभिः' 'देवासः'-'गृभ्णामि'-इत्याद्यतिरिक्तपरता लौकिकशब्दस्य, तैस्तद्व्यवहारदर्शनात्। अत एव गौरश्व इत्यादीनां लौकिकोदाहरणत्वसङ्गतिः। लोके स्वरानादराद्वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य 'शं नः' इत्यादीनां वैदिकोदाहरणत्वसङ्गतिरिति भावः। भाष्ये लौकिकास्तावदिति। तावच्छब्दोऽनुक्रमे। पूर्वं लौकिका उदाह्रियन्ते, पश्चाद्वैदिका इत्यर्थः। वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः। लोके पदानामु-

दाहरणत्वोक्तौ वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह—तत्रेति। पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम्। लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवात्राधिकृतत्वम्, न तु शाकटायनादिव्याकरणस्येत्युक्तराशयं परे वर्णयन्ति।

छाया। लौकिकानामिति। न च वेदाङ्गत्वाद् वैदिकानामिति प्राग् वक्तव्यम्। तज्ज्ञानमेव हि मुख्यं फलम्। लौकिकज्ञानं त्वानुषङ्गिकम्। न च वैदिकसम्प्रदायतस्तत्सिद्धिः इति वाच्यम्, दोषेण तस्याप्यन्यथात्वसम्भवात्। शाखानन्त्येन तत्तत्प्रातिशाख्यस्य क्वचिदुत्सादात्। तद्धदादरसूचनाय तथोक्तेः। लौकिकत्वस्य लोकवेदसाधारण-लोकमात्रवृत्त्युभयवृत्तित्वेन व्यापकत्वाच्च। विपरीतं तु न, अग्रिमग्रन्थविरोधापत्तेः। अत एव ब्राह्मणवसिष्ठन्यायप्रवृत्तिसूचनार्थत्वाच्च। सङ्कोचे मानाभावेन लोकशब्दस्य सर्वलोकवृत्तित्वेन तत्त्रयसिद्धत्वेन साधूनामेव ग्रहणं नापभ्रंशानां प्रतिदेशं तेषां भिन्नत्वादिति सूचनार्थत्वाच्चेति भावः। प्रकरणाभावेऽपि संयोगाद्यन्तर्गतसामर्थ्यसत्त्वाद्विशेषनिश्चय इत्याशयेनाह—कैयटे—सिद्धान्तेति।

कैयटे—अत एवाह—लोके विदिता इति। प्रसिद्धा इत्यर्थः। वैदिका इत्यनुरोधेन सम्भवादाह—अथवेति। अत एवाह—तत्र—वेदे इति। एतत्कथने तात्पर्यम्, अत एव पुनः प्रत्ययानुक्तिः।

प्राधान्यमुपपादयति—कैयटे—तेषां त्विति। वैदिकानां प्राधान्यं त्वित्यर्थः। बोध्यमित्यग्रे शेषः। वसिष्ठप्राधान्यवैलक्षण्याय 'तु'। यत्नेन सर्वथा, अन्यथा प्रत्यवायापत्तेः।

युक्त्यन्तरसम्भवेन विनिगमनाविरहादाह—अथवेति कैयटे।

[ उद्द्योते तत्त्वं चागमसिद्धमित्यत्र ] आगमेति "ब्राह्मणेने"त्या-

दीत्यर्थः। ननु नास्येष्टसाधकत्वं लौकिकासंग्रहादत आह—अनेनेति। आदिना अपभ्रंशसंग्रहः। तथाचातिप्रसङ्गनिवारणपूर्वकाभिमतैकदेशसाधकत्वात् सद्धेतुरेवायम्। अत एव मत्वेत्युक्तमिति भावः। अत एवाशङ्कते—न चेति। यत्तु कृष्णः—प्रयोगचोदनाभावादर्थैकत्वमविभागात् [जै० सू० १।३।३०] इत्यनेन य एव लौकिकास्त एव वैदिका इति जैमिन्युक्तत्वाद् भेदोक्तिरयुक्तेति, तन्न, सखी[१] कर्णेभिरित्यादीनां मिथो व्यावृत्तत्वात्। तदेतद् ध्वनयन्नाह—ननु चिदेति। पाठ इति। अनेन "०कत्वेन' इति पाठो निरस्तः। "०कानामिति' इति पाठे अपेक्षतत्रान्वयः। यथाश्रुते नैष्फल्यं ग्रन्थयोरसामञ्जस्यं चेत्यपि बोध्यम्। तदाह—लौकीति। अर्थबोधायोच्चारणप्रसङ्ग इति शेषः। यद्वा नित्यसाकाङ्क्षत्वात् 'तत्र' इत्यत्रैकदेशेऽन्वयः। तस्यानुषङ्गोऽग्रे। ननु तत्र सर्वेषां तत्त्वादेव व्यवच्छेद्यासम्भवोऽत आह—एवं चेति। तस्योक्तार्थकत्वे चेत्यर्थः। मात्रपदेन गौरश्व इत्यादीनामपि तत्त्वं ध्वनितम्। तेन नाग्रिमग्रन्थविरोधः। तदाह—अत एवेति। नन्वेवं 'शं नः' इत्यादीनामपि तत्त्वमुचितमिति तदुक्तिरयुक्ता। न च 'देवीः' 'ईळे' इत्यादिकं छान्दसं तत्रास्तीति वाच्यम्, तादृशानामेव वाच्यत्वेन तथोक्तेरयुक्तत्वाद्, अत आह—लोके इति। मात्रपदेन लोकव्यवच्छेदः। तत्रेति। तयोर्मध्ये इत्यर्थः।

प्रधानेति। व्याकरणस्य वेदाङ्गत्वात्, एवं चाभ्यर्हितत्वं. तेषाम्। तद्वत् वैदिकवत्। आदरेति। अत एव तत्पदघटितोक्ति-

---

१ "सख्यशिश्वीति भाषायाम्" [ ४।१।६२ ] इति सूत्रेण ङीषन्तः सखीशब्दो भाषायामेव प्रयुज्यते। "अतो भिस ऐस्" [७।२।९] इति सूत्रं "बहुलं छन्दसि" इति विधानबलाच्छन्दस्येव बहुलं प्रवर्त्तते, भाषायां तु सर्वथा नित्यमेव।

साफल्यम्। अत एव च तद्वत् तेषाम् "एकः शब्दः" इत्यादिश्रुत्युक्त-फलवत्तयार्श्यहितत्वम्। अन्यथातत्त्वापत्त्या तत्त्वापत्तेरिति भावः। पदानां पदानामेव। तत्रेतीति। तयोर्मध्ये इतीत्यर्थः। लोकेऽपि क्वचित् पदानुपूर्वी नियमसत्त्वादाह-पदान्तरेति। 'च' आनुपूर्वी-नियमसमुच्चायकः। तेन तत्र तस्य सार्वत्रिकत्वं सूचितम्, न तु लौकिके तदभाववत् सार्वत्रिकत्वम्। अपितु बोधसमुच्चय इति भावः। अस्यापि भेदोक्तिहेतुत्वं बोध्यम्। अत्रेदं बोध्यम्—गौरित्यादीनां वैदिकत्वेऽपि लोके प्रयुज्यमानतया प्रागुक्तरीत्या वा लौकिकत्वात् तत्त्वोक्तिः। स्तरषादीनां तत्त्वेऽपि नोक्तिर्वेदानु-पकारकत्वात्। तद्व्युत्पादनं तु प्रासङ्गिकम्। अत एव गौरित्यादय एवोदाहृताः। न चैवमपि घटपटादय एव कुतो नोक्ता इति वाच्यम्, अशोकवनिकान्यायात्*। गवाद्यर्थानां मङ्गल-त्वेन प्रातर्दृश्यत्वस्य धर्मशास्त्र उक्तत्वेन तत्प्रतिपादकत्वाच्छब्दस्यापि मङ्गलत्वमित्याद्युल्लेखाच्च। पुरुषशब्दश्चानादिपुरुषपरः। शकुनि-शब्दोऽपि चाषादिपर इति दिक्प्रदर्शनम्। अत एव "गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः" इति तैत्तिरीयब्राह्मणे [ तै० आ० ४।४२] उक्तम्। न चैवमपि गौरित्यादि-वत् 'शम्' इत्यादीनामपि लौकिकत्वेनैव तत्त्वोक्तिरुचिता, बहूनां तत्त्वादिति वाच्यम्, उक्तोत्तरत्वात्। न चैवमपि कर्णेभिरित्यादय एवोदाहार्या इति वाच्यम्, प्रायेण लोके प्रयुज्यमाना एव वेदे प्रयुज्य-

* अपहृता सीता क्वापि रक्षणीयेति रावणेनाशोकवनिकायां संस्थापिता, न चाशोक-वनिकाया एव वरणे कोऽपि कारणविशेषोऽवर्तत, तुल्यगुणानि वनान्तराणि सुबहूनि व्यराजन्तेति। अत्रापि घटपटादिपरिहारेण गवाश्वादीनामुल्लेखे कारणविशेषो नास्ति, केचन शब्दा उदाहरणत्वेनोपन्यसनीयाः, अत एव गवाश्वादय एवोपन्यस्ताः।

माना इति सूचनार्थत्वात्। अत एव देवीरिति प्रथमाबहुवचनम्। अभिष्टये इत्यत्रेकारलोपः। ईळे इत्यत्र ळत्वम्।

न चैवमपि प्रसिद्धऋगादिक्रमेण तत्त्वोक्तिरुचितेति वाच्यम्, तथैव तदुपादेयमित्यत्र मानाभावात्, भाष्यकारस्याथर्वणत्वाच्च, शुद्धच्छान्दसयोस्तत्र सत्त्वाच्च। न चान्त्यपक्षद्वयेऽग्रेषु क्रमोक्तौ किं बीजमिति वाच्यम्। आध्वर्यवादेर्ऋत्विजश्च क्रमेण तथोक्तेः। यद्वा मङ्गलार्थकसर्वपदघटितत्वेनादौ तदुक्तेः। अग्रे तूक्तैव रीतिः।

उक्तरीत्या कैयटस्य चिन्त्यत्वात् स्वसिद्धान्तरीत्या आह—लोकवेदेति। लौकिकवैदिकशब्देत्यर्थः। अत्र इत्यस्यात्रान्वयः। यद्वा अत्र भाष्यवाक्ये। अग्रे प्रतिपाद्यते इति शेषः। करणस्याधिकरणत्वविवक्षायां सप्तमी।

The examples given from classical Sanskrit are गौरश्वः पुरुषो हस्ती. We find the words in the same order in Nir. i. 1. 14 where the examples of finite verb are आस्ते शेते व्रजति तिष्ठति. Again in Nir. i. 12. 4 we find: तद् यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि। यथा गौरश्वः पुरुषो हस्तीति।

गो, अश्व and पुरुष occur in the same order in Vedic literature: गौरश्वः पुरुषः पशुः AV. viii. 7.11, गामश्वं पुरुषं पशुम् AV. vii. 7. 11.

अहरहर्नयमानो गामश्वं पुरुषं पशुम्।
वैवस्वतो न तृप्यति सुरया इव दुर्मदो॥

गवेऽश्वाय पुरुषाय भेषजम्। तै० सं० १।८।६।९।

गावो गावोऽभवन्नश्वा अश्वाः पुरुषाः पुरुषा मृगा मृगाः। ताण्ड्यमहाब्राह्मण २४।११।२

गा अश्वान् पुरुषान् धान्यम्। ऋग्विधान २।३१८

Sometimes the order is changed. In RV.x. 97.4, one seer is prepared to offer his horse, cow, clothes and even himself for a medicinal herb: सनेयमश्वं गां वास आत्मानं तव पूरुष।

तस्मादश्वो वा पुरुषो वा गौर्वा हस्ती वा। ऐतरेयब्राह्मण १६।१

सर्वे वै पशवः प्रजापतिः—पुरुषोऽश्वो गौरविरजः। शतपथब्राह्मण १०।२।१।१

स एतान् पञ्च पशूनपश्यत्—पुरुषमश्वं गामविमजम्। श. ब्रा. ६।२।१।२

पुरुषोऽश्वो गौरविरजो भवन्ति। एतावन्तो वै सर्वे पशवः। शतपथब्राह्मण ६।२।१।१५

अश्वा गावः पुरुषा हस्तिनः। ऐतरेयारण्यक २।६।१५

यथा वै पुरुषोऽश्वो गौर्जीर्यति, एवमग्निराहितो जीर्यति। बौधायनश्रौतसूत्र ३।८

अश्वा गावः पुरुषा हस्तिनः। ऐ उ ३।१

It will be noticed that cattle and horses and servants constituted the chief property of man. Of these गौः consists of one syllable and is therefore placed first, अश्वः of two syllables and therefore comes next, पुरुषः of three syllables and therefore comes last. In the Acc. sing. also the no. of syllables remains the same and so the order is not changed; गामश्वं पुरुषम्. In the Nom. pl. गो and अश्व both have two syllables, of these अश्व begins with a vowel, and we find अश्वा गावः पुरुषाः. In the Acc. pl. the no. of syllables gradually increases, so we have गा अश्वान् पुरुषान्.

The same principle probably applies to आस्ते शेते व्रजति तिष्ठति. The first two examples consist of two syllables and the next two of three syllables. Of आस्ते and शेते, आस्ते begins with a vowel and is therefore placed first. Of व्रजति and तिष्ठति, व्रजति begins with a short syllable and is therefore placed before तिष्ठति the initial of which is metrically long.

# शरणागतिः

[ विद्याभास्करः श्रीरामकृष्ण-भट्टः एम्. ए. ]

शम्भो मदीयहृदयाब्जगभस्तिमालि-
न्वाच्चारयाहतजले भगवन् भवाब्धौ।
अभ्यर्णसम्पतदुदग्रतरङ्गमालेऽ-
त्रोत्सङ्गमेव भवतः शरणं प्रपद्ये ॥ १ ॥

संरक्षकोऽसि मम शङ्कर किङ्करस्य
त्रायस्व यावदिह मां भववैशसानि।
क्लिश्नन्त्यतोऽपनय निर्वृतिधाम मां द्राग्
हृत्पद्ममद्य च गृहाण समर्पितं मे ॥ २ ॥

त्वत्पादपङ्कजयुगाच्छरणं न मेऽन्य-
त्त्वामेव जीवितमिदं ह्यवलम्बते मे।
नाथेन हीनमथ मां वत मा स्म हासी-
स्त्वयापि मे वितर शर्म करावलम्बात् ॥ ३ ॥

भावाः समे भवति मे भव निष्ठितास्ते
देव त्वदैव सकलोपकृतीर्लभेऽहम्।
मूर्धानमेतमवतान्निजचारुपक्ष-
च्छायोपगूढमिह शश्वदरक्षितं मे ॥ ४ ॥

आक्रन्दितं न गणयिष्यसि किं मदीयं
नाङ्गीकरिष्यसि दयाघन मेऽद्य याच्ञाम्।
मज्जामि हन्त निपतामि च यामि मूर्च्छां
चिन्तां निजां पशुपते त्वयि हा क्षिपामि ॥ ५ ॥

कारुण्यसान्द्रमुपसारय हस्तपद्मं
स्वं मां यतस्तव मनाक् तु बलं ग्रहीष्ये।
नैराश्यसन्तमसमेत्य विभोऽवतिष्ठे
साशा, मृतोऽपि कलये यदसौ म्रियेऽहम् ॥ ६ ॥

सर्वैषणीयमपि शर्व समाहृतं मे
त्वय्येव देव निखिलोत्तमतां च वीक्षे।
श्रान्तान्परेश पतितान्सगदानथान्धा-
नानन्दयोद्धर विभो सुखयानयैवम् ॥ ७ ॥
धर्म्यं च पावनमहो तव नामधेयं
स्वान्तं परं पुनरधर्मकषायितं मे।
सत्यप्रसादकरुणाभरणः शिवस्त्वं
पापानृतौघकलुषस्त्वहमस्मि शूलिन् ॥ ८
सन्दृश्यते त्वयि वरेण्यकृपासमाप्ति-
र्या मे क्षमेत निखिलं वृजिनं पुरारे।
निर्वाणदामृतधुनीभिरुदञ्चितासि-
र्मां सर्वदेश्वर विधेहि विशुद्धसत्त्वम् ॥ ९ ॥
चैतन्यतोयसरणेः प्रभवो मतस्त्वं
विश्रब्धमेव तमतो रसमापिबानि।
मृत्युञ्जय त्वमुदितो हृदयाम्बरे मे
गच्छोर्ध्वमत्र भगवन्द्युतिमान् हि शश्वत् ॥ १० ॥

ॐ तत्सत्

---

# पुस्तकपरिचयः।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

**La Durghaṭa-Vṛtti** de S'araṇadeva édité et traduit par LOUIS RENOU. Paris. Société d'edition "Les Belles Lettres". 95 Boulevard Raspail. शरणदेव-विरचिता दुर्घटवृत्तिः। लुइ रेणुना संस्कृता भाषान्तरमारोपिता

च। भारतीयैः France Arts, French Book Shop, 33-34 Park Mansion, Park Street, Calcutta 16 इत्यतो लभ्यम्।

कस्य वा न विदितो व्याकरणानुशीलनपरस्य फरासीदेशीयः पण्डितप्रकाण्डो लुइ रेणुर्नाम ? प्राक्तनसंस्कारसमुद्भासितशेमुषी-प्रकर्षेण मनीषिप्रवरेणामुना शब्दानुशासनशास्त्रेऽनितरसाधारणं पाण्डित्यं समधिगम्य व्याकरणशास्त्रमधिकृत्य बहवः प्रबन्धाः प्रणीताः, सर्वं एव परमरमणीया विद्वज्जनसंसेवनीयाश्च। इदानीमेतत्सम्पादिताया दुर्घटवृत्तेर्भागचतुष्टयं समापतितं नः पुस्तकागारमित्यमन्दमानन्दमभिविन्दामः।

वङ्गीयविद्वत्प्रवरेण शरणदेवेन विरचिता दुर्घटवृत्तिः कराल-कालप्रभावेण वङ्गदेशतः समूलमुच्छिन्ना त्रिशिरःपुरपत्तने गणपति-शास्त्रिमहोदयेन सम्मुद्रितासीत्। सा चेदानीमलभ्या संवृत्ता। रेणुमहोदयेनोपोद्घातरूपे प्रथमे भागे संक्षेपतः पाणिनीयप्रस्थानस्य सुप्रसिद्धप्रबन्धानां परिचयः प्रदत्तः, ततश्च प्राचीनाना व्याख्यान-शैली तन्त्रयुक्तिश्च सुनिपुणं विवृता। द्वितीये खण्डे दुर्घटवृत्तेः प्रथमाध्यायस्य पादचतुष्टयं रोमकलिप्या ( आङ्ग्ललिप्या ) मुद्रितम्, फरासीभाषामयोऽनुवादश्च सन्निविष्टः, विविधज्ञातव्यतथ्यसमुद्भा-सिता टीकापि संयोजिता। एवमेव तृतीये खण्डे द्वितीयोऽध्यायश्चतुर्थे च खण्डे तृतीयचतुर्थपञ्चमाध्याया व्याख्यानानुवादादिभिर्विभूषिताः सम्मुद्रिताः। यद्यप्यनुवादो व्याख्यानञ्च फरासीभाषामयं तथाप्य-विज्ञातफरासीभाषा अपि भारतीयाः पुस्तकस्यास्यानुशीलने प्रभवेयुः, नानातन्त्रतः समुद्धृतवाक्यानां संस्कृतभाषामयत्वात्।

संस्कृतव्याकरणग्रन्थस्यैतादृशं समीचीनं व्याख्यानं सुदुर्लभमेव। अवश्यं संग्राह्यमिदं पुस्तकं खण्डचतुष्टयात्मकं विद्वद्भिः। अवशिष्टा-ध्यायत्रयात्मकः पञ्चमः खण्डोऽप्यचिरादेव प्रकाशयिष्यत इति

श्रुतमस्माभिः। सुरभारतीसेवनपरायणाय रेणुमहोदयाय सहस्रशो धन्यवादान् वितरामः, प्रार्थयामहे च भगवन्तं महेश्वरं चिरं जीवताद्रेणुमहाभागश्चिरं च सुखमधिगच्छतात्, सुबहूंश्चैव विधान् ग्रन्थान् विरचयतात्, प्रतिदिनं चाधिकाधिकं यशः समभिविन्दतादिति। दुर्घटवृत्तिमधिकृत्यापरं यद् यद् वक्तव्यं तत् प्रबन्धान्तरेषु वक्ष्यते। रेणुमहोदयेन यथासम्भवमुद्धृतवाक्यानामाकरस्थानानि सन्निवेशितानि, दुष्टाश्च पाठाः संशोधिताः। इदानीं माद्राजपत्तनतो हस्तलिखितपुस्तकान्तरमपि विद्वत्प्रवरेणामुनाधिगतमिति पञ्चमखण्डे बहुत्र शुद्धतराः पाठाः सन्निवेशयिष्यन्ते इत्यत्र लेशतोऽपि संशयो नास्ति।

दुर्घटवृत्तौ प्रसिद्धतरप्रबन्धेषूपलभ्यमानानां व्याकरणसंस्कारविहीनानां पदानां प्रायेण साधुत्वसम्पादनाय प्रयतितं ग्रन्थकृता। एतदर्थं बहुत्र क्लिष्टकल्पनासमाश्रयणमावश्यकं सञ्जातम्। आशाधरभट्टविरचिता पूर्वपक्षावलिरीदृशमपरं पुस्तकम्। बरोदापत्तनस्थ-राजकीयसंस्कृतग्रन्थालये (Oriental Institute, Baroda) ग्रन्थस्य तस्य बहवः प्रतिमा वर्तन्ते। बरोदापत्तनस्थेन केनचन विदुषा पूर्वपक्षावलेः समीचीना प्रतिलिपिः प्रेष्येत चेदस्माभिः सानन्दं प्रकाशयिष्यते, सत्यामपेक्षायां टीकादिकमपि संयोजयिष्यते।

दुर्घटवृत्तौ [ २।१।१२ ] दृश्यते—कथं 'करस्य करभो बहिः' इत्यमरः। उच्यते—ज्ञापकसिद्धं न सर्वत्र इति ज्ञापकसमुच्चयः। प्रायेणामरकोषटीकाकृद्भिर्व्याकरणव्याख्याकृद्भिश्चैवमेवास्य साधुत्वं समर्थ्यते। अस्माकं पुनर्मतेन "तस्य परमाम्रेडितम्" [ ८।१।२] इति निर्देशादवयवावयविस्थले षष्ठ्येव साधुर्न पुनः पञ्चमी। अत्र च बहिःपदस्य बहिरवयववाचकत्वं सर्वेषां सम्मतम्। अपपरि-

रिति समासविधानाज् ज्ञापकाद्बहिर्योगे पञ्चमी" इति सिद्धान्तकौमुदीं व्याचक्षाणया बालमनोरमयोक्तम्—करस्य करभो बहिरिति त्वसाधुरेव। ज्ञापकसिद्धं न सर्वत्र इति वा कथञ्चित् समाधेयम् इति। एतत्तु चिन्त्यमेव। यच्च वैयाकरणप्रवरमूर्धन्येन नागेशभट्टेन लघुशब्देन्दुशेखरे व्यवस्थापितम् बहिर्योगे पञ्चमीत्यस्य पञ्चम्यपीत्यर्थः, तेन षष्ठ्या अपि प्रसरो निराबाधः। अत एव "करस्य करभो बहि"रिति सिद्ध इति, तदप्यवयवावयविभावाविचारमूलकमिति प्रतिभाति।

भाषावृत्त्यर्थविवृतौ सृष्टिधरेणोक्तम्—आकनिष्ठं करस्यावयवो मणिबन्धाद् बहिः करभ इति*।

# श्रीशङ्कराचार्य्यविरचितं स्तोत्रयुगलम्।

( १ )

[ श्रीरघुनाथ-कृष्ण-पाटणकरः ]

मञ्जूषायां अभिनवे तुरीयाब्दस्य दशमेऽङ्के प्रकाशितमस्मत्प्रेषितःश्रीमच्छङ्कराचार्यकृतस्तोत्रयुगलं न यावन्नो नयनसरणिं गतं तावदस्मत्सतीर्थ्येन राजपुरनिकटवर्तिकुंतापुरवासिना गुर्जरोपाह्वेन लक्ष्मणोपाध्यायेन निजपूज्यपितुः श्रीभिकाजीशास्त्रिणः स्मृत्यर्थमत्रत्यश्रीसंस्कृतपुस्तकसंग्रहालयार्थं समतीते माधवे मासि समर्पितेषु शतयुगमितेषु लिखिते पत्रयुगले स्तोत्रयुग्मम् अद्यैव लोचनगोचरतां गतम्। आद्यं तु "श्रीनीलकण्ठाष्टकं" यत् "श्रीशिवाष्टकम्" इति संप्रति प्रकाशितं तस्यैवास्याम् अभिनवप्रतिमायां नामान्तरं दरीदृश्यते। तत्र षष्ठे पद्ये "......नन्दं" इत्यत्र लुप्ताक्षरद्वयं

* "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इति समग्रममरवचनम् [ २।६।८१ ]

प्रतिमायां "भर्गा ....." इति विद्यते। एवं "भर्गानन्द" इति पूर्णं पदं विज्ञेयम् ॥

रचनाशैली स्तोत्रस्यास्य न भगवत्पूज्यश्रीशङ्कराचार्यपादैर्विनाऽन्यस्य कस्यापि। वृत्तसाम्येनापि चतुर्णां स्तोत्राणाम् एक एव रचयितेति समनुमीयते।

विशालोदरे काले श्रीभगवत्पूज्यपादानां भूयस्य एतादृश्यः कृतयः साम्प्रतमदर्शनं गता भगवत्कृपाकटाक्षेण समुपलभ्येरन् इत्यत्र न स्तोकोऽपि संदेहः।

मञ्जूषाया अस्या महाभाग्यं मन्ये यत्तस्यास्तुरीयेऽस्मिन्नब्दे श्रीभगवत्पूज्यपादानाम् एको लघुग्रन्थ-स्तोत्रत्रितयं च प्राथम्येन प्रकाशितम्। इति सकलं शिवम्।

दत्तात्रेयजनार्दनौ गुरुवरौ सौभ्रात्रसन्दर्शकौ
छात्रव्रातसमन्वितौ समुचिते पात्रे गुणानां सताम्।
राधाकृष्णपदारविन्दनिरतौ विद्वज्जनैः संस्तुतौ
स्यातां वै रघुनाथहृत्कुवलये नित्यं प्रतिष्ठमपितौ ॥

( २ )

[ श्रीदत्तात्रेयनारायणदेशपाण्डे ]

श्रीशाङ्करग्रन्थावलिः श्रीवाणीविलासमुद्रणालये ( श्रीरंगम् ) मुद्रिता। तस्य १७श-सम्पुटे श्रीगौरीदशकं स्तोत्रं प्रकाशितम्। तस्मादपेक्षितपूर्तयो दीयन्ते। चतुर्थश्लोके द्वितीयपादः— "चन्द्रापीडालङ्कृतनीलालकभाराम्" इति। अष्टमश्लोके प्रथमपादः— "आशापाशक्लेशविनाशं विदधानाम्"। श्रीशिवाष्टकस्तोत्रं तस्मिन् सम्पुटे न विद्यते। तस्मात्तदद्ययावदप्रकाशितं वर्तत इति मे मतम्। मञ्जूषाया आषाढ़-संख्या सुधीजनमनोहरा वर्तत इति पुनरपि निवेदयामि।

কলিকাতা বিশ্ববিদ্যালয়ের অধ্যাপক

শ্রীক্ষিতীশচন্দ্র চট্টোপাধ্যায়, এম. এ. ডি. লিট্ প্রণীত

**ভীমঙ্গলা**—The original slokas of Varāhamihira with a splendid original commentary. Re. 1/-

**Popular Etymology** Re. 1/-

# শব্দ-কথা

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি ভুলগুলির আলোচনা করা হইয়াছে। **সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক দিয়া,** বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওতপ্রোত-শব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম ত'র পর আছে, না দ্বিতীয় ত'র পর আছে, না উভয় ত'র পর আছে, সঠিক শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতায় প্রভেদ কি? সন্ধির কথায় সন্ধির বৈজ্ঞানিক ব্যাখ্যা ইংরাজী, লাটিন ও আরবী ভাষায় সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব, ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে। বাঙ্গলা, ইংরাজী ও সংস্কৃত ভাষায় অধ্যাপক ও ছাত্র, সাহিত্যিক, সাংবাদিক প্রভৃতির পক্ষে এই গ্রন্থ অত্যাবশ্যক।

**মূল্য দুই টাকা মাত্র**

# উষার আলো

ইহাতে দেশ-বিদেশে প্রচলিত হাস্যরসাত্মক কৌতুহলোদ্দীপক অথচ শিক্ষাপ্রদ শতাধিক ছোট গল্প সন্নিবিষ্ট হইয়াছে। পড়িতে পড়িতে হাসিয়া অস্থির হইতে হইবে। **মূল্য বার আনা মাত্র,**

**নক্ষত্রমালা।** নক্ষত্রের মত উজ্জ্বল, নক্ষত্রের মত চিরনূতন, নক্ষত্রের মত পথপ্রদর্শক শ্রেষ্ঠশ্লোকসমষ্টি, ব্যাখ্যা ও অনুবাদ। মূল্য পাঁচ আনা মাত্র।

**শ্রীবিশ্বনাথ চট্টোপাধ্যায়**

৮১নং নিউ শ্যামবাজার ষ্ট্রীট, কলিকাতা—৪

MANJUSHA ( Sanskrit Monthly Magazine )

*Registered No. C. 3278*



Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

५म-वर्षे September, 1950. १म-संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

If you like the Mañjūṣā, if you want it to go from strength to strength, if you want the reading matter to be considerably increased, do please recommend the Mañjūṣā to your students and friends, do please send in your suggestions for the still further improvement of the Mañjūṣā telling us which features appeal to you and which features you do not like, and lastly do please send your subscription for the new volume at once.

Look out for the special Puja no. of the Mañjūsā which will be despatched to subscribers on the 1st of October. The Nov. no. will be despatched as usual on the 24th of Nov. The special Puja no. (Oct. no.) will contain besides short stories, poems, wit and humour, a splendid long story in Sanskrit by Pandita Kṣama Rao, a note on "Bhrātṛvya" by Prof. Louis Renou of Paris, Gāyatrī of the Parsis with Sanskrit and English translations by Dr. I. J. S. Taraporevala of Bombay and a special article on the

**Anubandhas of Sanskrit Grammar**

BY THE EDITOR.

Office : 81 Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign : Rupees Eight.

# मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदः सभाष्ये मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथञ्चिदपि न प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत।

श्रीविश्वनाथ चट्टोपाध्यायः।
८१ श्यामबाजार ष्ट्रीट्, कलिकाता ४।
81, Shyambazar Street, Calcutta 4.
Phone B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

September, 1950. — १८७२-शकीयाश्विनस्य ५म-वर्षस्य प्रथम-संख्या — Vol. V No. 1

## मङ्गलाचरणम्

श्रीगणेशाय नमः ।

प्रभुं प्राणनाथं विभुं विश्वनाथं
जगन्नाथनाथं सदानन्दभाजम् ।
भवद्भव्यभूतेश्वरं भूतनाथं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ १ ॥
गले रुण्डमालं तनौ सर्पजालं
महाकालकालं गणेशाधिपालम् ।
जटाजूटभङ्गोत्तरङ्गैर्विशालं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ २ ॥
मुदामाकरं मण्डनं मण्डयन्तं
महामण्डलं भस्मभूषाधरं तम् ।
अनादिं ह्यपारं महामोहमारं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ ३ ॥

तटाधोनिवासं महाट्टाट्टहासं
महापापनाशं सदा सुप्रकाशम् ।
गिरीशं गणेशं सुरेशं महेशं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ ४ ॥
गिरीन्द्रात्मजासंगृहीतार्धदेहं
गिरौ संस्थितं सर्वदासन्नगेहम् ।
परब्रह्म ब्रह्मादिभिर्वन्द्यमानं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ ५ ॥
कपालं त्रिशूलं कराभ्यां दधानं
पदाम्भोजनम्राय कामं ददानम् ।
बलीवर्दयानं सुराणां प्रधानं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ ६ ॥
शरच्चन्द्रगात्रं गणानन्दपात्रं
त्रिनेत्रं पवित्रं धनेशस्य मित्रम् ।
अपर्णाकलत्रं चरित्रं विचित्रं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ ७ ॥
हरं सर्पहारं चिताभूविहारं
भवं वेदसारं सदा निर्विकारम् ।
श्मशाने वसन्तं मनोजं दहन्तं
शिवं शङ्करं शम्भुमीशानमीड़े ॥ ८
स्तवं यः प्रभाते नरः शूलपाणेः
पठेत् सर्वदा भर्गभावानुरक्तः ।
स पुत्रं धनं धान्यमित्रं कलत्रं
विचित्रं समासाद्य मोक्षं प्रयाति ॥

---

# नमामि नमामि

[ रवीन्द्रनाथ-ठाकुरस्य ]

नमि नमि चरणे नमि कलुषहरणे ।
सुधारस-निर्झर हे, नमि नमि चरणे ।
नमि चिर-निर्भर हे, मोह-गहन-तरणे ।
नमि चिर-मङ्गल हे, नमि चिर-सम्बल हे ।
उदिल तपन, गेल रात्रि, जागिल अमृत-पथ-यात्री ।
नमि चिर-पथ-सङ्गी, नमि निखिल-शरणे ।
नमि सुखे दुखे भये, नमि जये पराजये ।
असीम विश्व-तले, नमि चितकमलदले ।
निबिड़-निभृत-निलये, नमि जीवने मरणे ।
[ नमामि नमामि चरणयोः, नमामि कलुषहरणाय ।
सुधारस-निर्झर भोः, नमामि नमामि चरणयोः ।
नमामि नित्यनिर्भर भोः, मोहगहनतरणाय ।
नमामि नित्यमङ्गल भोः, नमामि नित्यालम्बन भोः ।
उदितस्तपनो व्यतीता रात्रिः, जागरितोऽमृतपथस्य यात्री ।
नमामि नित्यपथिसङ्गिने, नमामि निखिलशरणाय ।
नमामि सुखे च दुःखे च
भये च, नमामि जये च पराजये च ।
निःसीमब्रह्माण्डतले नमामि चित्तकमलदले ।
निबिड़निभृतनिलये नमामि जीवने च मरणे च ॥]

## आभाणकादि

१ । (व) केह मरे बिल छेचे, केह खाय कइ ।
अन्यः क्लिश्यति पल्वलसलिलं निष्कासयन्, अन्यो भुङ्क्ते कविका-मत्स्यम् ।

( व ) केह शसा खाय, केह मशा मारे ।
कोऽपि त्रपुषं भक्षयति, कोऽपि मशकं मारयति ।

२। "जानामि सीता जनकप्रसूता
जानामि रामो मधुसूदनश्च ।
अहञ्च जानामि नरस्य वध्य-
स्तथापि सीतां न परित्यजामि ॥"

३। "Invention is exhausted, reason is fatigued, experience has given judgment, but obstinacy is not yet conquered."

उद्भावनी शक्तिः ( पुनः पुनरुपयोगात् ) क्षयमुपयाता, विचार-शक्तिश्च ( पुनः पुन र्व्याप्रियमाणा ) श्रान्तिमुपगता, भूयोदर्शनेन स्वसिद्धान्तः प्रकटीकृतः, दुराग्रहग्रहिलत्वं पुनरद्यापि न विजितम् ।

४। One thing thinketh the bear and another he that leadeth him.

One thing thinketh the horse, and another he that rides him.

अन्यच्चिन्तयति भल्लूकः, अन्यच्च यस्तं ( रज्ज्वा बद्ध्वा ) चालयति ।

अन्यच्चिन्तयति घोटकः, अन्यच्च यस्तमारोहति ।

५। Strike while the iron is hot.

(ला) Dum (as long as) calidum (hot) fuerit (will be) debetur (one should) cudere ( beat, strike ) ferrum (iron.).

(ला) Tundatur (to be beaten) ferrum (iron), dum (as long as) novus (new) ignis ( fire) inest (is in it).

( फ ) Il faut battre le fer, pendent qu'il est chaud.

(श) Man muss das Eisen schmieden, so lange es warm ist.

ताडयेस्तावदेवायो यावदुष्णं समस्ति तत्।

---

## अपूर्वा युक्तिः

धूमशकटः प्रचलति। नृपेन्द्रनाथः पुरस्तादुपविष्टस्य यात्रिकस्याभिमुखे प्रह्वीभूयापृच्छत्, वर्तते वा भवतः सकाशे दीपशलाका? इति। "बाढं वर्तते, धूमपानवर्तिका पुनर्मत्सविधे नास्ति" इति तदात्व एवोत्तरमासीत्। "तर्हि को वार्थस्तव दीपशलाकया" इति मधुरमधुरमवदन्नृपेन्द्रमहोदयः।

## साहित्यस्य साम्राज्यम्

सेन-परिवारे साहित्यस्य साम्राज्यं सन्दृश्यते। दुहितृद्वितयं विरचयति काव्यं यत् कोऽपि न मुद्रापयिष्यति, पुत्राश्च प्रथ्नन्ति नाटकानि यानि कोऽपि नाभिनेष्यति, जननी च सन्दृभ्नात्याख्यानानि यानि कोऽपि न पठिष्यति।

जनकस्तावत् किं विलिखति?

स खलु विलिखत्यर्थपत्राणि (cheques) येषां परिवर्तेन कोऽप्यर्थं न प्रदास्यति।

## अहो कलिकालः

गृहिणी। सरले, न खल्वहं संलापप्रकोष्ठं प्रवेष्टुं प्रभवामि।

दासी। नूनं जानाम्येवाहम्। न खलु कथमपि भवती प्रभविष्यति। कुञ्चिका हि मम वाससि बद्धा वर्तते।

गृहिणी। अविलम्बितमेव द्वारमुद्घाटय।

दासी। द्वारमुद्घाटयेयं चेत्, अपि भवत्यभ्यन्तरं प्रवेक्ष्यति?

गृहिणी। अवश्यमेव प्रवेक्ष्यामि।

दासी। तर्हि कुञ्चिकां न लप्स्यसे।

गृहिणी। इदानीमेव द्वारमुद्घाटय। को वा तवाभिप्रायः?

दासी। नूनं भवत्या एवादेशेनैतत् सञ्जातम्। ह्यो भवत्योक्तम्—यथा प्रातरधस्तलमागत्य गृहोपस्करेषु धूलिराशिं न पश्येयं तथा कर्तव्यमिति। अत एव मया कुञ्चिकाञ्चलप्रान्ते बद्धोक्तं च—एवञ्चेत् सा नैव द्रक्ष्यतीति।

---

## व्याकरण-विमर्शः।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ५ )

परःशतादयः शब्दा अन्तरान्तरोपलभ्यन्ते शास्त्रेषु काव्येषु च, सम्मताश्चामी अभिधानकोषकाराणाममरसिंहादीनाम्, परमेतेषामनुव्याख्यानार्थं पाणिन्यादिभिर्मुनिप्रवरैर्लेशतोऽपि प्रयासो नास्थितः। महाभाष्ये "नाज्झलौ" [ १।१।१० ] इति सूत्रव्याख्यायां परश्शतशब्दस्य द्विशकारत्वं त्रिशकारत्वं च प्रसङ्गक्रमेण समर्थितम्, परं सकार एव कुतः समागत इति न विवृतम्। अर्वाचीनव्याख्याकृद्भिः "पारस्करप्रभृतीनि च संज्ञायाम्" [ ६।१।१५७ ] इति सूत्रेणात्र सुडागमः समर्थ्यते, भाष्यकाशिकादिषु पुनः प्राचीनग्रन्थेषु पारस्करादिगणे परःशतादयो नोपलभ्यन्ते। यद्यपि भाष्यकृद्भिरुक्तम् "अविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्यः" इति, काशिकाकारेण च समर्थितम्— "पारस्करादिराकृतिगणः। अविहितलक्षणः सुट् पारस्करादिषु द्रष्टव्यः" इति, तथापि लोके

वेदे च प्रथितस्य परःशतशब्दस्य लेशतोऽपि समुल्लेखो न विहितः अत एव पारस्करादिगणे परःशतादीनां पाठः प्राचीनानां न सम्मत इति प्रतिभाति। 'परोक्षे लिट्' [ ३।२।११५ ] इति सूत्रस्थं 'परोक्षे'-पदं प्रकारत्रयेण व्याचक्षाणोऽपि श्लोकवार्त्तिककारः* तदनन्तरवर्त्ती च भाष्यकारः पारस्करादीनीति सूत्रं नोपासितवानित्यपि न विस्मरणीयम्। अत एवात्र व्याख्यानान्तरं मृग्यम्। स च व्याख्यानप्रकारः प्रबन्धेऽस्मिन् प्रतन्यते, प्रथमतः पुनः संस्कृत-व्याकरणादिषूपलभ्यमानानि मतान्युपन्यस्यन्ते।

तत्र "नाज्झलौ" [ १।१।१० ] इति सूत्रगतां "तत्र सवर्णलोपे दोषो भवति। परश्शतानि कार्याणि। 'झरो झरि सवर्णे" [८।४।६५] इति लोपो न प्राप्नोति" इति महाभाष्यपङ्क्तिं व्याचक्षाणेन कैयटेनोक्तम्—"परःशतानीति। शतात् पराणि शताधिकानीत्यर्थः। "कर्तृकरणे कृता बहुलम्" [ २।१।३२ ] इति बहुलवचनेन समासः। पारस्करादित्वात् सुडागमः। सकारस्य श्चुत्वम्। "अनचि च" [ ८।४।४७ ] इति द्विर्वचनम्। "झरो झरि" [ ८।४।६५ ] इति लोपाप्रसङ्गात् त्रिशकारश्रवणप्रसङ्गः। "शरोऽचि" [८।४।४९] "अनचि च" [८।४।४७] इत्यत्र तिवकारेण शकारो न गृह्यते, अनेन सवर्णत्व-निषेधात् इत्यस्ति शकारस्य द्विर्वचनम्। इति।

अत्रेदमवधेयम्। शतपथतैत्तिरीयादिब्राह्मणगतेषु परःशतादि-शब्देष्वैकस्वर्यस्य जाज्वल्यमानत्वात्, अन्तिमपदगतविभक्तीनां यथेच्छं परिवर्त्तनेऽपि पूर्वपदे परा-रूपस्यैव नियतत्वात् समासोऽत्रा-पह्नोतुं न शक्यते, समासविधायकं सूत्रं तु मृग्यमाणमपि न लभ्यते। अत एवात्राघटनसङ्घटनपटिष्ठो बहुलशब्दोऽन्वेषणीयः।

---

* परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम्।
उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात्॥

अन्विष्यमाणश्चायं शब्दः "कर्तृकरणे कृता बहुलम्" [२।१।३२] इति सूत्रे नयनसरणिमुपारूढः। अत एव कैयटेनात्र समासार्थं तदेव सूत्रं शरणीकृतम्। परं तस्य सूत्रस्य कृत्प्रत्ययान्तेन सह तृतीयासमासविधायकत्वात्, अत्र च कृतस्तृतीयायाश्चोभयोरेवानुपलम्भात्, नागेशभट्टेन "मयूरव्यंसकादित्वात् [२।१।७२] सुप् सुपा [२।१।४] इति वा समास इति तूचितम्" इत्युक्तम्। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्य इति जयादित्यवचनात् मयूरव्यंसकादित्वात् समासोऽभ्युपगन्तव्यः; असमानाधिकरणे मयूरव्यंसकादित्वं न कल्पनीयमित्यभिमानश्चेत् सामान्यतः "सह सुपा" इत्यस्य योगस्य विभागलभ्येन "सुप् सुपा" इत्यनेन समासं को वा निवारयेत्। ( क्रमशः )

---

## निष्कृतिः।

[ शरच्चन्द्र-चट्टोपाध्यायः ]

( ६ )

मणिः प्रथमतो विस्मयभरेण सर्वथा विमूढः सञ्जातः। स खलु चिकित्सामहाविद्यालये समुन्नतायां श्रेण्यामधीते, वयसा च कनीयोभ्रातृभ्यो बाहुल्येन ज्यायान्। ते हि ज्येष्ठभ्रातुः पुरतोऽवस्थाय चक्षुषी उन्नमय्य वचनमुच्चारयितुं न प्रभवन्ति। गृहेऽस्मिन् सर्वदैवैतदेव तेन दृष्टम्। कोऽपीदृशानकथ्यानश्राव्यान् गाल्यादीनुच्चारयेदिति स्वप्नेऽपि तेन सम्भावयितुं न शक्यमासीत्। व्यतिकरेणानेन तस्य हिताहितज्ञानं तिरोहितम्। अतुलं स्कन्धे गृहीत्वा प्रसभं तं कुट्टिमे विनिक्षिप्य पुनः पुनः पदाघातमाहत्य दूराद्दूरान्तरं नीत्वान्तत उपरिष्टात् प्राङ्गणोपरि न्यपातयत्। कानाइ-विपिन-

पटोलप्रभृतयो बालका बालिकाश्च तारस्वरेणारटितवन्तः। मणीन्द्रस्य जननी सिद्धेश्वरी प्रातराह्निकोपासनं परित्यज्य द्रुतमागतवती, मध्यमवधू रहसि द्वित्रान् मोदकान् वदनकुहरे निक्षिप्य सलिलं पातुमुद्यतासीत्, कोलाहलमाकर्ण्य वहिरागत्य सर्वथा सा नीलवर्णा सञ्जाता। वदनान्तर्गतं मोदकं दूरतो निक्षिप्य मृताक्रन्दमाक्रन्दन्त्यसौ झम्पनेन पुत्रोपरि निपतिता। सर्वेषां समवायेन तथाविधः कलकलः प्रादुर्भूतो येन गृहस्वामिनः स्वं स्वं कर्म परित्यज्य द्रुतं तत्रैवोपतस्थिरे। शैलजा महानसान्मुखं निर्गमय्यावदत्, मणीन्द्र, त्वं बहिर्गच्छेति। इत्युक्त्वा सा पुनरपि स्वकर्मणि मनो निदधे। मणिस्तूष्णीमपासरत्। तस्य पिता मध्यमवध्वा उन्मत्तवृत्तिं संप्रेक्ष्य लज्जया बहिः प्रतस्थे।

कथञ्चित् प्रशान्ते चास्मिन् महामारीव्यापारे हरिशः पुत्रं पृष्टवान्। अतुलश्च फूत्कुर्वन् कनिष्ठखुल्लमातरि सर्वं दोषं समारोप्यावदत्, सैवार्यं मम प्रहारे प्रवर्तितवतीति। हरिशस्तारस्वरेणावदत कनिष्ठवधूमातः, त्वं यत् मणिं हत्याकर्मणि प्रवर्तितवती, कथं तदिति श्रोतुमिच्छामि।

नीला महानसाभ्यन्तरात् खुल्लमातुः पक्षतः प्रत्युत्तरितवती, मध्यमार्योऽनाश्रव आसीत्, ज्येष्ठार्याय च गालिं दत्तवानिति।

नयनतारा पुत्रस्य पक्षमवलम्ब्यावदत्, तर्ह्यहमपि वदामि मध्यमवधु, त्वदीयादेशेन तं निघ्नन्नासीदिति प्राणान् विजहदसौ गालिं दत्तवान्, अन्यथा मदीयोऽतुलः कदापि गालिदायी न भवति।

कथमपि न दद्यादिति तां समर्थ्य हरिशः क्रुद्धतरस्वरेण ज्ञातुमैच्छत् —तव खुल्लपितृव्यपत्नीं पृच्छ, नीले, का सा यत् अतुलं प्रहरणायादिशति। यदासौ तस्यानाश्रवः सञ्जातस्तदा किमित्यस्माकं पुरतो

नाभियुक्तः। विद्यमानेष्वस्मासु किमिति सा तस्य शासनविधावात्मानं नियोजितवतीति।

नीला त्रिषु प्रश्नेष्वेकस्याप्युत्तरं न प्रत्यपद्यत। इयन्तं कालं सिद्धेश्वर्यलिन्दस्य कोणेऽवसन्नेव तूष्णीं निषण्णासीत्। तस्या रुग्णशरीरे समुत्तेजनमिदमतिमात्रं सञ्जातम्। एकतस्तावद् गृहेऽस्मिन् सा खलु पुत्रादीनां लालनपालनं वर्जयित्वा विषयान्तरमधिकृत्य विना कारणविशेषं किमपि वक्तुं नैच्छत्। तत्र च हेतुरयमेव तस्या हि मनसि प्रत्यय आसीद् यत् परमेश्वरेण गृहमिदमधिकृत्य न सुविचारो विहितः। तां ज्येष्ठवधूं विधाय गृहिणीपदे चाधिष्ठाप्याप्यसौ यथोपयुक्तं बुद्धिवैभवं न दत्तवान्, अथच शैलजां सर्वकनिष्ठां कनिष्ठवधूं च विधाय तस्यै राशिशः बुद्धिवैभवं प्रददाविति। आयव्ययगणनायां पत्रादिलेखने वार्तालापादिव्यापारे रोगशोकयोः सर्वेषां योगक्षेमवहने सर्वेषां शासनविधौ पाकपरिवेषणादिव्यापारे वेषभूषासज्जादिकर्मणि सा किल सर्वथाऽद्वितीया। सा खलु पुनः पुनरवदत् मम शैलजा चेत् पुमानभविष्यत्, सा किलेयता कालेन प्राड्विवाकपदमलमकरिष्यत् इति। तामेव शैलजां प्रति यदा मध्यमगृहस्वामी कटूक्तीर्ववर्षन्नासीत्, मन्ये तदा परमेश्वरस्तस्या मनसि गृहिण्याः कर्तव्यताबुद्धिं प्रवेशितवती। सा खलु कथञ्चिद्रुक्षस्वरेणावदत्, "भवतु, मध्यमभर्तृदारक, सैव चेद् वस्तुस्थितिस्तर्हि त्वमेव वा किमित्यस्माकं पुरतोऽभियोगमनारोप्य स्वयमेव शासितुं प्रवृत्तोऽसि? माता (श्वश्रूः) जीविता, अहमपि जीविता, कन्यास्नुषयोः शासनमपेक्ष्यते चेत् वयमेव कुर्मः। त्वं तावत् पुरुषस्तत्रापि भ्रातृश्वशुरः—शान्तं पापम्—बहिरेव गच्छ। जनाश्चेच्छृणुयुः किं वा वदेयुः" इति।

हरिशो जातव्रीडोऽवदत्, त्वञ्चेत् सर्वत्र दृष्टिमरक्षिष्यः, का

वा चिन्ता, वधूमातः। किं तर्ह्यन्योऽपरं निहन्तुं प्राभविष्यत्। इत्युक्त्वा यावदसौ बहिर्गन्तुं प्रवृत्तस्तावत्तदीया पत्नी तत्र प्रत्यूहमाचरन्त्यवदत्, भवतु। सम्यक् तावत्। अत्रावस्थाय दृश्यतां कथं वात्रभवतो कन्यास्नुषयोः शासनं विदध्यादिति।

हरिशस्तु वाक्यस्यास्यादत्त्वैवोत्तरं बहिर्निर्जगाम।

( क्रमशः )

---

# रथ-यात्रा

[ श्रीगोपीचन्द्र-सांख्यतीर्थः ]

"रथे च वामनं दृष्ट्वा पुनर्ज्जन्म न विद्यते" इत्यत्र चकारः समुच्चयार्थकः। समुच्चयो हि बहुविधः।

न केवलं सर्व्वव्यापकं परमात्मानं सर्व्वत्र रथे च स्वशरीरे दृष्ट्वा इत्येकः। न केवलं विभुं विष्णुं वामनञ्चेति द्वितीयः। न केवलं शब्दादिना ज्ञात्वा दृष्ट्वा चेति तृतीयः। नानाकर्म्मादृष्टमलिनं जीवरूपं जगन्नाथं,—सहस्रारावस्थितं निर्दोषविशदं परमात्मानं बलभद्रम्,—मूलाधारादिसहस्रदलपर्य्यन्तं यातायातकर्त्रीं नाड़ीद्वयमध्यस्थितां विद्युद्रूपां सुभद्राम् दृष्ट्वेति विभावनीयम्।

वामनं—महाविभुमपि जीवरूपेणाव्यापकम्। पाणिपादादिसर्व्वेन्द्रियरहितमपि तत्समष्टिसहितं सप्तदशात्मकलिङ्गशरीरकं जीवरूपमिति यावत्। अत एव स्थूलायां तन्मूर्त्तौ पाणिपादघ्राणाक्षि-प्रभृतिकं न सम्यक् सुन्दरतरम्, परन्तु किञ्चिद् व्यक्ताव्यक्तं विकृतमेव।

जीवः सुखदुःखादिमलिनः निकृष्ट इति सर्व्ववामो जगन्नाथः। कुण्डलिनीशक्तिः मूलाधारादि-पथावलम्बिनी नतु सुखदुःख-

युक्ता इति जीवदक्षिणे सुभद्रा। सहस्रदलकमलावस्थितसर्व-दोषासङ्गी परमात्मा—सर्वदक्षिणे सर्वमूलकारणं सर्वश्रेष्ठो ज्येष्ठश्च बलरामो वर्तते। जीवानां जीवरूपे जगन्नाथे आग्रहातिशयः स्वसाम्यात्, अनतिचिरमधुरावतारश्रीकृष्णरूपजगन्नाथस्य मनोहर-लीलाविलासबहुलभावभावनाजनितसंस्कारविशेषाच्च।

परब्रह्मात्मकबलरामवामाङ्गावस्थितमायाकुण्डलिनीस्वरूपिणी सुभद्रा। मध्यनाड़ीपथचरी कुण्डलिनी सुभद्रा मध्यस्था।

सर्वेषामिन्द्रियाणां कारण-तत्कारणादि-परम्परयाऽव्यक्तेन्द्रिय-युक्तत्वं प्रदर्शितम्, यथाङ्कुरादिविकृतवृक्षादिः। अतः सर्वेषां देवानां जीवाभिन्नानां रथयात्रा शास्त्रसिद्धा।

अपार-संसार-पारावारतीर-स्थिरमन्दिरोदरनिवासी जीवनिभो वामनः लक्ष-लक्ष-जाति-योनिजनि-जनित-खाद्याचार-विचार-विच्युतो भवतीति ब्रह्मरूपव्यवस्था। नानाप्रकारकर्मकलापानुरूप-नवकलेवरधारणं काले काले देहाद्देहान्तरं देशाद्देशान्तरं च शरीररथेन द्वितीयात एकादशीं यावद्दशाहाभ्यन्तरे पुनर्देहान्तर-देशान्तरगतिरिति स्पष्टम्। प्रायशः सर्वसादृश्यदृश्यं जीव-वामनयोरवश्यमिव लक्ष्यते इति द्वितीयायामेव रथयात्रा युक्ता। स्थूलबुद्धीनां स्थूलभाव-स्थूलदेहता स्थूलविचार-व्यवहाराचारा-दयश्च ध्रुवमेव विधिबोधिता भवन्ति। यथाहि स्थूलाक्षर-शिक्षाचार-व्यवहारादिभी रूपावयवादिविहीनशब्दवर्णादयो बोध्यन्ते इति तादृश्युपासना युक्ता।

हृदयजलजमध्ये वामनो जीवरूपो
दशशतदलपद्मे लाङ्गलास्त्रः परात्मा।
सकल-कमलसर्पिण्यस्ति माया सुभद्रा
भवजलनिधितीरे देहरूपे रथे च॥

"रथे नारायणं दृष्ट्वा" "जगन्नाथं रथे दृष्ट्वा" इत्यनादृत्य एवं विष्णु-हरि-मधुसूदनादि-प्रसिद्धांस्तत्पर्य्यायशब्दानदत्वा वामन-पदप्रदानमत्यन्तगूढ़ैश्वर्यतात्पर्य्यार्थकमिति बोध्यते। अङ्गुष्ठपरिमाणत्वकथनादपि जीवस्य वामनत्वमुचितमिति सुस्पष्टम्।

---

# गेटे-कवि-सुभाषितानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ६ )

किपलिं-महोदयेनोक्तम्—

What should they know of England
Who only England know ?

किं वा जानीयुस्त आङ्लभूमेर्ये खल्वाङ्लभूमिमेव केवलां विजानन्ति इति। एवं गेटे-महोदयेनापि भाषामधिकृत्योक्तम्—

Wer fremde Sprachen nicht kennt, weiss nichts von seiner eigenen.

यो विदेशीयां भाषां न जानाति स स्वामपि भाषां लेशतोऽपि न जानाति।

शास्त्रकारैः पुनः पुनः समुद्घोषितम्—

आहारनिद्राभयादिकं नराणां पशुभिः समानम्। "धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः" इति। गेटे महोदयेनाप्युक्तम्—

"Edel sei der Mensch, hilfreich und gut !
Denn das allein unterscheidet ihn
Von allen Wesen, die wir kennen."
'Noble be man, friendly and good,

For goodness alone stamps him diverse
From all the creatures, that walk the earth.'

साधुः समुन्नतो मैत्रो नरो भवतु सर्वदा।
साधुत्वं हि मनुष्याणां भूतान्तराद्विशेषकम् ॥

अवितथं खलूक्तं कविप्रवरेण—'दारिद्र्यदोषो गुणराशिनाशी' इति। चरकसंहितायामप्युक्तं—नातः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुरिति। गेटे-महोदयेनाप्युक्तम्—

"Armut ist die grösste Plage,
Reichtum ist das höchste Gut."
Poverty's the greatest curse,
Riches are the highest good.

एतत् तावत् पापात् पापीयो यद्दारिद्र्यम्, विभव एवेह परमं श्रेयः।

यद्यपि दारिद्र्यस्य गुणा अपि भूयो भूयः शास्त्रेषु परिकीर्तितास्तथापि संसारिणां दारिद्र्यं दुःखाकरमित्यत्र नास्ति संशयः। अत एव मृच्छकटिके दारिद्र्यं षष्ठमहापातकत्वेन परिगणितम्—

दारिद्र्यात् पुरुषस्य बान्धवजनो वाक्ये न सन्तिष्ठते
सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
पापं कर्म च यत् परैरपि कृतं तत्तस्य सम्भाव्यते ॥
सङ्गं नैव हि कश्चिदस्य कुरुते सम्भाषते नादरात्
सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ इति।

( क्रमशः )

# रसमञ्जरी।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अध्यापकः। अभिज्ञानशकुन्तलं पाठयन् वाचयति—

त्वमर्हतां प्राग्रसरः स्मृतोऽसि नः
शकुन्तला मूर्तिमती च सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः॥ [ ५।१५ ]

( छात्रं पृच्छति ) वत्स भवेश, वधूवरमित्यत्र कथमेकत्वं नपुंसकत्वञ्च ?

भवेशः। आर्य, न खलु विभावयामि। कथयितुमर्हति भवान्।

अध्यापकः। वत्स, अपि न स्मर्यते पाणिनीया परिभाषा—सर्वो द्वन्द्वो विभाषैकवद्भवतीति। अत एव कविकुलचूड़ामणिना रघुवंशे "वधूवरौ सङ्गमयाञ्चकार" [ ७।२० ] इत्यत्र पुंलिङ्गद्विवचनं प्रयुक्तम्, कुमारसम्भवे "वधूवरं पुष्यति कान्तिमग्र्याम्" [ ७।७७ ] इत्यत्र च नपुंसकैकत्वं प्रयुक्तम्।

महेशः। आर्य, एषा तावदगतिका गतिर्यदस्याः परिभाषायाः समाश्रयणम्। यथाहं पश्यामि तथा "येषाञ्च विरोधः शाश्वतिकः" [ २।४।९ ] इति सूत्रेणात्र समाहारः।

---

* तत्रार्चितो भोजपतेः पुरोधा हुत्वाग्निमाज्यादिभिरग्निकल्पः।
तमेव चाधाय विवाहसाक्ष्ये वधूवरौ सङ्गमयाञ्चकार॥

† प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम्।
सान्निध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य॥

अध्यापकः। वत्स, विस्पष्टतरमुच्यताम्।

महेशः। विदितमेवैतत् सर्वेषां यदेकमर्धं वधूरपरञ्च वर इति। वेदेऽपि च समाम्नातम्—अर्धं वा एष पुरुषस्य यत् पत्नीति। प्रतिमानाटकेऽपि सीतां प्रति रामस्य वचनं दृश्यते—शरीरार्धेन मे पूर्वमाबद्धा हि यदा त्वया [१।१०] इति। आङ्ग्लैरप्युच्यते—better half ( उत्तमार्धं ) खल्वेषा पुरुषस्य यत् पत्नीति। वामदक्षिणयोरुत्तमाधमयोश्च विरोधो यथा शाश्वतिकस्तथा वधूवरयोरपि। अत एव होराशास्त्रे विरोधाख्यं सप्तमस्थानं पतिस्थानं वा पत्नीस्थानं वेति व्यपदिश्यते। अत एव च कथाशिल्पिनां धुरि कीर्तनीयेन चार्लस् डिकेन्स् ( Charles Dickens ) महोदयेन आओयार मिउचुयाल् फ्रेण्ड ( Our Mutual Friend ) ग्रन्थे वर्णितम्—"Her lord being cherubic she was necessarily majestic according to the principle which matrimonially unites contrasts" ( Book I, Chap. 4 ) इति। अस्यार्थः—तस्या नाथो देवबालसुलभसारल्यादिमण्डित आसीदिति कृत्वा सा नियमेन नृपतिजनोचिततेजःसम्पन्नासीत्। विरोधिनावेव वैवाहिकेन सम्बन्धेन संयुज्येते इति हि न्याय इति।

तत्रैव रोक्स्मिथ्-नामकं नायकमधिकृत्य वेला-उइल्फार्-समाख्यया नायिकयोक्तम्—Pa, mark my words! Between Mr. Rokesmith and me, there is a natural antipathy and a deep distrust; and something will come of it इति। अस्यार्थः—तात, अवधेहि मम वचनेषु। रोक्स्मिथ्महोदयस्य मम च मध्ये सहजो विरोधो गभीरश्चाविश्वासो वर्तते। एतस्य च किमपि फलं स्यात् इति। एतस्य फलेन च तयोः परिणयः सञ्जात इति विज्ञायत एव तद्ग्रन्थवाचकैः।

घुणाक्षरन्यायेन कदाचिद्वधूवरयोस्तुल्यगुणत्वं तुल्यशीलत्वं च सन्दृश्यते। अत एवात्र "चिरस्य वाच्यं न गतः प्रजापति"-रित्युक्तम्। अत एव प्रतिमानाटके समुद्घोषितम्—अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्त इति।

आङ्ग्लानामप्याभाणकः – Like to like is no relish समेन समसंयोगे सुस्वादो नैव जायते इति।

गेटे-महोदयेनाप्युक्तम्—

"Warum tanzen Bübchen mit Mädchen so gern?
Ungleich dem Gleichen bleibet nicht fern."
'Lads dance with lasses—why? 'tis just because
Not like to like, but like to unlike draws.'

तरुणस्तरुणी चात्र कथं प्रनृत्यतो रसात्।
विषमं हि समादत्र न दूरमवतिष्ठते॥

किञ्च—

"Wirst du deines gleichen kennen lernen,
So wirst du dich gleich wieder entfernen."
'Find one quite like yourself, and you
Will run, abhorrent from the view.'

आत्मनोऽत्यन्तसदृशं कञ्चिच्चे दुपलप्स्यसे।
ततोऽवज्ञाभरेण त्वं दूराद्दूरं गमिष्यसि॥ इति। (क्रमशः)

## शिवप्रपत्तिः

[ श्रीपद्मनाभ-भट्टः ]

निरालम्बं शम्भो गणय शिव मां प्रापय निजं
करं त्वं यत्पार्श्वाद् -बलमधिगतं मामकमिदम्।
निराशोऽप्याशासे शिवमशिवदुष्कृत्यसरणेः
करालम्बाश्वासं दिश गिरिश जीवामि कलय॥ ६॥

सर्वाभीष्टफलप्रदातरधिकं त्वामेव काङ्क्षे (?)यतः
सर्वेशोऽपि निराश्रयस्य पतितस्याधारभूतो भवान् ।
शर्वार्तान् ग्लपितांश्च मोदयसि रुग्ग्रस्तानरोगांस्तथा
सर्वोत्कर्षयुतान् करोष्यपि नयस्यन्धान् स्वधाम प्रभो ॥७॥
तावकमभिधानं धर्म्यमव्याजरम्यं
पावनमथ निन्द्याधर्मरूपश्च शर्व ।
जीवनसुखलोलोऽसत्यपूर्णोऽस्मि पापी
पावनसुखरूपी त्वं दयासत्यवार्धिः ॥ ८ ॥
कारुण्यनीरनिधिरूपभवत्प्रसादात्
पारं दुरन्तदुरितस्य गतो यथा स्याम् ।
तारेशभूषण तथा कुरु मेऽन्तरङ्गं
कारुण्यपूर विमलीकृतचेष्टितं स्यात् ॥ ९ ॥
शिव जीवितनिर्झरोदयस्त्वम्
भवतृष्णार्दितमानसस्य तृप्त्यै ।
भवतान्मम मानसात्समुत्थो
भव विश्वैकविभुः सदातन त्वम् ॥ १० ॥

---

## प्रत्यवायः

परीक्षा प्रचलति। अध्यापकश्छात्रान् प्रश्नान् पृच्छति। प्रथमतस्तावत् पाप-प्रत्यवाययोरर्थगतो विशेषः प्रदर्शितः परीक्षकेण। स च यथा, अनुष्ठानजं पापम्, अननुष्ठानजः प्रत्यवायः। ततश्च प्रत्यवायशब्दस्य कोऽर्थ इति पृष्टं तेन। क्षणं तूष्णीमवस्थाय तरुणेन केनचिदुक्तम्—यानि खलु पापानि अस्माभिरवश्यमेवानुष्ठेयानि,न चानुष्ठितानि, तान्येव प्रत्यवायशब्देनोच्यन्ते ।

---

# सूनृता

[ Prof. Louis Renou ]

[ सूनृत-शब्दस्य सूनृता-शब्दस्य च विविधानि निर्वचनानि सन्दृश्यन्ते। (१) सुष्ठु ऊनयति प्रेरयति सून्। सून् च तद्दतञ्च सूनृतम्। (२) सुष्ठु ऊन्यते सून् सूंश्च तद्दतञ्च सूनृतम्। क्षीर-स्वामी। (३) सुष्ठु नृत्यन्त्यनेन। घञर्थे कः ३।३।५८।१। यद्वा "हलश्च" [ ३।३।१२७ ] इति कः। संज्ञापूर्वकत्वाद् गुणाभावः। अन्येषामपि दृश्यते इति दीर्घः। (४) मूलविभुजादित्वात् क इति मुकुटेनोक्तम्। किं वा सूनृता-विषये भवतामभिमतमित्यस्माभिः पृष्टेन वैयाकरणप्रवरेण रेणुमहोदयेन लिखितं पत्रमत्र मुद्र्यते। म०स०]

सूनृता-विषये ओल्डेनबर्गस्येव [ Z. D. M.G. L. p. 433 ] ममापि मतम्—शब्दोऽयं "सूनर-" ( आवेस्तायां हुनर, हुनरेतात् च )-शब्दात् पृथक्त्वेन गणयितुं न युज्यते। तथाह्यस्य प्राथमिकोऽर्थः—सूनुः ( =सुनरस्य ) भावः इति। प्रवृत्तिनिमित्तञ्च, मनस उदात्तत्वं ( nobility of sentiments ), वेदेषु वदान्यता दानशक्तिरिति यावत्। अस्माच्च भावार्थक-सूनृता-शब्दात् सूनृत इत्यकारान्त-विशेषण-शब्दस्य समुद्भवः सञ्जातः। तस्य चार्थः—उदात्तः, वदान्य इति। अर्थस्य सङ्कोचेनान्तरान्तरा सूनृताशब्दो दक्षिणार्थे प्रयुज्यते स्म, विशेषतश्चोषःसूक्तेषु। तथाहि सरस्वती "चोदयित्री सूनृतानाम्" [ ऋ० सं० १।३।११ ] इति वर्णिता। उषास्तावत् "सूनृतावती" अथच "चोदयित्री मघोनः" [ ऋ० सं० ७।८१।६ ] अथच सूनरी [ ऋ० सं० १।४८।५ ]।

[ सूनृता-शब्दस्य मध्योदात्तत्वमपि तल्-प्रत्ययं सूचयति। तस्य लित्वात् "लिति" ६।१।१९३ सूत्रेण प्रत्ययात् पूर्वस्योदात्तत्वं

सिध्यति। अत एव रेणुमहोदयस्य मतमेव समीचीनतया प्रतिभाति। अर्वाचीनैर्वैयाकरणादिभिश्चिन्तितम्—सुशब्दः शोभनार्थकः, ऋत-शब्दश्च सत्यार्थकः। अनयोः समासेन सूनृतशब्दस्योद्भवः। अन्येषामपि दृश्यते इति दीर्घत्वम्, अनृतशब्दसादृश्येन नकारागमः इति। एवञ्च सूनृतशब्दस्य प्रियमथच सत्यमित्यर्थः सम्पन्नः। मञ्जूषा-सम्पादकः। ]

---

## कथाकोषः।

[ श्रीपञ्चानन-काव्यतीर्थ-ज्योतिर्विनोदः ]

[ शुभम् भवतु। समाससंहितागहना देवभाषा जनैः दुरधिगमा —अत एव साऽऽधुना नवीनानाम् असुखकरी। युगोचितेन पथा तां चालयितुं नो महान् आयासः। ततो वयं लेखयोगहीनां संहितासमासशिथिलां ताम् आधुनिकानां विनोदनाय उपहरामः। एवम् आदिमं सोपानम् आरोहतः तान् परतरसोपानाधिरोहण-कारिणः अवलोकयितुम् अभिलाषिणो भवामः—शनैरेते भाषासानु-मतः शिखरम् एव अधिरोहेयुः कुशलिनो देवभाषाविदोऽपि भवेयुः। तदानीं सफलो न आयासो भवितेति शुभाशा सदैव विराजते नो हृदय इति शम्। ]

### ईशायनम्।

तपनो नियतमुदेति अनुदिनम्—शशधरोऽपि तथैव कौमुदीं विकिरति। तारकागणः यामिनीषु विभाति। पवनो वहति। नदी चलति। पावको दहति। जगतः करणानि सदा साधु विहितानि। कथमेवं जायते? भुवनपतेः परमपितुरादेशेनैव। स एव भगवान् लोकानां नायकः। पालकरूपेण स निखिलं पाति।

धाता सोऽखिलं दधाति। सलिले गलितं लवणमिव स लोकेषु नरनयनयोरगोचरे भवन् चराचरं चालयति। स एव सकलानां कारणानां मूलाधारः करणानामपि साधकः। सतां साधुरसतां भीमः स जीवानामभिलाषं पूरयति। अतीतं नाशयन् अनागतं रचयन् स समयसागरं विदधाति। असीमभवनवासी भावानां धारकः जीवानां जनकः स जनैरनुरागतः पूजनीयः तपसा साधनीयः, सततं वरणीयः। मनुजानां मनांसि स एव लोकातीततेजसा दीपयति। कुमतिं वारयन् स सुमतिं रोपयति। भुवनेशं परमपितरं तं रागतो भूयो भूयो नमामः। नितरां स नो मनःसु कृपया विराजतु।

छाग-सारमेय-कथा।

पुरा वाराणसीविषये महाबलनामा राजा आसीत्। अरसिकोऽसौ कदापि न जहास। एकदा रहसि हसन् स जनैरवलोकितः। ततः कुतूहलिन इमे कारणं वेदितुमीषुः। तेषामनुरोधात् राजमाता नराधिपाय लोकाभिलाषं निवेदितवती नरपतिराह—एकः सारमेयो मुखेन तृणराशिमानयत्, छागोऽपि मांसशकलम्। कारणं वेदितुमना अहं सारमेयो महानसात् पिशितांशं छागः करिशालायाः तृणदलं चोरयामासतुरिति अजानाम्। कदाचित् सारमेयो धृतः सन् सूपकारेणाहतः छागोऽपि गजपालकेन। तदवधि तौ विहितिविनिमय-कौशलेन निजनिजजीवनं यापयामासतुः। पाचको मांसहारिणं छागं करिपालकोऽपि तृणचोरं सारमेयं नाजानीताम्। एतयोरितरजीवयोः कालोचितां मतिमवलोकयतो मे बलवान् हसिताभिलाषः बभूवेति।

आपदि पशूनामपि अनुकूला मतिः जायते।

---

# ऋग्वेदसूक्तानि ।

[ श्रीमता महालिङ्ग-शास्त्रिणा संस्कृते निबद्धानि ]

[ सहृदयाः, चिराय खलु समतीतः स कालो यदा जन्मत एव सिद्धासीद्वैदिकी भारत्यार्याणाम् । अत एव वेदगतानां परमपवित्राणां सूक्तानां रसास्वादनसमुत्सुका आर्यसन्तानाः पदे पदे नवनवानि नामान्याख्यातानि च प्रत्यक्षीकृत्य प्रतिहतोत्साहा भग्नमनोरथाश्च भवन्ति । एतेषामुपकारायाङ्ग्लसंस्कृतगद्यपद्यरचनाकुशलेन विद्वत्परिषदि लब्धप्रतिष्ठेन महाविपश्चिदन्ववायसम्भूतेन श्रीमता महालिङ्गशास्त्रिमहोदयेन सरलया मधुरया प्रसादगुणसमुज्ज्वलया लौकिक्या भाषया केषाञ्चन ऋग्वेदीयसूक्तानां हृदयं विवृतम् । भारतवर्षीयेषु तेषु तेषु विश्वविद्यालयेषु बी. ए. अनार्स परीक्षायां यानि सूक्तानि पाठ्यतया निर्दिष्टानि वर्तन्ते मुग्धानलमहोदयसंगृहीतानां तेषामेव सूक्तानामनुवादो मञ्जूषायामादितः प्रकाश्यते । सम्पादकः]

१ । अग्नि-सूक्तम् ( प्रथम-मण्डले प्रथमम् )

श्लिष्टमृग्वेदसूक्तानामिष्टानां परिवर्तनम् ।
संस्कृतोक्त्या निबध्नामि बुभुत्सुप्रीतिवर्धनम् ॥

यज्ञस्यर्त्विजमग्निं पुरोहितं देवमहमीडे ।
होता यः खलु विदितो धाता सुतमां च रत्नानाम् ॥ १ ॥

महितो महर्षिभिर्यः पूर्वैरुत नूतनैरीड्यः ।
देवः स हव्यवाहो देवानखिलानिहावहतु ॥ २ ॥

श्रियमश्नुवते विपुलां दिने दिने चापि भाग्यपरिपोषम् ।
अग्नेः प्रसादभाजः प्रवीरसन्तान-सद्यशः-श्लाघ्यम् ॥ ३ ॥

अग्ने, यमध्वरं त्वं यज्ञं वा कल्पितोपहारर्द्धिम् ।
पर्येषि विश्वगात्मा स भवति देवैरुपादेयः ॥ ४ ॥

उज्ज्वलयशोविशोभी विबुधप्रज्ञः स सत्यभूर्होता ।
देवैः कृतपरिवारो देवोऽग्निर्नः समभ्येतु ॥ ५ ॥

यद्वितरिष्यसि भद्रं भक्तिप्रह्वाय दाशुषे पूजाम् ।
तद्भवति नित्यमवितथमग्ने, सङ्कल्पतस्तवाङ्गिरसः ॥ ६ ॥
अग्ने, निजप्रजाभिस्तमोऽपहं त्वां दिने दिने प्रणताः ।
ध्यानस्थिरेण मनसा बिभ्राणाः पर्युपास्महे हि वयम् ॥ ७ ॥
धर्मस्य निखिलगोप्तुर्गोप्तारं स्वे च धाम्नि वर्धिष्णुम् ।
गोप्तारमध्वराणां परया विद्योतितं दीप्त्या ॥ ८ ॥
तन्नः पितेव चाग्ने, सुतकल्पानां भवाभिगम्यतमः ।
निकषा चैवास्माकं स्वस्त्यर्थं नित्यमध्वास्स्व ॥ ९ ॥

इत्यग्निसूक्तम्

---

## प्रतरभारतीयकम्बुजदेशस्य राज्ञां शिलालेखेभ्यो मङ्गलाचरणश्लोकाः ।

[ अध्यापक-श्रीसुनीतिकुमार-चट्टोपाध्यायेन संगृहीताः ]

प्रथमभाववर्मणो द्वितीयभाववर्मणो वा

जयतीन्दुरविव्योमवाय्वात्मक्ष्मा[1]जलानलैः ।
तनोति तनुभिः शम्भुर्योऽष्टाभिरखिलं जगत् ॥

प्रथमजयवर्मणः

जयति जगदेकहेतुर्नतजननिःश्रेयसाभ्युदयकारी ।
कामं जगत्सुचरितच्छेदनमिति[2] यः स निदहति ॥

योगवर्मणः ( ८१५-शकाब्दीयस्य )

निष्कलाय स्वभावेन स्वेच्छया धृतमूर्त्तये ।
शिवाय परमेशाय नमोऽस्तु परमात्मने ॥ १ ॥

---

[1]क्ष्मा—पृथिवी । [2]अत्र कर्तरि ल्युट् । अतएव कर्मणी निपातेन उक्तत्वात् 'सुचरितच्छेदन इति' इति पठनीयमिति प्रतिभाति ।

येनैकेनाप्यनेकेषु तिष्ठता युगपत् पृथक्।
आत्माऽपि[1] क्रियते नित्यं तस्मै शूलभृते नमः॥ २॥
ये तु संवर्द्धयिष्यन्ति श्रद्धया परया युताः।
वसन्तु ते शिवपदे यावच्चन्द्रदिवाकरौ ॥ ३ ॥

चतुर्थजयवर्मणः

शिव—(१) नमः शिवाय यज्ज्योतिर्ध्यायः पारेतमो[2] ज्वलत्।
व्योमेव सर्वभूतेषु सत्त्वमर्थेषु सत्स्विव॥
ध्रुव–(२) नमो नम्रनभश्चारिचक्रलग्नाङ्घ्रिरोचिषे।
[1]द्विसप्तजगदालम्बध्रुवायार्धेन्दुधारिणे॥
गङ्गा—(३) जयन्ति गङ्गाजिह्माङ्गास्तरङ्गा हरमूर्धनि।
[2]वदान्योदन्वता दत्ता बालचन्द्रार्बुदा इव॥
विष्णु—(४) विभान्ति बाहवो विष्णोर्मण्डितत्रिजगच्छ्रियः।
सुनया[3] इव चत्वारः स्वमूर्त्यंशा इवोदिताः॥
ब्रह्मा—(५) चतुर्मुखमुखोद्गीर्णवेदध्वानाः पुनन्तु वः।
योगनिद्राया निद्राया द्रोहादिव रिपोर्वधे॥
उमा—(६) [4]नमास्युमां मुखं यस्या वीक्ष्य पूर्णविधुं प्रियम्।
धूर्जटे[र्लज्ज]येवार्धविधुर्विष्टो जटानले॥
भारती—(७) भारती भाति गौराङ्गयष्टिरापाण्डुरस्तनी।
गङ्गेव कञ्ज[6]किञ्जल्कपिण्डरोद्गतसैकता॥

[1]अपिशब्दोऽत्र पूरणैक-प्रयोजनः। [2]परे तमः इति शिलालेखे।
[1]चतुर्दशभुवनानि यथा—भूः भुवः स्वः महः जनः तपः सत्यम् इति सप्त, अतल-वितल-सुतल-रसातल-तलातल-महातल-पातालानीति च सप्त लोकाः। [2]वदन्योदन्वता इति मुद्रितपुस्तके पाठः। [3]सामदानभेददण्डात्मकाश्चत्वारः।
[4]'चतुर्मुखमुखाम्भोजवनहंसवधूर्मम' इति दण्डिनः पद्यं स्मारयति। [5]पराजितस्य लज्जयानलसलिलादिप्रवेशेन प्राणत्यागः प्रसिद्धः। [6]कञ्ज=अम्बुज=पद्म।

कम्बु—(८) कम्बुमीडे समग्रान् यो विधत्ते कम्बुजाधिपान्।
सूर्येन्दुवंशकीर्त्याधः कुर्वन् सृष्टीः प्रजासृजाम्॥
(क्रमशः)

# महाभाष्यम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( ६ )

It will be noticed that Patañjali quotes first from the Atharva Veda, then from the Yajur Veda, then from the Rig Veda and lastly from the Sāma Veda. This would appear at first sight rather unusual. Writers generally give the place of honour to the Rigveda, from the standpoint of the Yājñikas the Yajurveda is the most important of Vedas. Of course if Patañjali had quoted from the Samaveda first we should have thought he was merely following the Bhagavadgītā—वेदानां सामवेदोऽस्मि. Various explanations have been offered of this apparent anomaly. The author of the Chāyā thinks there is no particular reason for the particular order in which the Vedas have been quoted. Verses had to be quoted from the Vedas and Patañjali quotes them without paying any attention to the accepted order of the Vedas. This is known as the maxim of the Aśoka grove. After Rāvaṇa had carried away Sītā he kept her in the Aśoka grove. There was no particular reason why his choice should fall on this particular grove, for there were bowers and arbours of equal splendour and magnificence in abundance. She had to be kept somewhere and why not in the Aśoka grove?

Others think that before the construction of sacrificial Agnikuṇḍas etc. one has to perform "śāntikarman" with the help of the mantras of the Atharvaveda, hence this particular Veda has been mentioned first. Still others maintain that this

merely shows Patañjali's great respect for the Atharvaved which some ancient authorities did not regard as a Veda.

We take the liberty of suggesting three explanations. Th reader will take them for what they are worth. In the firs place, Atharva Veda begins with A, the first letter of th alphabet, then comes Y, then comes Ṛ (which is regarde as R) and lastly S. Secondly, it is the verse from the Athar Veda that contains two Vedic peculiarities, viz. *devīḥ* fo *devyaḥ* and *abhishṭi* for *abhīshṭi* acc. to Sanskrit grammar. N doubt the verse from the RV. also contains *īḷe*, but th mutation of intervocal *ḍ* into *ḷ* is not prescribed by any of th three sages of the Pāṇini school. Then comes the Yajurved because of its great importance in the sacrifice. And sinc most of the Sāmans are taken bodily from the Rigveda, th latter precedes the former. This is the most plausibl explanation*.

We may also invoke the aid of the "sūci-kaṭāha-nyāya" or the maxim of the needle and the pan and say that becaus AV. was not regarded as a canonical text it wa mentioned first and then came the other Vedas in order.

Kumārila Bhaṭṭa says in the Tantra-vārttika:

यदपि च केषां शब्दानामिति प्रश्नानन्तरं 'लौकिकानां वैदिकानां च' इति विवेककथनं तदपि बहूनां तावत् प्रत्यक्षप्रत्यभिज्ञानाल्लोक-वेदयोरभेदे सति स्तोकप्रविभागापेक्षं, नैवेदमत्यन्तभेदाश्रयसदृश-मभिधीयमानं शोभते, न च लौकिकमध्ये गौरश्वः पुरुषो हस्तीत्येव-मादयः सर्वे वेदसाधारणा वेदादेव वोद्धृत्य लोकेन प्रयुक्ता उदा-हर्त्तुं न्याय्याः। य एव हि भाषायामित्येव स्मर्यन्ते, न च क्वचिदपि वेदे दृष्टपूर्वा इत्येवं सम्भावयितुं शक्यन्ते त एवोदाहर्त्तव्याः।

*In the Bhāṣya on i. 3. 2 we find : कश्चित् कञ्चिदाह—अनुवाकं मे भवाननुदिशत्विति। स तस्मा आचष्टे – इषेत्वकमधीष्व। अग्निं नो देवीः मधीष्वेति। because the question of Vedic peculiarities does not arise here. For the normal order, see RV. X. 90. 9.

वैदिकोदाहरणेऽपि लोकप्रसिद्धा एव शमादय उदाहृताः। न च वाक्योदाहरणेन लौकिकेभ्यो भिद्यन्ते, वाक्यानां व्याकरणेनानन्वाख्यानात्। अतश्छान्दसान्येव कानिचित् [1]गृभ्णामि '[2]दत्त्वायाथ' इत्येवमादीन्युदाहर्तुं योग्यानि, न 'शं नो देवीः' इत्येवमादीनि। छान्दसोदाहरणं [3] च कुतः "सिद्धे" "लोकत" इत्यनेन प्रत्यासन्नेनैव व्याहन्येत[4]। यदि च लौकिकानामन्वाख्यानं क्रियेत, ततः सुतरां गाव्यादय एवान्वाख्येयास्तेषां व्यवस्थितं लौकिकत्वं वेदेष्वप्रयोगात्। गवादयः पुनरध्येतृभिर्वेदाद्वेदोद्धृत्योद्धृत्य प्रयुक्ता

---

[1]गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः॥
ऋ० सं० १०।८५।३६

[2] सुमङ्गलीरियं वधूरिमां समेत पश्यत।
सौभाग्यमस्यै दत्तायाथास्तं वि परेतन॥ ऋ० सं० १०।८५।३३
'दत्ताय' 'अर्यः' इति पाठः समीचीनतया प्रतिभाति।
यं स्मा पृच्छन्ति कुह सेति घोरमुतेमाहुर्नैषो अस्तीत्येनम्।
सो अर्यः पुष्टीर्विज इवामिनाति श्रदस्मै धत्त स जनास इन्द्रः॥ २।१२।५

[3]ननु गाव्यादिपदानामपि नियतस्वरत्वादिना छान्दसत्वाद् युक्तोदाहरणता इत्याशङ्क्याह—छान्दसेति। एवमपि सिद्धे शब्दार्थसम्बन्धे इति शास्त्रारम्भवार्त्तिकव्याख्यानावसरे कथं पुनर्ज्ञायते सिद्धे शब्दोऽर्थः सम्बन्धश्चेत्याशङ्कानिराकरणार्थत्वेन लोकत इति वार्त्तिकावयवस्य यद्व्याख्यानं करिष्यते तद्व्याहन्येत स्वरनियमादेर्लोकतः सिद्ध्यभावादित्याशयः।

[4]"दीधीवीटाम्" [ १।१।६ ] इत्येतत्सूत्रदूषणार्थं च "दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च च्छन्दसोऽदीधेददीधयुरिति च गुण दर्शनादप्रतिषेधः" इति वार्त्तिके [१।१।६।१] 'दीधीवेव्यौ छन्दोविषयौ। दृष्टानुविधिश्छन्दसि भवति। तत्र च "होत्राय वृतः कृपयन्नदीधेत्" [ऋ० सं० १०।९८।७] "अदीधयुर्दाशराज्ञे वृतासः" [ अ० सं० ७।३३।५ ] इति गुणस्य दर्शनादनर्थकप्रतिषेधइत्येवं व्याचक्षाणेन भाष्यकृता स्वयमेव वैदिकशब्दलक्षणानर्थक्याभिधानाच्छान्दसोदाहरणं व्याहतम्। न्यायसुधा।

इति शक्यं वक्तुम्[१]। तथाच मनुनाप्युक्तम् [ १।२१ ]—"वेदशब्देभ्य एवादौ पृथक् संस्था विनिर्ममे" इति। दृश्यन्ते चाद्यत्वेऽपि श्रोत्रिया लौकिकेऽप्यर्थे विवक्षिते तद्भाषासमानार्थान् सकलान् मन्त्रानप्युदाहरन्तः किमङ्ग पुनः पादान् पदानि वा। न चाश्रित-प्रतिपदपाठानां वैदिकानां लक्षणेन कार्यम्। न चैषां गुरुमुखात् साधीयो लक्षणमस्ति, "दृष्टानुविधित्वाच्छन्दसः" [ १।१।६१ ] इति स्वयमेव लक्षणस्याम्नानाधीनत्वेन मन्दप्रयोजनत्वमुक्तम्।

यथैव लोकसिद्धत्वात् कृष्यादेर्लक्षणं वृथा।
तथैव वेदसिद्धानां शब्दानां लक्षणं वृथा॥

---

# हओमो यशृत्।

[ I. J. S. Taraporevala ]

[ प्राचीनसंस्कृतभाषया साकमिरानीयभाषाया घनिष्ठं सादृश्यं समुल्लसति। प्रायेण प्राकृतभाषासुलभं वर्णविकारादिकमिरानीय-भाषायामप्युपलभ्यते, परं कानिचिदतिप्राचीनानि रूपाण्यपि सन्दृश्यन्ते। पुरातनेरानीयभाषा च आवेस्ता-प्राचीनेरानीय-भेदेन द्वेधा भिद्यते। आवेस्ताया अपि प्राचीनतमभागो गाथा इत्युच्यते, तत्र च भाषाया प्राचीनतरावस्था विलोक्यते। गाथाश्च ज़रथुश्त्रस्य तुल्यकाला इत्यैतिहासिकानां मतम्। ज़रथुश्त्रस्य कालविषये विप्रतिपद्यन्ते प्रत्नतत्त्वविदः। केषाञ्चिन्मते खृस्तजन्मतः सहस्रात् संवत्सरेभ्यः पूर्वं प्रादुर्भूतोऽयं महात्मा, अपरे तु खृस्तपूर्वं सप्तमशतकमेवास्याविर्भावसमय इत्याशेरते।

भाषाविषये यज्ञादिविषये चावेस्ताया वेदब्राह्मणादिग्रन्थैः संवादः

---

[१] वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः। अनर्थकं व्याकरणम्।

सुप्रथित इत्यस्माभिः प्रतिमासमावेस्तायाः कियांश्चन भागो विद्वत्प्रवरमूर्धन्यस्य धार्मिकशिरोमणेस्तारापुरओयालामहोदयस्य लेखेभ्य उद्धृत्य वाचकमहाभागेभ्य उपहरिष्यते। तत्र प्रथमतः हओमो यश्त् प्रारभ्यते। एतस्य च भाषा गाथातोऽर्वाचीनापि कनीयआवेस्तातः प्राचीना। ]

| | |
|---|---|
| हावनीम्[१] आ रतूम्[१] आ | सवनिम् आ ऋतुम् आ |
| हओमो उपाइत् ज़रथुश्त्रेम्[२]। | सोम उपैत् ज़रथुश्त्रम्। |
| आत्रेम पइरि-यओभ्-दथंतेम्[२] | अत्रिम् *परि-योस्-दधन्तम्। |
| गाथाओस्-च स्रावयंतेम् | गाथाश्-च श्रावयन्तम्। |
| आ दिम् पेरेसत्[३] ( ज़रथुश्त्रो ) | आ तम् पृच्छत्[३] ( ज़रथुश्त्रः ) |
| को नरे अही | को नर्[४] असि। |
| यिम् अज़ेम् वीस्पहे[५] अङ्हेउश | यमहं विश्वस्य असोः |
| अस्त्वतो स्रएश्तेम् दादरेस | *अस्थिवतः श्रेष्ठं ददर्श |
| ह्वहे गयेहे[५] ह्वन्वतो ( अमेषहे[५])। | स्वस्य गयस्य स्वन्वतो ( ऽमृतस्य )॥ |

At (ā) the hour ( ratūm ) of early morning ( hāvanīm ) Haoma ( Haomo ) came up ( upāit ) to Zarathushtra ( Zaraθushtrəm ) [ who was ] cleaning [ the altar ] ( pairi-yaozdaθentəm ) for the fire ( Ātrəm ) and (ca) [ was ] chanting ( srāvayantəm ) the Gāθās ( gāθāo ). Unto him ( ā-dim ) asked ( pərəsat ) Zaraθushtra ( Zaraθushtro ), who ( ko ), O Hero ( narə ) art thou ( ahī ), whom ( yim ) I ( azəm )

---

१ "इदुतोर्दीर्घोऽस्मि" इत्यावेस्तायां दीत्वम्।

२ "अत एदस्मि" इत्यावेस्तायामकारस्येत्त्वम्।

३ "बहुलं छन्दस्यमाङ्योगेऽपि" इत्यडागमप्रतिषेधः।

४ नृ-शब्दस्य सम्बुद्धौ रूपं नरिति। ५ अतो ङसो हे।

see ( dādarəsa ) the noblest ( sraəstəm ) of all ( vīspahe ) material creation ( angheus ) shining ( xvanvato ) with thine own ( xvahe ) eternal ( ameṣahe ) life ( gayehe ).

---

# पाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अष्टाध्याय्याः षष्ठाध्यायस्य प्रथमे पादे "यजुष्युर आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बालिकेपूर्वे" [ ६।१।११७-८ ] इति सूत्रद्वितयमुपलभ्यते। अत्र प्रथमसूत्रस्य "यजुष्युरः" "यजुष्युरो" इति द्वेधा छेदः सम्भवति*। काशिकासिद्धान्तकौमुद्यादिषु "यजुष्युरः" इति पाठः स्वीकृतः, काशिकायां "यजुष्युरो" इति पाठान्तरमप्युल्लिखितम्—

उरःशब्द एङन्तो यजुषि विषयेऽति प्रकृत्या भवति। उरो अन्तरिक्षम्। अपरे "यजुष्युरो" इति सूत्रं पठन्ति। उकारान्तमुरुशब्दं सम्बुद्ध्यन्तमधीयते। त इदमुदाहरन्ति—उरो अन्तरिक्षं सजूरिति। इति।

पाठयोरनयोः कस्तावत् सूत्रकारसम्मत इति विचारे पदवाक्यप्रमाणपारावारपारीणस्य भाष्यकारस्य वा वेदविदां धुरि कीर्तनीयस्य हरदत्तस्य वाभिमतं सर्वथा समादरणीयं स्यात्, अधन्यतया पुनरस्माकं नाभ्यां सूत्रमिदं धृतं विवृतं वा। यजुर्वेदे तैत्तिरीय-मैत्रायणी-काठक-संहितासु "उरो अन्तरिक्ष सजूर्देवेन वातेन"† [ तै० सं० १।३।८।१, मै० सं० १।२।१५, ३।१०।७,

---

* स्थानेऽन्तरतम उरण्रपरः" [ १।१।५०-५१ ] इत्यत्राप्येवम्।

† "आहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते शमिता पशुं नयति 'उरो अन्तरिक्ष' इत्यन्तरा चात्वालोत्करावुदञ्चं पशुं नयति।" मन्त्रस्त्वेवमा

काठकसंहिता २।२,३।६ ] इत्यत्र "उरो अन्तरिक्ष" इति सम्बुद्ध्यन्ते पदे एव दृश्येते । आपस्तम्बश्रौतसूत्रे [७।१५।१०] मानवश्रौतसूत्रे [१।८।३।२७] च स एव पाठो जागर्ति । ( वाजसनेयिसंहितायां (६।११) शतपथब्राह्मणे (३।८।१।१२) च "उरोरन्तरिक्षात्" इति पाठः स तु प्रकृते किमपि नोपकरोति । ) यथास्माभिर्दृष्टं तथा "उरो अन्तरिक्षम्" इति याजुषी श्रुतिर्न विद्यते । अत एव प्रसिद्धतमलक्ष्यानुरोधेन "यजुष्युरो" इति पाठ एव सूत्रकारसम्मत इति प्रतिभाति ।*

---

## पुस्तक-परिचयः ।

**Inspiring Thoughts of Emerson** compiled and published by S. C. DASS, 3206 Dassan Street, Delhi. मूल्यं रूप्यकद्वितयम् ।

ग्रन्थेऽस्मिन् Ralph Waldo Emerson-समाख्यस्य सुप्रथितस्यामेरिकानिवासिनो मनीषिणः प्रबन्धमुक्तावलीतः ४५६ मौक्तिकानि समाहृतानि । वाचकमहोदयानां परितोषाय कानिचिदत्र समुद्ध्रियन्ते—

The sum of wisdom is that the time is never lost that is devoted to work.

---

म्नातः—"उरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज . . ." इति । अत्रान्तरिक्षशब्देन पशोः श्रोत्रादिच्छिद्रेष्ववस्थित इन्द्रियसमुदाय उपलक्ष्यते । हे 'उरो अन्तरिक्ष' विस्तीर्णेन्द्रियसमुदाय अस्य पशोरभिमानिदेवेन 'वातेन' प्राणवायुना 'त्मना' जीवात्मना च 'सजूः' सह 'हविषो यज' हविर्देहि । इति सायणभाष्यम् । 'उरो अन्तरिक्ष' इति वामनोदाहरणस्य—तस्य परमात्मनः अन्तरिक्षम् एव वक्ष इत्यर्थः स्यात् ।

* अन्तरिक्षशब्दस्य विशेषणतया उरुशब्दस्य पुनः पुनः प्रयोगोऽपि न विस्मरणीयः ।

अयमेव ज्ञानस्य सारः—कर्मणि विनियुक्तः कालः कदापि न वृथा व्ययितो भवतीति।

Shall I tell you the secret of a true scholar? It is this : Every man I meet is my master in some point, and in that I learn of him.

अपि नाम परमार्थतः पण्डितस्य रहस्यं ते ब्रूयाम्? तद् यथा—यमेव साक्षात्करोमि स एव विषयविशेषे मत्तो ज्ञानवत्तरः, तं च विषयं तस्मादहं शिक्षेय। इति।

Make yourselves necessary to somebody. Do not make life hard to any.

यस्य कस्याप्युपकारका भवत। मा तावत् कस्यापि जीवनं दुर्वहं कार्ष्ट।

There is no beautifier of complexion, or form, or behaviour, like the wish to scatter joy and not pain around us.

परित आनन्दमेव विकिरेयं न पुनर्दुःखमिति सङ्कल्प इव शरीरवर्णस्य वावयवसंस्थानस्य वाचरणस्य वा औज्ज्वल्यसाधकं किमपि नास्ति।

I owed a magnificent day to the Bhagavad Gita. It was the finest of books, it was as if an empire spoke to us.

भगवद्गीतायै समुज्ज्वलं दिवसमेकं धारितवानहम्, सा हि पुस्तकेषु प्रथमा, साम्राज्यमेकमस्मभ्यमकथयदित्यस्माकं प्रतीतिरासीत्।

उपोद्घातेनान्ते सन्निविष्टैः कतिचित् पदैः विषयसूच्या च ग्रन्थस्यास्य समधिकः समुत्कर्षः सञ्जातः। त्वरन्तामाङ्गलभाषाभिज्ञा ग्रन्थस्यास्य संग्रहाय।

## What Scholars think of the Manjusha.

**Dr. Suniti Kumar Chatterji**, M.A., D.LIT. (London) Professor, Calcutta University, writes :

This little paper is unique in many respects. Sanskrit is said to be a dead language in India, but it is not yet as dead as many people think (or as some people would like to think !)...

We have still about half-a-dozen Sanskrit journals in India, apart from fairly frequent addresses and dissertations which are published independently. Among these journals, the *Manjusha* which is probably the only one of its kind appearing *regularly* month after month, has made quite a unique place of its own.

The *Manjusha* is run by Dr. Kshitish Chandra Chatterjee, of the University of Calcutta, who is one of our most erudite authorities on the technical and other niceties of Sanskrit grammar. He is a student of languages and, in addition, he handles Sanskrit with ease. It has been his love of Sanskrit that has made him carry on the work of editing and bringing out this paper since its inception by himself....Financially it has been a thankless task. It has brought other disadvantages also—the editing and financing of a journal without much wide appeal because of its language has been a source of worry which has had its repercussions on his health. But he has not given in, because he is an incorrigible optimist when he is convinced his cause is noble. Prof. Chatterjee is quite an institution in himself. Then, he has been able to enlist a number of disinterested colleagues who help him with contributions and who are enthusiasts for Sanskrit like himself. And he himself writes. It is a remarkable thing that although he finds joy in unravelling the intricacies of Sanskrit grammar, he is not in his mental make-up a dry-as-dust grammarian. He has a wonderful sense of humour, supported by an inexhaustable fund of anecdotes and stories which he brings out in racy Sanskrit. So the pages of the *Manjusha* at times sparkle with laughter. Comparative inguistics he brings in frequently in his articles, and this is a remarkable "special feature" of this little paper. Further, it does not confine itself to Sanskrit alone. Proverbs, *Bon-mots*, wise sayings, *Mahavakyas*, etc. from different languages, English, French, German, Latin, etc., are rendered appropriately into Sanskrit, demonstrating the capacity of the language of the Gods to keep pace with turns of expression peculiar to various languages. One can say also that there is an "English Section" to this magazine, devoted as it is entirely to the culture of Sanskrit. Thus, the editor himself is bringing out through this magazine, in instalments, his English translation and commentary on the *Mahabhashya*

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*

of Patanjali which, when completed, will be a valuable contribution to the study of Sanskrit grammar through English.

A journal like this deserves a much wider appreciation which is its due. I think our high school students reading Sanskrit will find much of interest, pleasure and profit in it. I would suggest its being taken in all schools, colleges and universities in India where Sanskrit is taught. Prof. Chatterjee has been able to obtain contributions from eminent Sanskritists not only from all over India but also from abroad and that is no negligible achievement. All power to his elbow for the rehabilitation and the glory of Sanskrit, and for re-establishing its popularity among young Indians of today !

---



---

Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

५म-वर्षे October, 1950. २य-संख्या

Special Puja Number.

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Principal Contents.



---

Office : 81 Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign : Rupees Eight.

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदश्च सभाष्यो मुद्र्यन्ते।

४। सनातन-भारतधर्म-विरुद्धाः प्रबन्धाः कथमपि न प्रकाश्येरन्। ग्राहकवर्जमितरेषां लेखा न प्रकाश्यन्ते।

५। आपाततः प्रतिमासं द्वात्रिंशत्-पृष्ठात्मिका मञ्जूषा प्रकाश्यते, सति ग्राहकाणां बाहुल्ये पञ्चाशत्-पृष्ठात्मिकापि प्रकाश्येत।

**श्रीविश्वनाथ चट्टोपाध्यायः।**
८१ श्यामबाजार ष्ट्रीट्, कलिकाता ४।
81, Shyambazar Street, Calcutta 4.
Ph. B. B. 4649.

शरणं तरुणेन्दुशेखरः शरणंमे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

October, 1950. | १८७२-शकीयकार्त्तिकस्य ५म-वर्षस्य द्वितीय-संख्या | Vol. V No. 2

## मङ्गलाचरणश्लोकाः ।

[ अध्यापक-श्रीसुनीतिकुमार-चट्टोपाध्यायेन प्रतरभारतीय-कम्बुजदेशस्य राज्ञां शिलालेखतः संगृहीताः । ]

राजेन्द्रवर्मणः शिलालेखः । ( शकाब्दाः ८६६, खीस्ताब्दाः ९४४ )

ऋग्भिर्वह्निशिखाकलापविसरव्यक्ताभिरैन्द्रीं दिशं
प्रोद्यद्-वायु-समीरितेन यजुषा यो दीपयन् दक्षिणाम् ।
साम्ना चन्द्रमरीचिरश्मिनिकर-प्रद्योतितेनापरां
कौबेरीञ्च विभाति तैः समुदितैस्तस्मै नमः शम्भवे ॥
ओङ्कारादतनुस्तनोति जगतामेकोऽपि जन्मस्थिति-
व्यष्टीर्व्यक्त-समस्त-शक्तिनिलयो या योगियोगात्मकः ।
भूयो नीरज-जन्म-कञ्ज-नयन-श्रीकण्ठमूर्त्तिर्वशी
शब्दान्तस्थितये शिवाय विभवे शान्ताय तस्मै नमः ॥

ब्राह्मीमिन्द्रौ सवित्रीं सवितरि विततां वैष्णवीं पालनीं यद्
रौद्रीं संहारहेतुं हुतभुजि च कलामर्पयत् त्रिप्रकारम् ।
दृष्टं दृक्शक्तिदृग्भिस्त्रिषु रचितवपुः सूक्ष्ममप्येषु तस्मै
तत्त्वज्ञानां परस्मै परिहृतरजसे ब्रह्मणे स्तान्नमो वः ॥
पारेसत्त्वरजस्तमस्कमपि यो नित्यं निविष्टं पदे
त्रैगुण्येन चतुर्विधेन विविधाभिव्यक्तिराविर्भवन् ।
विश्वाकारधरो निरस्तसकलाकारोऽपि देदीप्यते
वन्दन्तां भगवन्तमादिपुरुषं तं वासुदेवं विभुम् ॥
षड्गर्भप्रभवाय बुद्धिजननीं विद्यां विनिर्माथ या
गर्भे सप्तमगर्भकर्षणकरी हंसस्य सूतेऽष्टमे ।
मूर्त्ता कंसवधोद्धुरं विदधती नादान् नभस्थोर्ध्वगा
साद्या शक्तिरकृत्रिमा भगवतो नारायणी नस्यताम् ॥

---

## वितर कृपां मयि दीनबन्धो ।

"Let me not be overcome, O Lord, let me not be overcome by flesh and blood; let not the world and the brief glory thereof deceive me; let not the devil and his subtle reasoning supplant me.

"Give me strength to resist, patience to endure, and constancy to persevere." *Imitation of Christ*, iii. 26.

[ रवीन्द्रनाथ-ठाकुरः ]

बल दाओ मोरे बल दाओ, प्राणे दाओ मोर शकति,
सकल हृदय लुटाये, तोमारे करिते प्रणति ।
सरल सुपथे भ्रमिते, सब अपकार क्षमिते,
सकल गर्व दमिते, खर्व करिते कुमति ।

हृदये तोमारे बुझिले, जीवने तोमारे पूजिते,
तोमार माझारे खुँजिते, चित्तेर चिर-वसति।
तव काज शिरे धरिते, संसार-ताप सहिते,
भव-कोलाहले रहिते, नीरवे करिते भकति।
तोमार विश्व-छविते, तव प्रेमरूप लभिते,
ग्रह शशी तारा रविते, हेरिते तोमार आरति ;
वचन-मनेर अतीते, डुविते तोमार ज्योतिते,
सुखे दुखे लाभे क्षतिते, शुनिते तोमार भारती॥

अक्षरानुवादः।

बलं देहि मे बलं देहि, प्राणेषु देहि मे शक्तिम्
समग्रं हृदयं लोठयित्वा त्वयि कर्तुं प्रणतिम्।
सरले सुपथि भ्रमितुम्, सर्वमपकारं क्षमितुम्,
सर्वं गर्वं दमयितुम्, खर्वां कर्तुं कुमतिम्।
हृदये त्वामवबोद्धुम्, जीवने त्वामीड़ितुम्,
तवाभ्यन्तरे विचेतुं चित्तस्य *चिरवसतिम्।
तव कार्यं शिरसा वोढुं संसारसन्तापं सोढुम्
भवकोलाहले वर्तितुं नीरवं कर्तुं भक्तिम्।
त्वदीये ब्रह्माण्डालेख्ये लब्धुं त्वदीयं प्रेममयं रूपम्,
ग्रह-शशि-तारा-रविषु, द्रष्टुं तवारात्रिकम् ;
वचोमनश्चातिक्रान्ते निमङ्क्तुं तव ज्योतिषि
सुखे च दुःखे च लाभे च हानौ च श्रोतुं त्वदीयां भारतीम्॥

* आत्यन्तिकीं वसतिम् इत्यर्थः।

# उपदेशरत्नम् ।

पुरतः कृच्छ्रकालेषु धीमाञ्जागर्ति पूरुषः ।
स कृच्छ्रकालं सम्प्राप्य व्यथां नैवैति कर्हिचित् ॥
यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते ।
स कृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत् ॥

The prudent man, alive, awake
To all the turns events may take,
The vigorous man, prepared to brave
All strokes of fate, however grave,
Is never taken by surprise,
When ills assail and troubles rise.
Though laid by rude misfortune low,
He does not faint beneath the blow,
But soon recovering strength, is fain
To fight life's battle o'er again.
His manly spirit nought dismays,
He strives and hopes for better days.
But thoughtless men, who never see
Th' approach of dire calamity,—
Of yawning ruin never think,
Until they stand upon its brink,—
When trouble comes, oppressed and scared
For struggling 'gainst it unprepared,
Succumb beneath the blows of fate,
And rise no more to high estate.

# आभाणकरत्नानि

(व) येखाने बाघेर भय, सेखाने सन्ध्या हय।
यत्रास्ते व्याघ्रतो भीतिस्तत्र सन्ध्या समेति हि।

(व) काणा गोरु ब्राह्मणे दान।
काणां धेनुं ब्राह्मणाय ददाति।

(व) सोना बाइरे आँचले गेरो।
"स्वर्णं बहिर्ग्रन्थिबन्धोऽंशुकान्ते।"

The frog in the well knows nothing of the great ocean.

कूपमण्डूको महासागरस्य वृत्तान्तं न वेत्ति।

Make haste slowly.

(ग्री) Epende bradeos.

(ला) Festina lente.

शनैः शनैस्त्वरस्व, ( अतित्वरया हि कार्यविनाशः स्यात् )।

Kindle not a fire that you cannot extinguish.

न ज्वालयेस्तमनलं यं निर्वापयितुं न प्रभविष्यसि।

Two dogs and a bone, never agree in one.

( ला ) Dum canis os rodit, socium, quem diligit odit.

( फ ) Deux chiens à un os ne s'accordent.

( शा ) Zwei Hunde an einem Bein
Kommen selten überein.

( इतालीय ) Due cani, che un sol osso hanno,
difficilmente in pace stanno.

शुनोरेकास्थिलुब्धयोः साम्मनस्यं न जात्वपि॥

# भामती-रत्न-संग्रहः ।

न खल्विक्षुक्षीरगुडादीनां मधुररसभेदाः शक्याः सरस्वत्या-प्याख्यातुम् । १।१।३

[ इक्षुक्षीरगुड़ादीनां माधुर्यस्यान्तरं महत् ।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते ॥ काव्यादर्श १।१०२ ]

न हि बहूनामज्ञानां विज्ञानां वाशयदोषवतां प्रतिज्ञाने युक्त आश्वासः । तत्त्वज्ञानवतश्चापास्तसमस्तदोषस्यैकस्यापि प्रतिज्ञाने युक्त एवाश्वासः । १।१।३

उपवेलं जलधिरतिबहलचपलकल्लोलमालापरस्परास्फालनसमुल्लसत्फेनपुञ्जस्तबकतया विकृतः, मध्ये तु प्रशान्तसकलकल्लोलोपसर्गः स्वस्थः स्थिरतयाविकृतः, तस्य मध्यमविकृतं पौतिकः पोतेन प्राप्नोति। १।१।४

शान्तिकर्मणि वेतालोदयः ।

न हि दर्पणे निघृष्यमाणे मणिर्विशुद्धो दृष्टः । १।१।४

न खल्वन्धाः सहस्रमपि पान्थाः पन्थानं विदन्ति । १।१।५

न चेदमैकान्तिकं यत् प्रधानमेव सर्वनाम्ना परामृश्यते, क्वचिद-योग्यतया प्रधानमुत्सृज्य योग्यतया गुणोऽपि परामृश्यते । [तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यादौ शब्दतोऽप्रधानस्यापि पयआदेः सर्वनामनिर्देशात् अनियतः सर्वनाम्नः प्रधानपरामर्शित्व-मित्याह—न चेति । कल्पतरुः ]

दृष्टं च दुष्टानां कारणानामौत्सर्गिककार्यप्रतिबन्धेन कार्यान्तरो-पजननसामर्थ्यम्, यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्ड-जनकत्वम्, भस्मकदुष्टस्य चौदर्यस्य तेजसो बह्वन्नपचनमिति । १।१।९

अविशुद्धसत्त्वो हि मोक्षमिच्छन्नालस्यात्तदुपायेऽप्रवर्तमानो गृहस्थधर्ममपि नित्यनैमित्तिकमनाचरन् प्रतिक्षणमुपचीयमानपाप्मा धोगतिं गच्छति ।

# प्रेमरसोद्रेकः।

[ सौभाग्यवती क्षमा राओ ]

"मा स्म भैषीः पितामह, मा स्म भैषीः। नाहं शिशुरस्मि। त्रयोदशवर्षीयाद्यास्मि खलु। समर्थास्मि रक्षितुमात्मानम्।" इति जगादास्मानाम्नी बालिका काचित्।

"किन्तु वत्से! दिवसोऽवसितप्रायः। सूर्यास्तमनं चेदानीमचिराद्भविष्यति।" "पितामह! क्षेत्रबटवे चिरव्यवसायिने किञ्चिद्विश्रान्तिं दातुमिच्छामि। आ भानूदयान्मेषव्रजं पालयन् कृत्स्नं दिनं तिष्ठत्येष क्षेत्रे। तत्र गत्वा मेषेभ्य ईषद्दीर्घतरं चरितुमवकाशमपि दास्यामि। ततश्च मेषयूथं सकालं गोष्ठकं नीत्वा द्वारं पिधाय च शीघ्रमेव पुनरागमिष्यामि।"

"यातु यथेच्छम्। आत्मानं रक्षितुमलमस्ति सा। नास्त्येषा स्तनन्धयी।" इत्यभाणीत् कृषीवलस्य वृद्धा भार्या।

"अये मा विस्मर यत्तपस्विन्या हामिदयायममूल्यनिधिरित्यावयोः सर्वथा विश्वस्या जन्मतो रक्षणार्थमावाभ्यां समर्पितासीद्दारिकेयं किल। पितुर्गेहे न कदापि सा गच्छेदिति हामिदया निर्दिष्टं मृतेः पूर्वमिति" स्थविरेण प्रत्युक्तम्। "अपि नाम वत्सायाः पितेहायात्। हामिदा गर्भिण्यासीदित्यपि स न व्यजानात्।"

उपरि निर्दिष्टः संलापः कयोश्चिद्वृद्धदम्पत्योः कश्मीरेषु कस्मिंश्चिद् ग्रामे पान्पुरनामनि कृतावासयोर्मध्ये समवर्तिष्ट। तदाश्रयार्थमागता हामिदाभिधा काचिदङ्गना परित्यक्ता पत्येति षण्मासान् स्वगेहे ताभ्यां निवासितासीत्। वर्षार्धोत्तरं सा प्रासूत कन्यामेकाम्। द्वादशदिनान्तरे च तां स्वपालकाभ्यां समर्प्य प्राणान् जहौ। सा च बालिका मातृप्रेमामृतरसानभिज्ञा दम्पतिभ्यां प्राणनिर्विशेषं

लालिता, सप्रेम संवर्धिता च पौत्रीनिर्विशेषं, सरोजलोचना कुन्दकुड्मलदन्तपङ्क्तिः प्रवालाधरा चञ्चलालका शिरीषकुसमकोमला शारदकौमुदीव रुचिरा धैर्यशीलापि मृदुवचना, धीरापि स्थिरमतिः स्नेहनिर्झरसंप्लुता दमयन्तीव परदमनशीला क्षमातलागता सुरसुन्दरीव कमनीया कृषीवलस्य क्षेत्रादिकार्येषु मुदा प्रयस्यन्ती सुखमास्त। कश्मीरीयाणामितरासां बालिकानामिव पान्पुरपल्लिका सुपरिचितासीत्तस्या अपि। विलक्षणोऽभूत्तस्या अनतिक्रान्तशैशवाया अपि स्वान्तर्बोधः किल। भाविविषयं पुरत एव सहजकल्पबुद्ध्या साव्यजानात्, न च कदापि लुप्तधैर्यासीत्। दारिकामिमां सकृदेवावलोक्य तदीयहृदयङ्गमगुणरत्नसम्पत्तिं जनः क्षणादेवोपलक्षितवान्। जायापती स्थविरौ बालिकेयमतिशयितप्रेम्णानवरतं सेवते स्म। प्रतिदिनं परिणतवयस्केन कृषीवलेन सार्धमस्मा मेषव्रजं रक्षितुं क्षेत्रं याति स्म। परमद्य सन्धिवातकारणाद् गेहान्निर्गन्तुं नाशकद्वृद्धः। यदा यदा हि स स्तोकमात्रमप्यस्वस्थोऽभूत्तदा तदा वत्सेयं मृदुवचसा तं बहिर्गमनादरुणत्। क्षेत्रवटुं विश्रमयितुं तावदहमेव क्षेत्रं यास्यामीत्यभ्यधात् पुनः सा सनिश्चयम्, जोषं स्थितस्य पितामहस्यानुमतिर्लब्धा मयेति सीवनकर्ममञ्जूषामादाय वत्सा निर्जगाम मन्दिरात्। शैशवे मातामह्या मुखादाकर्णितां निद्रागीतिकां मन्दं मन्दमध्वनि गायन्ती क्षेत्रं प्रति सा प्राचलत्।

अपराह्णसमये तस्मिन् मृदुलहैमनार्करश्मिभिर्विस्तीर्णशालिक्षेत्रं तप्तसुवर्णसवर्णं परितो विरेजे। निरभ्रं निःशेषतो गगनतलं बृहत्कासार इव समलक्ष्यत। गन्धवाहोऽपि मान्द्यशैत्यसौरभ्ययुतो विशेषतो बभूवाह्लादकः। नचिरादस्मा मार्गवर्ति पुरातनमार्तण्डसुरमन्दिरमतिचक्राम। विध्वस्तं देवायतनमिदं क्रूरजाल्मानामवस्कन्दाद्रक्षितुमिव भगवन्मरीचिमाली स्वरश्मिजालं परितः प्रसार-

यामास। प्राक्तनस्यास्य देवालयस्यान्तर्गताङ्गने चित्रविचित्रच्छाया-चित्राणि विच्छिन्नस्तम्भानां दर्शं दर्शं दारिका किञ्चित्कम्पमाना प्रावारकेण कमनीयावंसौ समाच्छादयामास। "अलं भिया। प्रतिच्छाया एवैताः" इत्यात्मानं सस्मितमाश्वास्य सा क्षेत्रं प्रति तत्वरे। तस्याश्च स्निग्धकोमलमाननकमलं शीतमरुता प्रफुल्लतां ययौ। नचिरात्सा क्षेत्रमाससाद। पितामहस्य मेषयूथं शाद्वले तृणं भक्षयन् सुखमास्त। विजृम्भमाणं क्षेत्रवटुमभ्युपेत्य साऽब्रवीत्स-स्मितम्। "याहि गेहम्। श्रान्तोऽसि क्षुत्क्षामकण्ठश्च। मेषरक्षणं स्वयं करिष्यामि। सूर्यास्तमने च तान् गोष्ठकं नेष्यामी"ति।

"कथं नाम भवतीमेकाकिनीमत्र विजने देशे विसृज्य गच्छेयमि"ति माणवकेन मृदुगिरा सविरोधं प्रत्युक्तम्। सा च प्रोच्चैः प्रहस्य पुनरवादीत्। "नास्मि किमात्मरक्षणक्षमा। चिराय त्वयात्रावस्थितम्। परिश्रान्तोऽसि। क्षुधार्तोऽपि स्याः। याहि गेहान्, याहि शीघ्रम्। तवाम्बा त्वदागमनोत्कण्ठिता त्वां प्रतीक्षमाणाऽसहाया स्थिता स्यात्। नास्ति कोऽप्यन्यस्त्वां विनान्धायास्तस्याः साहाय्यं कर्तुमपूपादिपाक-निष्पत्यै।" इत्युक्त्वा समीपवर्तिनश्चिनारनामकपादपविशेषस्य मूले स्थापितं तदायतदण्डमुद्धृत्य तस्मै प्रददौ। स्थिरबुद्धिरस्मा न शक्या निश्चयाच्चालयितुमिति जानन् क्षेत्रवटुरनिच्छन्नपि निजालयं गन्तुमुदतिष्ठत्। "प्रातर्मार्तण्डोदयसमये गोष्ठमागच्छे"ति सा तमस्मारयत्। तदापि विलम्बमानं बटुं पुनः साऽभ्यधात् सस्मितम्। "मा चिरयाध्वनि। गृहं याहि सत्वरम्। विलम्बं मा कार्षीः प्रातरागमने। वर्तते कार्यबाहुल्यं मेषाणां क्षेत्रेष्वानयना-त्प्रागि"ति। तदाज्ञां शिरसा प्रतिपद्य माणवकः स्मेराननः प्राचलत्प्रति गेहम्।

अथैकाकिनी सा चिनारवृक्षविशेषस्याधः शिलायां किलिञ्जं

प्रसार्य मञ्जूषां चोद्घाट्यार्धसमाप्तपलालपादुकाग्रथनोद्यताऽभूत्। अद्यापि समीपस्थे क्षेत्रे काश्चिद्योषितः प्रयस्यन्ति स्म। ताभिरस्मामवलोक्य धान्यसंग्रहणे साहाय्यं नो दीयतामिति समभ्यर्थितम्। शीघ्रं च सा ता अभ्युपायासीत्। कार्ये समाप्ते च न्यवर्तत सा निजासनं द्रुमस्य मूले।

अत्रान्तरे प्रदोषः प्रत्यासन्नप्रायः। वनिताः सर्वाः स्वस्वगेहं वव्रजुः। अद्वितीया च बालिकेयं स्थलस्य विविक्ततां न मनागपि व्यचिन्तयत्। विश्रब्धं पादुकागुम्फनोद्यता गायन्ती च मन्दं मन्दं सुखमास्त। समीपवर्तिनि जलाशये सरोजवृन्दं निशागमनाशङ्कया सामिम्लानत्वमधात्। क्लान्तकूजत्कपोत-कुक्कुटादिपतत्रिणः स्वस्वकुलायानि सान्द्रविटपगतानि समाश्रयन्। दिनमणिः प्रतीचीं सञ्जिगमिषुः प्रसारितकोमलकरैर्मार्दवं भेजे। राजमार्गः शनैः शनैर्निर्मक्षिकः सञ्जातः। हेमन्ततुं वशाद्भूयिष्ठाः प्रवासिनो ग्रामनिवासिनश्च शैत्यस्यातिरूक्षतामसंहमाना देशान्तरं प्रायेण व्रजन्ति स्म। तस्मात् पांसुलमार्गेऽस्मिन् ग्रीष्मर्तुवद् यानानि नावालोक्यन्त सम्प्रति। अथेस्लामबादनाम्नो ग्रामस्य दिशः समायान्तमस्मा सहसा कस्यचित् पुरुषस्याकारमद्राक्षीत्। कृत्रिम-सन्त्रासेनोद्विग्नेव विनोदयितुमात्मानमिव च सपदि गुल्मान्तरित-विग्रहा तस्थौ। तदानुकूलस्थानात्समीपमागच्छतोऽध्वगस्याकृति-मधिकाधिकस्फुटीभूतामपश्यत्सा सकुतूहलम्। नचिरात्स पुरुषः समीपं सम्प्राप्तवान्। निबिडगुल्मावृतां मां द्रष्टुं न प्रभवेत्स इति प्रतीता वर्त्मनो मध्ये तमुपविशन्तं ददर्श विश्रब्धं स्थितवती वत्सा। पञ्चत्रिंशद्वर्षीयः पथिकः परितो दृष्टिमाक्षिप्य कञ्चुककोषतो नाणककोशमपाकर्षत्। पुनश्चेतस्ततो वीक्ष्य धनराशिहस्तो गणयितुमारब्ध। क्व नाम हस्तगतधनराशिः प्रत्यासन्नरजन्यां

गन्तुं प्रवृत्तः स्यात्पुरुषोऽयमिति दारिका व्यचिन्तयत्। नचिराद्धनसञ्चयं कटिबन्धने गोपयामास पान्थस्ततः सोच्छ्वासं समुत्थाय पुरश्चचाल। शीर्णसुरालयकोणपर्यन्तं दृष्टिगोचरो भूत्वा क्षणाददृश्यतां गतः। विनश्वरसन्ध्यतया म्लानप्रभायां जर्जरायतनमिदमीषद्धूसरपिशाचसादृश्यं भेजे।

तदनु विश्रब्धमस्मा शिलासनं प्रत्ययासीत्पुनश्च प्रथनकर्मणि निमग्नाऽभूत्। स्निग्धस्थविरौ क्षेत्रादिकार्याणि च ध्यायन्त्यास्तस्याः कस्यचिन्मेषशावकस्य रेभणं सहसा श्रुतिपथे न्यपतत्। सपदि सोत्थाय क्लान्तशावकं स्वबाहुभ्यां समुद्धृत्य चुकूज समार्दवं प्रेमास्पदीभूतं तं मानुषनिर्विशेषमिव। "अपि नाम निद्रालुस्त्वं वत्स। अलं रुतेन। नेष्यामि सत्वरं त्वां शयनम्।" इत्युक्त्वा मृदुलवाचाऽवशिष्टान्मेषान् एकीकर्तुं शीशशब्दमकरोत्। समीपवर्तिनं गोष्ठकं प्रतियातीं तामन्ये मेषा अन्वगुः। नचिरात्तया विश्रान्तिस्थलमिदं निवेशितकृत्स्नमेषवृन्दं तालकबन्धेन पिहितम्।

अथापराह्णात्प्रतीक्षमाणो रजनीनाथो रजनीं समागमत्। दिष्ट्यासीद्दारिकाया मञ्जूषायामग्निशलाकापेटिका। यावच्च सा मार्तण्डदेवतालयमुपागात् तावत्पुरुषयोर्द्वयोः सवेगं विवदमानयोः स्वरध्वनिस्तस्याः श्रुतिपथे न्यपतत्। केनाप्यनर्थे नावश्यं भवितव्यमत्र तथापि न मया धैर्यं त्याज्यम्। उद्देशस्यास्य परिचयात्समीपवर्तिनः कस्यचित्पुराणचिनारतरोरवस्थानं तस्याः स्मृतिपथं समायात्। विशालद्रुमस्यास्य प्रचण्डकोटरस्तदाकृतिसमानं वपुस्त्रयमपि सम्यग्गोपायितुं पर्याप्त इति व्यजानात् सा। निःशब्दं च तत्कोटरे ससर्प। अपि नाम भवेयुरिमौ भयङ्करौ पुरुषाधमौ। प्रायः प्रान्तवर्तिनौ पापिनौ स्यातामिमौ। एतादृशो दुष्टात्मनोऽधिकृत्य पितामहोऽसकृदभाषतेति स्मरन्त्याः कोटरस्थितायास्तस्याः श्रुति-

पथे न्यपतत्पुरुषयोरेकस्य वचनं यथा—"अत्रैव खनित्वा तन्निधेयं यथान्ये न तत्पश्येयुरि"ति। कम्पमाना दारिका व्यचिन्तयत्कुतोऽमू नाम संरम्भेण कलहं कुर्वतः। प्रायः कस्यापि ताभ्यां निहत-स्यार्भकस्य वपुरुद्दिश्य विवादेनानेन भवितव्यम्। इति। अनयोः पुरुषयोर्न दिष्ट्यापि सुरक्षितेत्यात्मानमभ्यनन्दत् सा। स्वरक्षणार्थं च परमात्मने धन्यवादपुरःसरं कृतज्ञतां मुहुर्मुहुर्हृदन्तरे समुदैरयत्। नचिरात् सर्वत्र निःशब्दता व्यराजत। कलकाच्छादिते कोटरे प्रह्लीभूता कुमारिकेयमपसरत्पादशब्दमाकर्णयदचिन्तयच्च। अप्येतौ नु चलतः प्रति मद्गेहम्। नहि नहि व्रजतोऽमू प्रतीपदिशेति प्रतीता निरुच्छ्वासं किञ्चित्प्रत्यैक्षिष्ट। ततश्च निपुणं कोटरतो निःसृत्य सुरालयं यावत्प्रविशति तावदवगुण्ठितार्तनादमश्रौषीत्सा। तस्थौ च स्तब्धा मुहूर्तं विचिन्तयन्ती। कस्यचिदसह्यवेदनार्दितस्य स्वनेनानेन भवितव्यम्। पितामहो न मे मर्षयिष्यति दुःखितजनाय साहाय्यं न दीयते चेन्मया। स हि नित्यमेवाज्ञातजनपरिचरण-परोऽस्ति। इति विमृश्याप्रमत्ता तदुद्देशं निभृतं प्रत्यागमनोद्यता सा निश्वासनिरोधकं रुतमश्रौषीत्। आर्तनादोऽप्यभूदुच्चादुच्चतरः। प्रज्वलितदीपशलाकयाद्राक्षीत्सा पञ्चत्रिंशद्वर्षीयं पुरुषमेकमग्रतः। धनमुद्रापत्राणि गणयन्नचिराद्योऽवलोकितस्तया स एवासीत् पान्थोऽसौ। चीवरेण मुखमस्य निरुद्धं शरीरं च देवागारस्य स्तम्भे स्थूलरज्ज्वा गाढं निबद्धमासीत्। अप्येष परमार्थत एव दुःखार्तः स्यादाहोस्विद्दस्युरिति विशङ्कमाना मुहूर्तं निस्पन्दं तस्थौ सा। ततः क्षणमात्रं विमृश्य शङ्कां च दूरीकृत्य निबद्धपुरुष-विमोचनपराभूत्। रज्ज्वा ययायं स्तम्भे न्यबध्यत तस्या ग्रन्थीन्निपुणं स्वकररुहाग्रैर्विश्लथयितुं प्रायतत। बहुलायासवशात् पान्थस्य गुरुकायः सरभसं भूमौ न्यपतत्। अपि मृतोऽयमिति जिज्ञासया

सा विनतवपुस्तदुच्छ्वासं श्रुतवती। यद्ययं दस्युः स्यात् तदास्मद्गृहे भयावहजनस्य प्रवेशो न खलु शुभावहो भवेदिति श्वासं निरुध्य विमर्शयोर्मध्ये दोलायमाना मुहूर्तं चिन्ताकुला स्थितवती। प्रायः किञ्चित् स वक्ष्यतीति प्रत्यैक्षत। परं तदार्तरवमेवाशृणोत् सा केवलम्। परमवेदनया ध्रुवं पीडितोऽस्तीति प्रतीता च तत्क्लेशं प्रशमयितुं निश्चिकाय।

अथ तं निपुणमुत्थाप्य शनैः शनैर्मार्गे प्रवर्तयितुमुपाक्रमत धैर्यशीला दारिकेयम्। स्निग्धपितामहौ संक्षोभवृत्तमिदं सकौतुकमाकर्णयिष्यत इति मनसा कल्पयन्ती भूयिष्ठमुपाहसत् सा। इतः परं पितामहो न कदापि मामेकाकिनीं बहिर्गन्तुमनुमंस्यते पितामही च मत्साहसगुणागुणं विजानती शिरः कम्पयिष्यति केवलमिति वितर्कयन्ती चिरेणासदन्निजावसथं कृच्छ्रेण सह स्थूलभारेण क्षताङ्गस्य पान्थस्य। चिरात् प्रवयाः कृषिकः स्वनिकेतनस्य द्वारि चिन्तापरस्तिष्ठन्नास्त। पर्यन्ते तमिस्रायां पथिकं कृचिदाकर्षन्तीं वत्सां निशाम्य तद्गलदङ्गानि स्थैर्यमापुः।

अथाध्वगः समार्दवं वत्सया शुश्रूषितः परिसान्त्वितश्च वृद्धाभ्यां कृतातिथ्यः खट्वायां स्थितवान्निश्चलो निशि। परेद्यव्यस्मां दर्शं दर्शं साक्षात् कामप्यमानुषीं पश्यन्निव क्षणं स स्तब्धोऽभूत्। वत्साया मृदुवाचं श्रावं श्रावं सहसा स प्रोच्चैरुदगिरद् "अयि हामिदे! हामिदे" इति। श्रान्तचेतसं तं मन्वाना तत्प्रामादिकवचः सोपहासं वृद्धजनाभ्यां बालिका निवेदितवती। अनर्थपरम्पराभिभूतः सङ्कटाद्दारिकयाभिरक्षितो द्वित्रैर्दिनैः प्रकृतिमापन्नः परमकृतज्ञताकुलस्तस्यै धन्यवादान्मुहुर्मुहुर्व्यतानीत्। धनविनाशं न मनागपि व्यचिन्तयदध्वगोऽयम्। वत्साया अपरिमितगुणाकृष्टहृदयस्तथामितोपकारभारान्नतो विस्मयस्य परां कोटिमारूढस्तामालोकयन्

सामिपरिम्लानस्मृतिपरम्परया भृशमाकुलोऽभूत्। इतो निर्गमात्प्राङ् मयावश्यं बालिकायै किमपि पारितोषिकं प्रदेयमिति मनसि कृत्वा स्वमहानुभावं दर्शयितुं वृद्धकृषीवलायासावाचख्यौ। श्रीनगरमागम्यतां तावत्, भवद्दर्शनसुखं च मे दीयताम्। गुग्लुनाम्नो नाविकस्य मे गृहनौका सर्वनागरिकाणां विदितास्ति खलु। तत्सङ्केतस्थानं प्रष्टव्यम्। भवदीयपौत्र्यै यथार्हमुपग्राह्यं प्रदास्यते मया। अथास्मया शीघ्रं प्रत्युक्तम्। श्रीनगरमतिदूरस्थं चलितुमक्षमोऽस्ति मे पितामह इति। पथिकस्तामपाङ्गदृशा विलोकयन्नवदद् भवतीं भवत्पितामहं च नगर्यामानयनाय तरणीं प्रेषयिष्यामीति। तन्निमन्त्रणमवगणय्य प्रवयसि तूष्णीं स्थिते पान्थो व्याहरत्पुनः। गतभार्योऽस्मि। अनपत्यासीन्मद्गेहिनी। तद्वन्ध्यतयातिकुपितस्तां सार्धत्रयोदशवर्षेभ्यः प्राग्गृहान्निष्कासितवानहम्। नान्यां च कन्यां परिणीतवान्। तदारभ्याद्वितीयः स्थितोऽस्मि। सन्ति मत्सविधे द्वे गृहनौके पञ्च तरण्यश्चेति।

पान्थस्यावशिष्टकथानिवेदनं नावश्यकमासीत्। सोऽयं सार्धत्रयोदशवत्सरेभ्यः प्राक् शरणागताया हामिदाया भर्ता पौत्रीकृताया अस्मायाश्च जनितेति झटिति स्थविरौ तर्कयामासतुः। अनेन च तावुभौ किञ्चित् सम्भ्रान्तौ बभूवतुः। तदनु गुग्लुः सानुग्रहं स्मेराननो बभाण। भवत्पौत्रीविनिमयेन रूप्यकाणां शतद्वयं प्रदातुमिच्छामि। कोपाविष्टेन कृषीवलेन प्रत्युक्तम्। दीयतां तद्धनं गोक्रयमूल्यार्थमिति। पथिकस्य सुस्थितिं क्षणात्तर्कयामास कृषिकः। तदनु प्रवासी पुनर्वक्तुमारभत। मा कुपः। कन्येयमवाप्स्यति सर्वमेव स्वाभीष्टम्। न कदापि तामपकरिष्ये। मिष्टान्नेन तां पोषयिष्ये बोखारादेशोत्पादितदुकूलैर्नवरत्नखचिताभरणैश्च तद्वपुरलङ्करिष्ये। अनपत्यस्य नयनयुग्मं मे नन्दिनी तव प्रायो जनितनन्दनेनानन्दयिष्यति। तथास्तु।

सञ्जातकुतूहला प्रवासिनं निरूपयन्ती स एव मे पितेति न खलु व्याजानादस्मा। कृषीवलस्य पत्नी तस्य वचनमाकर्ण्य भर्तुः कर्णे ऽजपत्। कथं परिणयेन्निजात्मजाम्। अयुक्तमेवेति कथय तामिति। स्थविरो दोलायमानमानसः स्थितः। व्यचिन्तयच्च वत्सायाः प्रभवमेतस्मै निवेदनीयं न वेति। परमासन्नमृत्यवे हामिदायै प्रतिश्रुतमासीदस्माभिर्यन्न कदापि बालिकेयं तत्पितृसकाशं प्रेषयिष्याम इति। तथापि वत्सायाः अन्वयं यदि पान्थाय न कथ्यते तदा तस्या जन्मतः सुस्थितजीवनोपमं सौख्यमपहरिष्यते खलु। इति विमृश्य कृषीवलोऽवादीत्। नेयं भवते देया। केनचित्कुमारेण हि तस्या विवाहवाङ्निश्चयः कृतोऽस्तीत्युक्त्वा भार्याया बाहुं कूर्परेणेषत्समचालयत्। अथ स्वहृदयौदार्यमाविश्चिकीर्षुणा पान्थेनाभिहितम्, निवसेतु सा तर्हि दुहितृभावेन मद्गेहे। पञ्चाशद् रूप्यमुद्रा दास्यामि भवते। मृत्युवक्त्रात्परित्रातोऽस्मि तया। तस्य भाविभर्ता मन्नाविको भवतु। इति।

प्रव्रयाः कृषीवलः पुनर्विममर्श मनसि। उपन्यासोऽयं प्रशस्तः खलु। सर्वथा नोचितं भाविसौख्यमपहर्तुं बालिकायाः। अथात्मगेहिनीं पुनस्तत्कर्णे जपिष्यन्तीं कूर्परेणास्पृशत् तूष्णीं तिष्ठेति च तां व्यजिज्ञपत्।

अन्ततः सदसद्विवेकप्रेरितः स्थविरो वत्सां निर्णेतुमज्ञापयत्। अथात्यन्तगाढप्रशान्तता व्यराजत प्रकोष्ठेऽस्मिन्।

कृषिको भार्याद्वितीयो निरुद्धश्वासो मुहूर्तं जोषं तस्थौ। पान्थश्च सोत्कण्ठं पुरतोऽवलम्बमानो दारिकाया वचोऽशृणोत्। दीयतां पञ्चशती रूप्याणामर्हते जनायान्यस्मै। यत्र मे पितामहस्य पितामह्याश्च निवासस्तत्रैव समुचितो ममापि। विद्यते हि दिष्ट्या पर्याप्तं धनं तयोः सविधे मत्पोषणार्थमिति सनिश्चयं

प्रोच्याग्रे च सपदि संप्लुत्योच्चैः स्थविरकृषीवलस्याङ्के सुख-मुपाविशत्। सहसा विस्मापितो गुग्लुस्तां निरीक्षमाणस्तस्थौ। विलोलालका बालिका साभियोगं च पथिकमालोकयत्। अनेक-सङ्कल्पविकारपरम्परया तस्य चेतः संग्रथितमभूत्। विवर्णवदनः शिरः कम्पयंश्च द्वारं प्रति चलिष्यन्नभ्यधात् पथिकः। अयि भोः परवस्तुलोभेन किम्। मदीयभार्या हामिदा यदि वन्ध्या नाभविष्यत्त-दावयोरप्यस्मत्समानरूपगुणादिसम्पन्नाभविष्यद्दारिका। इति दार्शनिक इव समुदीर्यं श्रीनगरस्य विजनेनाध्वना स्वगेहं प्रति सायासं प्राचलदध्वगः।

---

## ऋग्वेदसूक्तानि

[ अनुवादकः—श्रीमहालिङ्गशास्त्री ]

### सवितृसूक्तम् ( १।३५ )

ह्वयेऽग्निमादौ कुशलाय भूयो
हिताय मित्रावरुणौ ह्वयामि।
रात्रिं ह्वये विश्रमदां जनानां
ह्वयामि देवं सवितारमृद्ध्यै ॥१॥

आवर्तमानस्तमसां निकाये
मर्त्यामरं विश्रमयन् प्रपञ्चम्।
आयाति देवो भुवनानि पश्यन्
हिरण्यभासा सविता रथेन ॥२॥

नीचैरथोच्चैः स पथा प्रसर्पन्
पूज्यो हयाभ्यां धवलच्छविभ्याम्।
आयाति देवः सविता सुदूरा-
द्विश्वानि पापान्यपबाधमानः ॥३॥

स चित्रभानुः सविता महीयान्
अन्धं तमो विभ्रदधः प्रभावात् ।
बृहन्तमध्यास्त हिरण्यशङ्कुं
मुक्ताफलाढ्यं रथमत्युदारम् ॥४॥

श्यामास्तुरङ्गा धवलाङ्घ्रयोऽस्य
रथं हिरण्यप्रयुगं वहन्तः ।
लोकानपश्यन् अभितोऽङ्कपाल्यां
देवस्य पृथ्व्यां सवितुर्निविष्टान् ॥५॥

उभे सवित्रङ्कगते तृतीया
मर्त्यैर्विलङ्घ्या यमसद्मनि द्यौः ।
तमध्यतिष्ठन् रथकीलरीत्या
देवाः, किमेतद्विमृशन्तु सन्तः ॥६॥

पर्यैक्षतासौ विहगोऽन्तरिक्षं
दिव्यो गभीरप्रसृतिर्नयज्ञः ।
क चाद्य सूर्यः क इदं विजज्ञौ
नन्वस्य रश्मिः कतमामगाद् धाम् ॥७॥

शृङ्गाणि चाष्टौ कलयन् स पृथ्व्या-
स्त्रिष्वध्वनो धन्वसु सप्तसिन्धून् ।
हिरण्यचक्षुः सविता समागा-
द्देवो ददत् प्रार्थितमाश्रितेभ्यः ॥८॥

हिरण्यपाणिः सविता तरस्वी
द्यावापृथिव्योः परिवर्ततेऽन्तः ।
गदान्निहन्ति प्रहिणोति सूर्यं
क्रान्त्वा तमोमार्गमुपार्च्छति द्याम् ॥९॥

हिरण्यहस्तो हितकृन्नयज्ञो
देवः प्रसन्नः स इहाभ्युपैतु ।
रक्षांसि यातूनपि चानुधावन्
स्तुत्यो दिनान्ताभिमुखोऽयमास्थत् ॥१०॥
यास्ते पदव्यः सवितः पुराण्यो
नीरेणवः साधु परिष्कृताः खे ।
ताभिः प्रसर्पन् सुतराभिरस्मां-
स्त्वं देव संरक्ष भवानुकूलः ॥११॥

---

# पाठ-विमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कस्य वा न विदितो वाचकमहाभागस्य श्रीबगलामुखीस्तोत्रगतो मन्त्रः :—

वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ।
गर्वी खर्वति सर्वविच्च जडति त्वन्मन्त्रणायन्त्रितः
श्रीनित्ये बगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः ॥ इति।

अत्र द्वितीयपादे 'शाम्यति' इत्येव पाठः प्रायेण मुद्रितस्तोत्रग्रन्थेषूपलभ्यते। स च व्यक्तमेव प्रामादिकः, विनैव कारणं प्रक्रमभङ्गाधायकत्वात्। मूकति-रङ्कति-शीतति-सुजनति-खञ्जति-खर्वति जडतीनामाचारक्विबन्तनामधातुजाख्यातत्वात्, शाम्यति-स्थलेऽपि तस्यैवाकाङ्क्षितत्वं स्फुटमेव। अत एव बाल्यादेवास्माभिरत्र शान्तति इति पठ्यते। भास्कररायविरचितायां श्रीदुर्गासप्तशत्यां गुप्तवतीसमाख्यायां टीकायामिदानीं स एव पाठ उपलब्धः। तथाहि—

दुर्वृत्तानामशेषाणां बलहानिकरं परम्।
रक्षोभूतपिशाचानां पठनादेव नाशनम् ॥

इति मन्त्रं [ १२।१८ ] व्याचक्षाणेन भास्कररायेणोक्तम्—

"वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति
क्रोधी शान्तति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ।"

इत्यादिश्लोकप्रसिद्धफलप्रद इति।

---

## खद्योतः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( शार्मण्यभाषातः )

"अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥"

निषसाद कवेः कुञ्जे शष्पपुञ्जे सुकोमले ।
भ्रामं भ्रामं परिश्रान्तः कदाचिज् ज्योतिरिङ्गणः ॥ १ ॥

विभ्राजमानो वपुषः तारकेव नभोऽङ्गने ।
ह्लादिनीं स्वां द्युतिं स्निग्धां व्यजानाञ्च मनागपि ॥ २ ॥

पार्श्वस्थपल्वलस्यान्तर्जम्बालजटिलाज्जलात् ।
शनैः समुपसर्पन्ती मण्डूकी मत्सरिण्यथ ॥ ३ ॥

विश्राम्यन्तं सुविश्रब्धं खद्योतमभिलक्ष्य तम् ।
सपदि स्वशरीरस्थं निर्मुमोचाखिलं विषम् ॥ ४ ॥

किं मया ते कृतं भद्रे कदर्थयसि येन माम् ।
इत्येवमनुयुक्ता सा खद्योतेन महात्मना ॥ ५ ॥

चुक्रोशोद्दीपितामर्षा दर्दुरीर्ष्याकषायिता ।
आः कथं दीप्यसे जाल्म पुरतो निष्प्रभात्मनाम् ॥ ६ ॥

---

## पत्न्या उपयोगः

आङ्‌लादिप्रदेशेषु दरिद्राणां ग्रामीणानां धर्मोपदेष्टॄणां चोपकारायान्तरान्तरा निरुपयोगाणां वस्तूनां विक्रयो भवति। तत्समुत्थेन च द्रव्येण धर्मोपदेशकानामितरेषां च दुर्गतानां व्ययनिर्वाहो जायते। कदाचिदुपदेशकमहाभागेन ग्रामवासिनोऽभिहिताः, भद्राः! परोपकारः परमो धर्मः। अतो येन वस्तुना भवतां प्रयोजनं नास्ति, यस्य च रथ्यायां निक्षेपोऽपि न समीचीनस्तथाविधं वस्तु नियतमेव भवद्भिर्धर्मायतनस्य हितायानेतव्यम्। तावता च भवतामपि निरुपयोगवस्तुभारलाघवम् अस्माकमपि तद्विक्रयलब्धेनार्थेन पोषणम् एवम् आम्रसेचनपितृतर्पणन्यायेनैकेनैव कर्मणा द्वयोरर्थयोः संसाधनं स्यात्। परेद्यवि यथाकालं बहुभिर्बहूनि वस्तून्यानीतानि, तत्र च त्रिभिः पुरुषप्रवरैः स्वीयाः सहधर्मिण्य एव समानीताः!

---

## धार्म्मिको नरपतिः

( राजतरङ्गिणी ६।७–४१ )

अचौराभूत् तथा भूमिर्यथा रात्रौ वणिक्पथाः।
अतिष्ठन् विवृतद्वारा मार्गाश्चाविघ्नितावगाः॥ ७॥

प्रत्यवेक्षापरे तस्मिन्नासीत् सर्वापहारिणाम्।
कुध्यध्यक्षत्वमुत्सृज्य कृत्यं नान्यन्नियोगिनाम्॥ ८॥

ग्राम्याः कृषिपराधीना नापश्यन् राजमन्दिरम्।
विप्राः स्वाध्यायसंसक्ता नाकुर्वञ्छस्त्रधारणम्॥ ९॥

न विप्रगुरवः साम गायन्तो मदिरां पपुः।
न तापसाः पुत्रदारपशुधान्यान्यढौकयन्॥ १०॥

न मूर्खगुरवो मत्स्यापूपयागविधायिनः ।
चक्रिरे स्वकृतैर्ग्रन्थैस्तर्कागमपरीक्षणम् ॥ ११ ॥

नादृश्यन्त च गेहिन्यो गुरुदीक्षोत्थदैवताः ।
कुर्वाणा भर्तृशीलश्रीनिषेधं मूर्धधूननैः ॥ १२

कार्तान्तिको भिषक सभ्यो गुरुर्मन्त्री पुरोहितः ।
दूतः स्थेयो लेखको वा न तदाभूदपण्डितः ॥ १३ ॥

प्रायोपवेशाधिकृतैर्बोधितेन महीभृता ।
प्रायोपविष्टो निकटं प्रापितः कश्चिदब्रवीत् ॥ १४ ॥

अहमाढ्योऽभवं पूर्वं वास्तव्योऽत्र महीपते ।
निष्किञ्चनत्वं शनकैरगच्छं दैवयोगतः ॥ १५ ॥

उत्तमर्णैः पीडितस्य प्रवृद्धर्णस्य तस्य मे ।
निश्चयोऽभूदृणं छित्वा परिभ्रान्तुं दिगन्तरे ॥ १६ ॥

अथ विक्रीय सर्वं स्वमृणं शोधयता मया ।
महाधनाय वणिजि विक्रीतं निजमन्दिरम् ॥ १७ ॥

भार्यामुद्दिश्य भर्तव्यामेक एव तु वर्जितः ।
सोपानकूपो विक्रीतान्महतो वेश्मनस्ततः ॥ १८ ॥

निदाघे पुष्पतास्वूलीपर्णायत्रातिशीतले ।
न्यस्यद्भिर्मालिकैर्दत्तात् सा जीवेद्धाटकादिति ॥ १९ ॥

ततो दिगन्तराद् भ्रान्त्वा विंशत्या वत्सरैरहम् ।
लब्धाल्पवित्तः सम्प्राप्तो जन्मभूमिमिमां पुनः ॥ २० ॥

अन्विष्यता मया साध्वी स्ववधूर्ददृशेऽथ सा ।
विवर्णदेहा जीवन्ती प्रेष्यात्वेनान्यवेश्मसु ॥ २१ ॥

किं दत्तजीविकापि त्वमीदृशीं वृत्तिमाश्रिता ।
मयेति सा सुदुःखेन पृष्टा स्वोदन्तमब्रवीत् ॥ २२ ॥

सोपानकूपं सम्प्राप्ता त्वयि याते दिगन्तरम् ।
लगुडैस्ताडयित्वाहं वणिजा तेन वारिता ॥ २३ ॥

तदन्या कास्ति मे वृत्तिरित्युक्त्वा विरराम सा ।
तदाकर्ण्य निमग्नोऽहमन्तरे शोककोपयोः ॥ २४ ॥

कृतप्रायोपवेशोऽथ स्थेयैस्तैस्तैः पदे पदे ।
प्रत्यर्थिनो दत्तजयैः किमप्यस्मि पराजितः ॥ २५ ॥

जडत्वाद्वेद्मि न न्यायं न विक्रीतो मया पुनः ।
सोपानकूप इत्यस्मिन्नर्थे प्राणा इमे पणः ॥ २६ ॥

सोऽहं विपद्ये क्षीणार्थो द्वारि शास्तुस्तव ध्रुवम् ।
वृजिनादस्ति चेद्भीतिर्वस्तु निर्णीयतां स्वयम् ॥ २७ ॥
राजेति तेन विज्ञप्तो गत्वा धर्मासनं स्वयम् ।
संघट्याखिलान् स्थेयानासीत् तत्त्वं विचारयन् ॥ २८ ॥
स्थेयास्तमूचुर्बहुशो विचार्यायं पराजितः ।
शाठ्यादगणयन् न्यायं दण्ड्यो लिखितदूषकः ॥ २९ ॥

सोपानकूपसहितं विक्रीतं गृहमित्यथ ।
राजा विक्रयपत्रस्थान् स्वयं वर्णानवाचयत् ॥ ३० ॥
ततोऽधिगतमित्येव सभ्येषु निगदत्स्वपि ।
अन्तरात्मा जगादेव नृपतेरर्थिनो जयम् ॥ ३१ ॥
मुहूर्त्तमिव सञ्चिन्त्य राजान्याभिरभूच्चिरम् ।
कथाभिरतिचित्राभिर्मोहयन् सभ्यमण्डलम् ॥ ३२ ॥
कथान्तराले सर्वेभ्यो गृह्णन् रत्नानि वीक्षितुम् ।
हसन् प्रत्यर्थिनो हस्तादुपादत्ताङ्गुलीयकम् ॥ ३३ ॥
क्षणादेवाखिलैः स्थेयमित्थमेवेति सस्मितम् ।
वचो ब्रुवाणः प्रययौ पादक्षालनकैतवात् ॥ ३४ ॥

अभिज्ञानाय तत्रस्थः स वितीर्याङ्गुलीयकम् ।
भृत्यमेकं वणिग्वेश्म प्राहिणोद्दत्तवाचिकम् ॥ ३५ ॥
स वणिग्-गणनाध्यक्षं ययाचे साङ्गुलीयकः ।
यत्राङ्के पत्रमुत्पन्नं गणनापत्रिकां ततः ॥ ३६ ॥
निर्णयेऽद्य तया कृत्यमस्ति भाण्डपतेरिति ।
श्रुत्वादाद् गणनाध्यक्षस्तां गृहीताङ्गुलीयकः ॥ ३७ ॥
दीनाराणां दशशतीं तस्यां भूभृद्वाचयत् ।
व्ययमध्येऽधिकरणलेखकाय समर्पिताम् ॥ ३८ ॥
तस्मै मितधनाहार्य बहुमूल्यार्पणान्नृपः ।
रेफे सकारं वणिजा कारितं निश्चिकाय सः ॥ ३९ ॥
सभायां तत् प्रदर्श्याथ पृष्ट्वा दत्त्वाभयं च तम् ।
आनीय लेखकं सभ्यान् सञ्जातप्रत्ययान् व्यधात् ॥ ४० ॥
सभ्यैरभ्यर्थ्यमानेन राज्ञा सार्थं वणिग्गृहम् ।
वितीर्णमर्थिने देशात् प्रत्यर्थी च प्रवासितः ॥ ४१ ॥

---

# संस्कृतप्रतिशब्दः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

यया शक्त्या ३३०००-पाउण्ड-परिमितो भारोऽर्धतृतीयैः पलैः ( मिनिटेनैकेन ) सार्धचतुरङ्गुलिपरिमाणं स्थानमुच्चैरुत्तोल्यते सा किलैकाश्वशक्तिरित्युच्यते* । अश्वस्यैकाहगम्योऽध्वाश्वीन इत्युच्यते इति पाणिनिस्मृतितोऽवगम्यते । तथाच सूत्रम्—अश्वस्यैकाहगमः [ ५।२।१९ ] इति । अश्वशब्दात् षष्ठीसमर्थात् एकाहगम इत्यर्थे खञ् प्रत्ययो भवति । यावान् पन्था अश्वेन विनैवायासविशेषम्

*One horse-power is the force required to raise 33,000 pounds one foot in one minute.

एकेनाह्नातिक्रमितुं शक्यते स आश्वीन इत्युच्यते। अत एवैतरेय-ब्राह्मणे [ २।१ ] श्रूयते—"सहस्राश्वीने वा इतः स्वर्गलोकः" इति।

यथास्माभिर्दृश्यते तथा horse-power इत्यर्थेऽपि साम्प्रतम् आश्वीन-शब्दः प्रयोक्तुं शक्यते।

---

## "दधिमानय"

[ श्रीफटिकलाल-दासः ]

आसीत् काश्यां पुरा कश्चित् सुबुद्धिरिति नामतः।
अधीती सर्वशास्त्रेषु विप्रः परमधार्मिकः॥
तस्यैको हि महान् दोषो यदि क्वापि निमन्त्र्यते।
भोज्यमन्यत् परित्यज्य सर्वादौ दधि खादति॥

एकदा कस्यचिद् गेहे रजन्यां स निमन्त्रितः।
पण्डितैर्बहुभिः सार्धं भोक्तुमुपाविशन्मुदा॥
नानाविधमुपादेयं भोज्यं पेयं सुसज्जितम्।
पुरतः स समालोक्य परं हर्षमुपागमत्॥
सहसा दृष्टिमाधाय दिक्षु सर्वासु यत्नतः।
दधिभाण्डं प्रियं तस्य कुत्रापि न ददर्श सः॥

हताशस्य क्षणात्तस्य दिशः शून्या इवाभवन्।
मुखाच्च निर्ययौ वाक्यं "दधिमानय भो" इति॥
दध्यानयेति वक्तव्ये जिह्वालौल्याद् विमोहितः।
वचो बाणं यथा मुक्तं संहर्त्तुं न शशाक सः॥
तस्य तद् वचनं श्रुत्वा जहसुः सर्वपण्डिताः।
सुबुद्धिर्हतबुद्धिः सन् निर्वाणवाङ्मुखः स्थितः॥
सुमतिर्नाम तस्यैकः प्रत्युत्पन्नमतिः सुधीः।
शिष्यस्तेन समं तत्र भोजनाय समागतः॥

सोपहासं वचः सोऽपि श्रुत्वा विपश्चितां तदा।
विज्ञाय च गुरोर्लज्जां तद्रक्षणे समुद्यतः॥
आहूय पण्डितान् सर्वान् रोषसंरक्तलोचनः।
भित्वा कर्णौ च सर्वेषां वाचमिमामुदाहरत्॥

"किमुक्तं गुरुणायुक्तं भो भोः पण्डितमानिनः।
दन्तच्छटामयूखैर्यत् तमःखण्डं व्यपोहथ॥"

पण्डिताः। खट्वारूढ! किमद्यापि प्रमादं नावबुध्यसे।
यथा गुरुस्तथा शिष्यस्तस्मादेवं विडम्बनम्॥
गुरुणा पण्डिताग्रेण व्याहृतं 'दधिमानय'।
अपि श्रुतं न वा ब्रूहि, कर्णाभ्यां बधिरोऽसि वा॥

सुबुद्धिः। श्रुतं तन्मुक्तकर्णाभ्यां, भो भो विदन्तु पण्डिताः।
न ज्ञायते मया तत्र किन्तु हासस्य कारणम्॥

पण्डिताः। दधिमिति पदं, मूर्ख, द्वितीयान्तं कथं भवेत्।
गुरुमुखात्तवान्यत्र प्रयोगोऽस्य क्व दृश्यते॥
स्तनन्धयः शिशुर्वेत्ति दन्न वेद गुरुस्तव।
स्वयं यच्च न जानासि तस्मात् स्मेरमुखा वयम्॥

पण्डितानां वचः श्रुत्वा सुमतिर्मतिमांस्तदा।
हीहीकृत्य जहासादौ वाचमूचे ततः परम्॥

"युष्माभिरेव, कष्टं भो मौर्ख्यं स्वं प्रकटीकृतम्।
शास्त्रविदो गुरोर्वाक्यमजानद्भिर्यथार्थतः॥
'न नक्तं दधि भुञ्जीत' स्मृत्वा शास्त्रसरस्वतीम्।
वागुक्ता तन्निषेधाय गुरुणा धर्मभीरुणा॥
भोजनावसरे दृष्ट्वा निशाकालमुपस्थितम्।
प्रयुक्तस्तेन मा-शब्दो निषेधार्थः सदिच्छया॥

सन्धितः परशङ्केन वाक्यं चेद् 'दधि मानय'।
कथ्यतां पण्डितम्मन्याः ! गुरुः कुत्र प्रमाद्यति ॥
विद्योदधिर्गुरुर्यो मे सर्वलोकनमस्कृतः ।
स दधीति न चेद्वेत्ति हता हन्त मनीषिता ॥
शिशुर्वेद, गुरुर्मे न, किं श्रद्धेयमिदं वचः ।
याचध्वं तं क्षमां तर्हि यदि क्षेममभीप्सथ ॥"

सारगर्भं वचः श्रुत्वा सुमतेस्ते विपश्चितः ।
विच्छायवदनास्तस्थुर्ह्रियं प्राप्ता नताननाः
तस्यां रात्रौ गुरोर्मानः सुबुद्धिना सुरक्षितः ।
किन्तु हन्त ! गुरोस्तस्य नाभवद्दधिभक्षणम् ॥

---

## सप्तकुमारिका-कथा

[ कथासरित्सागरः २८ ]

तथाच पूर्वं कस्यापि कृतनाम्नो महीपतेः ।
अजायन्तातिसुभगाः क्रमात् सप्त कुमारिकाः ॥१३॥
बाला एव च तास्त्यक्त्वा वैराग्येण पितुर्गृहम् ।
श्मशानं शिश्रियुः पृष्टा जगदुश्च परिच्छदम् ॥१४॥
असारं विश्वमेवैतत् तत्रापीदं शरीरकम् ।
तत्राप्यभीष्टसंयोगसुखादि स्वप्नविभ्रमः ॥१५॥
एकं परहितं त्वत्र संसारे सारमुच्यते ।
तदनेनापि देहेन कुर्मः सत्त्वहितं वयम् ॥१६॥
क्षिपामो जीवदेवैतच्छरीरं पितृकानने ।
क्रव्यादगणोपयोगाय, कान्तेनापि ह्यनेन किम् ॥१७॥

## Story of the Seven Princesses[1]

Thus, long ago, there were born in succession to a certain king named Kṛta seven beautiful princesses, and even while they were still youthful they abandoned, in disgust with life, the house of their father, and went to the cemetery, and when they were asked why they did it, they said to their retinue—"This world is unreal, and in it this body, and such delights as union with the beloved are the baseless fabric of a dream; only the good of others in this revolving world is pronounced to be real; so let us with these bodies of ours do good to our fellow-creatures, let us fling these bodies, while they are alive, to the eaters of raw flesh in the cemetery, what is the use of them lovely though they be?"

तथाच राजपुत्रोऽत्र विरक्तः कोऽप्यभूत् पुरा ।
स युवापि सुकान्तोऽपि परिव्रज्यामशिश्रियत् ॥१८॥
स जातु भिक्षुः कस्यापि प्रविष्टो वणिजो गृहम् ।
दृष्टस्तरुण्या तत्पत्न्या पद्मपत्रायतेक्षणः ॥१९॥

सा तल्लोचनलावण्यहृतचित्ता तमब्रवीत् ।
कथमात्तमिदं कष्टमीदृशेन त्वया व्रतम् ॥२०॥
सा धन्या स्त्री तवानेन चक्षुषा या निरीक्ष्यते ।
इत्युक्तः स तया भिक्षुश्चक्षुरेकमपाटयत् ॥२१॥
ऊचे च हस्ते कृत्वा तद् "मातः पश्येदमीदृशम् ।
जुगुप्सितमसृङ्मांसं गृह्यतां यदि रोचते" ॥२२॥
ईदृगेव द्वितीयं च वद रम्यं किमेतयोः ।
इत्युक्ता तेन तद्दृष्ट्वा व्यषीदत् सा वणिग्वधूः ॥२३॥
उवाच च हहा पापं मया कृतमभव्यया ।
यदहं हेतुतां प्राप्ता लोचनोत्पाटने तव" ॥२४॥

1 Tawney's translation.

तच्छ्रुत्वा भिक्षुरवदद् "मा भूदम्ब तव व्यथा।
मम त्वया ह्युपकृतं यतः शृणु निदर्शनम् ॥२५॥

For there lived in old time a certain prince who was disgusted with the world, and he, though young and handsome, adopted the life of a wandering hermit. Once on a time that beggar entered the house of a certain merchant, and was beheld by his young wife with his eyes long as the leaf of a lotus. She, with heart captivated by the beauty of his eyes, said to him, "How came such a handsome man as you to undertake such a severe vow as this? Happy is the woman who is gazed upon with this eye of yours!" When the begging hermit was thus addressed by the lady, he tore out one eye, and holding it in his hand, said "Mother, behold this eye, such as it is; take the loathsome mass of flesh and blood, if it pleases you. And the other is like it; say, what is there attractive in these?" When he said this to the merchant's wife, and she saw the eye, she was despondent, and said, Alas! I, unhappy wretch that I am, have done an evil deed, in that I have become the cause of the tearing out of your eye!" When the beggar heard that, he said,—"Mother, do not be grieved, for you have done me a benefit; hear the following example, to prove the truth of what I say."

आसीत् कोऽपि पुरा कान्ते कुत्राप्युपवने यतिः।
अनुजाह्नवि वैराग्यनिःशेषनिकषेच्छया ॥२६॥
तपस्यतश्च कोऽप्यस्य राजा तत्रैव दैवतः।
विहर्त्तुमागतः साकमवरोधवधूजनैः ॥२७॥
विहृत्य पानसुप्तस्य पार्श्वादुत्थाय तस्य च।
नृपस्य चापलाद्राज्ञ्यस्तदुद्याने किलाभ्रमन ॥२८॥
दृष्ट्वा तत्रैकदेशे च तं समाधिस्थितं मुनिम्।
अतिष्ठन् परिवार्यैनं किमेतदिति कौतुकात् ॥२९॥

चिरस्थितासु तास्वत्र प्रबुद्धः सोऽथ भूपतिः ।
अपश्यन् दयिताः पार्श्वे तत्र बभ्राम सर्वतः ॥३०॥
ददर्श चात्र राज्ञीस्ताः परिवार्य मुनिं स्थिताः ।
कुपितश्चेर्ष्यया तस्मिन् खड्गेन प्राहरन्मुनौ ॥३१॥
ऐश्वर्यमीर्ष्या नैर्घृण्यं क्षीवत्वं निर्विवेकिता ।
एकैकं किं न यत् कुर्यान्निर्विवेके तु का कथा ॥३२॥

There lived long ago in a certain beautiful garden on the banks of the Ganges, a hermit animated by the desire of experiencing all asecticism. And while he was engaged in mortifying the flesh, it happened that a certain king came there to amuse himself with the women of his harem. And after he had amused himself, he fell asleep under the influence of his potations, and while he was in this state, his queens left him out of thoughtlessness and roamed about in the garden. And beholding in a corner of the garden that hermit engaged in meditation, they stood around him out of curiosity, wondering what on earth he could be. And as they remained there a long time, the king woke up, and not seeing his wives at his side, wandered all round the garden. And then he saw the queens standing all round the hermit, and being enraged he slashed the hermit with his sword out of jealousy. What crime will not sovereign power, jealousy, cruelty, drunkenness and indiscretion cause separately, much more deadly are they when combined, like five fires.

ततो गते नृपे तस्मिन् कृत्ताङ्गमपि तन्मुनिम् ।
अक्रुद्धं प्रकटीभूय काप्युवाचात्र देवता ॥३३॥
महात्मन् येन पापेन क्रोधेनैतत् कृतं त्वयि ।
स्वशक्त्या तमहं हन्मि मन्यते यदि तद्भवान् ॥३४॥
तच्छ्रुत्वा स जगादर्षिर्देवि मास्मैवमादिशः ।
स हि धर्मसहायो मे न विप्रियकरः पुनः ॥३५॥

तत्प्रसादात् क्षमाधर्मं भगवत्याप्नवमहम् ।
कस्य क्षमेय किं देवि नैवं चेत् स समाचरेत् ॥३६॥
कः कोपो नश्वरस्यास्य देहस्यार्थे मनस्विनः ।
प्रियाप्रियेषु साम्येन क्षमा हि ब्रह्मणः पदम् ॥३७॥
इत्युक्ता मुनिना साथ तपसा तस्य तोषिता ।
अङ्गानि देवता कृत्वा निर्व्रणानि तिरोदधे ॥३८॥
तद्यथा सोऽपि तस्यर्षेरुपकारी मतो नृपः ।
नेत्रोत्खननहेतोस्त्वं तपोवृद्ध्या तथास्य मे ॥३९
इत्युक्त्वा स वशी भिक्षुर्विनम्रां तां वणिग्वधूम् ।
कान्तेऽपि वपुषि स्वस्मिन्ननास्थः सिद्धये ययौ ॥४०॥
तस्माद् बालेऽपि रम्येऽपि कः काये गत्वरे ग्रहः ।
सत्त्वोपकारस्त्वेतस्मादेकः प्राज्ञस्य शस्यते ॥४१॥
तदिमा वयमेतस्मिन्निसर्गसुखसद्मनि ।
श्मशाने प्राणिनामर्थे विन्यस्याम शरीरकम् ॥४२॥
इत्युक्त्वा परिवारं ताः सप्तराजकुमारिकाः ।
तथैव चक्रुः प्रापुश्च समृद्धिं परमां ततः ॥४३॥
एवं निजे शरीरेऽपि ममत्वं नास्ति धीमताम् ।
किं पुनः सुतदारादिपरिग्रहतृणोत्करे ॥४४॥

Thus the king departed, and though the hermit's limbs were gashed, he remained free from wrath; whereupon a certain deity appeared and said to him, "Great-souled one, if you approve, I will slay by my power that wicked man who did this to you in a passion." When the hermit heard that, he said, "O Goddess, say not so, for he is my helper in virtue, not a harmer of me. For by his favour I have attained the grace of forgiveness; to whom could I have shown forgiveness, O Goddess, if he had not acted thus towards me? What anger does the wise man show

for the sake of this perishing body? To show patience equally with regard to what is agreeable and what is disgreeable is to have attained the rank of Brahmā." When the hermit said this to the deity, she was pleased, and after healing the wounds in his limbs, she disappeared.

[ सर्वथा सप्तकुमारीणामेतच्चरितं नानुकरणमर्हति। स्त्रियो हि भावावेगेन कार्यमनुतिष्ठन्ति, सर्वदा कर्मणां युक्तायुक्तत्वं न विचारयन्ति। सर्वमत्यन्तगर्हितम् इति महाजनवाक्यमपि न विस्मरणीयम्। कर्मभूमिमिमामनुप्राप्य विहितं कर्मास्माभिरनुष्ठेयम्, न पुनर्यथेच्छं भावावेशविवशैरात्मा रागाग्नौ होतव्यः। बहोः कालात् पूर्वमाङ्ग्लयाप्येकया महिलया दयापरवशया भेषजविद्यामधिजिगांसूनामुपकाराय मृत्योरूर्ध्वं स्वीया तनूः शवव्यवच्छेदकैश्छात्रैर्ग्रहीतव्यः इति चरमपत्रे (will) निर्दिष्टम्। एतया तु बुद्धिमत्या मृतं शरीरं प्रसादीकृतम्, सप्तकुमारीभिः पुनर्येषां प्राणिनां कृते विधात्रैव पर्याप्तं भक्षणं विहितं तेषां क्षणिकप्रीत्यर्थं चतुर्वर्गसाधनानि शरीराणि निर्माय समुत्सृष्टानीत्यहो परा काष्ठा निर्विवेकितायाः। अत एवोक्तं भगवता गीताशास्त्रे —

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥ इति।

सर्वथास्माभिः करुणापरैर्भवितव्यं न केवलं स्वात्मसुखार्थं प्रयतितव्यम् इत्येव प्रतिपादयितुमभीष्टमाख्यायिककारेणेति प्रतिभाति। ]

---

## वर्णचिकित्सा

यथा पथ्याशनं शरीराय स्वास्थ्यायोपकल्पते तथा यथावद्वर्णविन्यासो मानसं स्वास्थ्यमुपजनयति। येषां तावद् रक्तस्य

भारो महान् ( high blood pressure ) तेषां कृते भित्त्यादीनि उपबर्हास्तरणादीनि च रक्तवर्णानि स्युः, येषां पुना रक्तस्य भारः स्वल्पस्तेषां कृते सर्वाणीमानि नीलवर्णानि स्युः ।

लोहितो नामानलस्य रुधिरस्य च वर्णः । जीवनं च कार्यं च प्रफुल्लता चोत्साहश्च सर्वमेव वर्णेनानेन बोध्यते । एष च भिषग्भिः प्रबलबलकारकरूपेण समुत्तेजकरूपेण चोपयुज्यते ।

तुषारस्य हृदयं नीलोऽसीमत्वनान्तरीयकः, देशगतं विभुत्वं कालगतमनन्तत्वं चानेन वर्णेन क्रोडीक्रियते । शान्तविमर्शस्य—न पुनस्तप्तवितण्डायाः—फलं यत् सत्यं तस्यैव वर्णो नीलः ।

सूर्यस्य वर्णः पीतः, तस्य च गुणा-औज्ज्वल्यं भास्वरत्वं सजीवत्वं च । एतद्धि मानसस्य तथा स्वास्थ्यसम्पादकं यत् उन्मत्ततायाः प्रतिषेधकरूपेण व्यवह्रियते ।

लोहितपीतयोः संमिश्रणेन सञ्जातो नारङ्गकवर्णः जीवित-स्वास्थ्यसमुत्साहकर्मण्यतादिगुणकः ।

चराचरेऽस्मिञ्जगति हरिदेव समधिकं सन्दृश्यते शान्ततामविक्षुब्धतां जन्मान्तरं चायं संसूचयति । एष चाशामवबोधयति ।

रक्तनीलः (Purple) ऐश्वर्याडम्बर-राजभावादिसूचकः, हरिदिव नील इव चायं शान्ततामापादयति सान्त्वयति च ।

---

## सप्रमोदाङ्गीकारः

रसशालौषधाश्रमतः ( Rasashala Aushadhasrama, Gondal, Kathiawar ) १०८ श्री श्रीचरणतीर्थमहाराजेन प्रणीतानि संस्कृतानि च कतिचन परमोपादेयानि पुस्तकान्यधिगतान्यस्माभिः । स्थानाभावात् सविस्तरं समालोचनमिदानीं न सम्भवति, केवलं संक्षेपेणैतावदुच्यते सर्वाण्येवेमानि पुस्तकानि परमरमणीयान्यवश्यं च संग्राह्याणि सुधीभिरिति ।

# अनुबन्धः ।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अनुबन्ध-शब्दोऽयं बह्वर्थः। यत् किल येन सह सम्बध्यते यस्य वा पश्चात् सम्बध्यते तत् तस्यानुबन्ध इत्युच्यते। कर्मणः फलं कर्मणा साकं सम्बद्धं वर्तते, कर्मणोऽनन्तरं चोपलभ्यते। अत एव कर्मणः फलं तस्यानुबन्ध इत्युच्यते। अत एव रामायणे प्रयोगः—अनुबन्धमजानन्तः कर्मणामविचक्षणाः। शीघ्रमेव विनश्यन्ति यथा त्वं विनशिष्यसि ॥ [ ३।५१।५६ ] इति, महाभारते च, अर्थानारभते बालो नानुबन्धमपेक्षते [ सभा १५।१५ ] इति। ग्रन्थस्य प्रतिपाद्येन साकं प्रयोजनादिकं नित्यसम्बद्धं वर्तते, अत एव विषयप्रयोजनाभिधेयसम्बन्धा अनुबन्धचतुष्टयमिति व्यपदिश्यन्ते। ज्वरादीनामनुपदं ये कासादिदोषाः प्रादुर्भवन्ति तेऽपि ज्वरादीनामनुबन्धा इत्युच्यन्ते। व्याकरणे च प्रकृतिप्रत्यया-गमादेशादीनाम् आदावन्ते मध्ये वा सन्निविष्टा वर्णा अनुबन्ध शब्देनोच्यन्ते। अनुशब्दः पश्चादर्थे प्रसिद्धः, अत एव प्रकृति-प्रत्ययादीनामन्त एव प्रायेणानुबन्धा आसज्यन्ते। सहार्थेऽप्यनु-शब्दस्य प्रयोग उपलभ्यते, भगवता पाणिनिनापि तृतीयार्थे [१।४।८५] इति सूत्रेणानोः कर्मप्रवचनीयत्वं विदधानेनानु-शब्दस्य सहार्थत्वं समर्थितम्। अत एव प्रकृतिप्रत्ययादीनां पुरस्तादप्यन्तरान्तरा अनुबन्धा उपलभ्यन्ते। अत एव भारविणोक्तम्—प्रकृतिप्रत्यययोरिवानुबन्धः [ १३।१९ ] इति। क्षीरस्वामिनामरकोषव्याख्यान उक्तम्—प्रकृतिप्रत्ययागमादेशानां यः कार्यार्थमासज्यते विनश्वर उच्चरितप्रध्वंसी सोऽनुबन्ध इति।

ये तावद्वर्णा अनुबन्धत्वेन विनियुक्ता व्याकरणेषु तेषामासञ्जने

 

कारणविशेषः समस्ति वा, यत्किञ्चिदेव वर्णमशोकवनिकान्यायेना-सक्तं वा इति साम्प्रतं विचारपदवीमवतरति ।

यद्यपि टीकाकृतः प्रायेणानुबन्धगतवर्णविशेषाणां विषये मूकीभावमेवावलम्बन्ते तथापि सूत्रवार्त्तिकभाष्यादिपर्यालोचनेनानु-बन्धत्वेनासक्तानां वर्णानामुपादाने कारणान्यनायासेनोहितुं शक्यन्ते। तथाहि "तित् स्वरितम्" [ ६।१।१८५ ] इति सूत्रे स्वरितत्वबोध-नार्थं तकारोऽनुबन्धतयासज्यते इति स्मर्यते। अत्र च स्वरितशब्द-स्यान्तिमाक्षरगत एव तकारोऽनुबध्यते इति स्फुटमेव प्रतीयते। एवमेव "तपरस्तत्कालस्य" [१।१।७०] इति सूत्रतो विस्पष्टमेवाव-गम्यते "तत्कालस्य"-शब्दे तकारद्वयसद्भावादेवोच्चार्यमाणस्य तुल्यकालस्वरबोधनाय स्वरस्तपरः क्रियते ।

एवं "स्वं रूपं शब्दस्याशब्दसंज्ञा" [१।१।६८] इति सूत्रगत-वार्त्तिकचतुष्टय-तद्भाष्यपर्यालोचनेनाप्येतदेव विस्पष्टतरं प्रतीयते। तथाहि तत्रत्यानि वार्त्तिकानि सभाष्याणि यथा—

"सित् तद्विशेषाणां वृक्षाद्यर्थम् ॥ ५ ॥

सिन्निर्देशः कर्तव्यः। ततो वक्तव्यं तद्विशेषाणां ग्रहणं भवतीति। किं प्रयोजनम् ?

वृक्षाद्यर्थम्। "विभाषा वृक्षमृग—" [२।४।१२] इति। प्लक्ष-न्यग्रोधम्। प्लक्ष-न्यग्रोधाः।

पित् पर्यायवचनस्य च स्वाद्यर्थम् ॥ ६ ॥

पिन्निर्देशः कर्तव्यः। ततो वक्तव्यं पर्यायवचनस्य च तद्वि-शेषाणां च ग्रहणं भवति स्वस्य च रूपस्येति।

किं प्रयोजनम् ?

स्वाद्यर्थम्। "स्वे पुषः" [३।४।४०]। स्वपोषं पुष्यति। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्।

जित् पर्यायवचनस्यैव राजाद्यर्थम् ॥ ९ ॥

जिन्निर्देशः कर्तव्यः। ततो वक्तव्यं—पर्यायवचनस्यैव ग्रहणं भवति।

किं प्रयोजनम् ?

राजाद्यर्थम्। "सभा राजामनुष्यपूर्वा" [२।४।२३]। इनसभम्। ईश्वरसभम्। तस्यैव न भवति—राजसभा। तद्विशेषाणां च न भवति—पुष्यमित्रसभा। चन्द्रगुप्तसभा।

झित् तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ॥ ८ ॥

झिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—तस्य च ग्रहणं भवति तद्विशेषाणां चेति।

किं प्रयोजनम् ?

मत्स्याद्यर्थम्। "पक्षिमत्स्यमृगान् हन्ति" [४।४।३५]। मात्स्यकः। तद्विशेषाणाम्—शाफरिकः। शाकुलिकः। पर्यायवचनानां न भवति—अजिह्मान् हन्ति, अनिमिषान् हन्तीति। अस्यैकस्य पर्यायवचनस्येष्यते—मीनान् हन्ति मैनिकः।" इति।

अत्र वृक्षशब्दस्यान्त्याक्षरे सकारो वर्तत इति वृक्षाद्यर्थं सिन्निर्देशो वार्त्तिककृता कर्तव्यतयोच्यते, "स्वे पुषः" इति सूत्रे स्वपोषं पुष्यतीत्यादिषूदाहरणेषु च पकारस्य जाज्वल्यमानत्वात् पर्यायवचनस्य तद्विशेषाणां च ग्रहणार्थं पिन्निर्देशः कर्तव्यः, राजन्-शब्दे जकारो वर्तत इति राजाद्यर्थं जिन्निर्देशः कर्तव्य इत्युक्तम्, मत्स्य-शब्दस्य पर्यायभूते झष-शब्दे झकारो वर्तत इति मत्स्याद्यर्थं झिन्निर्देशः कर्तव्य इत्युक्तम्।

एवञ्च "झोऽन्तः" [७।१।३] इति सूत्रस्य बीजमपि प्रकटीभवति। अत्र झषशब्दाज् झकारो गृहीतः, तस्य स्थाने मत्स्य-शब्दस्य अतः मीनशब्दस्य च नकारस्य योगेन अन्तः सञ्जात इति प्रतीयते।

महर्षिणाद्युदात्तत्वबोधनार्थं नकारः अन्तोदात्तत्वबोधनार्थं च चकारोऽनुबन्धतयासक्तः। "पुरस्तादुपाचारस्तस्य यः प्रतिषेधति" इति वचनेन महर्षिर्यास्को निषेधार्थकस्य नकारस्य पूर्वत्रावस्थानमवबोधयति, समुच्चयार्थस्य च चकारस्य समुच्चितपदानामन्तेऽवस्थितिः प्रसिद्धैव। अत एवाद्युदात्तत्वं नित्त्वेन बोध्यते, अन्तोदात्तत्वं च चित्त्वेन।

यच्च "उपोत्तमं रिति" [६।१।२१७] इति सूत्रेण रित्-प्रत्ययस्योपोत्तमस्योदात्तत्वं विहितं तत्रापि रेफस्योपोत्तमशिवसूत्रगतत्वं हेतुरिति विभाव्यम्। "रलयोरभेद" इति मतमनुसृत्य "लिति" [६।१।१९३] इति सूत्रेण प्रत्ययात् पूर्वस्योदात्तत्वबोधनाय लकारोऽनुबन्धरूपेणासज्यते।

Words used in the Aṣṭādhyāyī are to be taken to indicate their particular forms except in the case of technical terms of grammar. Thus when Pāṇini says : अग्नेर्ढक् iv. 2. 33, we are to understand that the taddhita suffix *ḍhak* is to be added to the word *agni* alone and not to its synonyms like *anala*, *vahni* etc. In the case of technical terms of grammar, however, we have to understand not the *form* of the word, but its contents. Thus when Pāṇini says उपसर्गे घोः किः iii. 3. 92, we are to understand that the primary suffix *ki* is added to the roots *dā* and *dhā* when they are preceded by an upasarga. Here by *ghu* we are to understand the roots *dā* and *dhā*, as *ghu* is a technical term of grammar ( दाधा घ्वदाप् i. 1. 20).

Kātyāyana says that this general rule is subject to several reservations. In the first place we must say, that when a particular word has an indicatory *s*, it will denote not itself but its species. This is necessary for the rule

* वृक्षादौ तद्विशेषाणां स्वे पर्याय-विशेषयोः।
पर्यायस्यैव राजादौ मत्स्यादौ तद्-विशेषयोः॥ प्रक्रियाकौमुदी।

*vibhāshā vṛksha mṛga* etc. which lays down that words denoting particular trees, deer etc. form samāhāra dvandvas, *e. g.* प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः . Here for 'vṛkṣa' we should write 'vṛkṣas', for 'plakṣa' 'plakṣas' and so on, as otherwise the word 'vṛkṣa' would form samāhāra dvandva with 'plakṣa' and so on acc. to स्वं रूपं शब्दस्याशब्दसंज्ञा.

Here Kātyāyana suggests the anubandha *s* because it is contained in the last syllable of the words vṛkṣa, plakṣa etc.

Then we should add an indicatory *p* in certain cases and lay down that when an indicatory *p* is added to a word we are to understand that particular word as well as it synonyms. This is necessary for the rule स्वे पुषः which means literally that the root *push* admits the primary suffix *ṇamul* when it is preceded by the upapada (auxiliary word) *sva* ; e. g., svapoṣam puṣyati. But the rule is applicable not only in the case of sva, but also to all synonyms of 'sva' like rai, dhana, aśva, go, etc. So we should say "svapi puṣaḥ' instead of 'sve puṣaḥ.'

Here the indicatory letter suggested is *p* for the simple reason that the root *pus* with which alone we are concerned begins with this particular letter.

Thirdly, Kātyāyana says : The rule "sabhā rājāmanuṣyapūrvā" lays down that the word *sabhā* at the end of a ṣaṣṭhī tatpuruṣa compound becomes neuter, when it is preceded by the word *rājan* or *amanushya.* Now we know that sabhā at the end of a tatpuruṣa compound is changed into the neuter when it is preceded not by the word *rājan*, or by words denoting particular kings, but by the synonyms of *rājan*. Therefore we have to lay down that when a word has an indicatory *j* it denotes only its synonyms and not itself nor its species. And for "sabhā rājāmanuṣyapūrva" we should read "sabhā rājāmanuṣyapūrvā",

Here Kātyāyana hits upon *j* as the indicatory letter, because it occurs so prominently in the word "rājan" with which the rule deals.

Lastly, Kātyāyana says, we should lay down that when a word has an indicatory *jha*, it denotes both itself and its species. This is necessary for the rule "pakṣi-matsya-mṛgān hanti" which means the secondary suffix *ṭhak* is added to the words 'pakṣin,' 'matsya' and 'mṛga' in the sense of 'hanti.' But we have not only matsyān hanti mātsyikaḥ, but also śapharān hanti śāpharikaḥ, śakulān hanti śākulikaḥ. And the rule is not applicable to synonyms of 'matsya'. Thus we cannot have a taddhitānta word for 'ajihmān hanti' and 'animiṣān hanti', though 'ajihma' and 'animiṣa' are synonyms of 'matsya'. So instead of 'pakṣi-mātsya-mṛgān hanti' we should say "pakṣi-matsyajh-mṛgān hanti".

It will be noticed that the indicatory letter here is *jh*, the initial letter of 'jhaṣa' which is a synonym of 'matsya' with which alone we are concerned in this rule.

[In the case of 'matsya' the Bhāṣyakāra goes a step farther than the Vārttikakāra and says that in this one case, the suffix is added to its synonyms also. Thus from 'mīna', a synonym of 'matsya' we get "mainika' in the sense of 'he kills mīnas or fishes'.]

This last vārttika gives us an inkling into the working of Pāṇini's mind when he framed the rule "jho'ntaḥ". Here he evidently had in his mind the three words jhaṣa, mīna and matsya. He took the *jha* of *jhaṣa*, *at* of *matsya* and *n* of *mīna*.

Similarly Pāṇini uses the anubandhas *n* and *c* to indicate accent on the first syllable and last syllable respectively, because the negative particle *na* generally comes at the beginning and the conjunctive particle *ca* is generally placed after the last of the words it joins. Again Pāṇini uses the

anubandha *r* to indicate the acute on the penult, probably because *r* occurs at the end of the penultimate S'ivasūtra. And since *r* and *l* are often interchangeable, *l* also indicates that the syllable preceding the suffix will be accented.

---

## भ्रातृव्यः

[ Prof. Louis Renou ]

मम मतेन भ्रातृव्य-शब्दस्य प्राथमिकोऽर्थः भ्रातेव, भ्रातृकल्पः ( quasi-brother ), यथा पितृव्यशब्दस्य प्राथमिकोऽर्थः पितेव, पितृकल्पः ( quasi-father ) इति। Wackernagel-महोदयस्यापीदमेवाभिमतम् ( Festschrift Andreas, पृ: १ )। व्यप्रत्ययान्तमिदमेव पदद्वितयं प्रामाणिकम्। कौशीतकिसूत्रे (३५।१६) यत् भ्रातृव्य-पदमुपलभ्यते तत् Caland-महोदयस्य संशोधनम्। शरव्य-शब्दस्य शरुशब्द-निष्पन्नत्वे लेशतोऽपि संशयो नास्ति। महाभाष्यतो यो हृदय्य-शब्द उद्ध्रियते तस्यापि मूलं हृदशब्द-समानार्थको हृदुशब्द एव।

व्यप्रत्ययस्य वकारः इवप्रत्ययस्य तुल्यार्थक-वत्प्रत्ययस्य सनाभिः, स च सादृश्यमेव द्योतयति। सौन्दरनन्दे* [१।२०] भ्रातृव्य-शब्दोऽर्धभ्रात्रर्थे प्रयुक्तो द्रष्टव्यः।

भ्रातृवाचको भ्रातृसदृशवाचको वा शब्दो ज्ञातिभ्रात्रादिकं ( cousin ) बोधयेदित्यत्र किमिवाश्चर्यम्। अस्माकं फरासीस-भाषायामपि frère germane (, लाटिन frater germanus ) शब्द उपलभ्यते, आङ्ग्लभाषायामपि cousin germane दृश्यते।

---

* "अर्हरूपा ह्यनर्हस्य महात्मनश्चलात्मनः।
प्राज्ञाः प्रज्ञाविमुक्तस्य भ्रातृव्यस्य यवीयसः॥"
अत्र भरतो रामादीनां भ्रातृव्यत्वेन व्यपदिष्टः

मूलत एतद्द्वयस्यार्थः—परमार्थत एव भ्राता, ततश्च ज्ञातिभ्रात्रादिरित्यर्थः सञ्जातः। लाटिनभाषागत consobrinus-शब्दः* ( यः किल फरासीस-प्रभृति-पाश्चात्यभाषासु cousin-रूपेणेदानीमपि दृष्टिपथमुपयाति ) soror-( स्वसृ )-शब्दत एव निष्पन्नः। अत एव भ्रातृव्य-शब्दस्य भ्रातृकल्पार्थाभ्युपगमे लेशतोऽपि प्रतिबन्धको नास्ति।

---

# पारसीकानां मन्त्ररत्नानि

[ Prof. I. J. S. Taraporevala ]

इरानीय-पुरातन-श्लोकेष्विदं प्रार्थनात्रितयमेव प्राचीनतमम्। एते मन्त्राः पवित्राश्च पावनाश्च मङ्गल्याश्चेति सर्वेषामिरानीयानां सम्मतम्। वेन्दिदाद्-ग्रन्थतोऽवगम्यते दुष्टैरसुरैः साकं युध्यमानेन ज़रथुशत्रेण प्राथमिको मन्त्रः प्रयुक्तः। यथावर्णाक्षरमात्रं यथास्वरं सम्यगर्थावबोधपुरःसरं मन्त्रस्यास्य समुच्चारणं निखिलस्यावेस्ताग्रन्थपाठस्य समानफलकमिति सम्प्रदायः। इदानीमपि पारसीका आपद्ग्रस्ता "यथा तारी मदद" [ यथा, तव साहायकम् ] इति वदन्ति। यथानभिज्ञशिरोमणिनापि ब्राह्मणेन गायत्रीमन्त्रोऽवश्यमेव पाठ्यश्च बोध्यश्च, एवं मूर्खतमेनापि पारसीकेन मन्त्रोऽय-

---

* Con-sobrīnus-शब्दे con-शब्दो मेलनार्थकः, sobrinus शब्दो मूलतः swesrīnos, संस्कृते *स्वस्रीणः, स्वसुः पुत्रः। प्रथमतः मातुः स्वसुः पुत्र एव consobrinus शब्देन बोध्यते स्म, ततश्चास्य सामान्येन भ्रातुर्वा स्वसुर्वा पुत्रः इत्यर्थः सञ्जातः। आङ्लभाषायां पितृव्यस्य वा मातृष्वसुर्वा पितृष्वसुर्वा पुत्रो वा दुहिता वा first cousin अथवा cousin german इति व्यपदिश्यते। German-शब्दस्यार्थः तुल्यमातापितृकः, तुल्यमातामहपितामह इति। मञ्जूषा-सम्पादकः।

मवश्यमेव विज्ञेयः। यद्यपि द्वितीयमन्त्रस्य माहात्म्यं प्रथममन्त्रस्य समशीर्षिकां नारोहति तथापि आवेस्तागतमन्त्रं स्वयमेव सर्वाधिकतया प्रयुज्यते। वैदिकऋतार्थकः अय एव ज़रथुश्त्रानुशासनस्य मूलमन्त्रः। कायेन मनसा वाचा साधुत्वं, धार्मिकत्वं न्यायपरत्वमित्येवास्यार्थः।

( १ ) यथा अहू वइर्यो।

यथा अहू वइर्यो अथा रतुश् अषात् चीत् हचा
वङ्हेउश् दज़्दा मनङ्हो श्यओथननांम् अङ्हेउश् मज़्दाइ
क्षथ्रेम्-चा अहुराइआ यीम् द्रिगुब्यो ददत् वास्तारेम्।

अक्षरानुवादः

यथा असुः वर्यो अथा रतुः ऋतात् चित् सचा
वसोः दत्ता मनसः चौत्नानाम् असोः मेधाय
क्षत्रं च असुराया यम् दरिद्रेभ्यो ददत् पालयितारम्।

Just as (yaθā) a Ruler (ahū) [is] all-powerful (vairyo) [among men] so (aθā) [too is] the Spiritual-Teacher (ratuš) even (cit) by reason of (hacā) his Righteousness (aṣāt); the gifts (dazdā) of Good (vaṅheuš) Mind (manaṅho) [are] for [those] working (syaoθananām) for the Lord (Mazdāi) of Life (aṅhəuš); and-the-strength (xṣaθrəm-cā) of Ahura (Ahurāi) [is given] unto (ā) [him] who (yīm) unto [his] poor (drigubyo) [brothers] giveth (dadat) help (vāstārəm).

( २ ) अषेम् वोहू।

अषेम् वोहू वहिश्तेम् अस्ती, उश्ता अस्ती
उश्ता अह्माइ ह्यत् अषाइ वहिश्ताइ अषेम्।

अक्षरानुवादः

ऋतं वसु वसिष्ठमस्ति, उष्ट अस्ति
उष्ट अस्मै यत् ऋताय वसिष्ठाय ऋतम्।

Aṣa (Aṣəm) is (astī) the highes't (vahistem) good (vohū), [it alone] is (astī) [true] happiness (us´tā) ; happiness (us´tā) [is] for him (ahmāi) [alone] who (hyat) [is] righteous (aṣəm) for [the sake of] the highest (vahis´tāi) Aṣa (aṣəm).

( ३ ) येङ्हे हातांम् ।

येङ्हे हातांम् आअत् येस्ने पइती वङ्हो
मज़्दाओ अहुरो वएथा अषात् हचा
याओङ्हांम्-चा तांस्-चा ता-ओस्-चा यज़मइदे ।

अक्षरानुवादः

यस्य सताम् आत् यज्ञे प्रति वस्यः
मेधाः असुरो वेद ऋतात् सचा
यासां च तांश्च ताश्च यजामहे ॥

[That man] among those-that-are (hātām), of whom (yeṅhe) Mazda (Mazdāo) Ahura (Ahuro) through (hacā) [his] Righteousness (aṣāt) knoweth (vaeθā) [that he] verily (āat) [is] better (vaṅhō) as regards (paitī) acts of worship (yesne)— [and those women] too (cā) of whom (yāoṅhām) [Mazda Ahura knoweth likewise ]—all such, both men and women (tāṁs-cā, tāos-cā) [do] we revere (yazamaide).

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कस्मै हितो विवाहोऽत्र कन्यायै वा वराय वा ।
आर्याणां यवनानां च मतभेदो निरूप्यते ॥

अध्यापकः । वत्स समञ्जस ! शतकृत्वः सहस्रकृत्वो लक्षकृत्वः कोटिकृत्वश्च मया भवद्भ्यो व्याख्यातम् उपपूर्वो यमधातुर्विवाहार्थे आत्मनेपदी भवति, तथापि किमिति प्रतिवारमेव परस्मैपदमुपास्यते त्वया ।

समञ्जसः। अयं केन सूत्रेणात्रात्मनेपदं विहितं वैयाकरणेन ?

अध्यापकः। किं न स्मर्यते श्रीमता—"उपाद् यमः स्वकरणे" इति पाणिनीयं सूत्रम्, "उपयमो विवाहे" इति च वोपदेवीयो योगः ?

समञ्जसः। भगवन्, सूत्रन्तु स्मर्यत एव। कृपया सूत्रकारस्याशयो विव्रियताम्।

अध्यापकः। वत्स, यमधातोरर्थो धारणम्, नियन्त्रणम्। ग्रीक्-भाषायां नियन्त्रणार्थके अर्थात् शास्त्यर्थके zemia-शब्देऽप्ययमेव धातुर्जागर्ति। उपोपसर्गस्यार्थ आभिमुख्यम्। ग्रीक्-हुपो-शब्दो लाटिन् s-ub शब्दश्चास्यैव रूपान्तरम्। एवञ्च उपपूर्वस्य यमधातोरर्थः—स्वाभिमुखे नियन्त्रणम्, पत्नीत्वेन परिग्रहः। न खलु पत्न्या उपकाराय पत्नी स्वीक्रियते, आत्मन एवोपकाराय दाराः परिगृह्यन्ते, "सस्त्रीको धर्ममाचरेत्" इति च जागर्ति शास्त्रानुशासनम्। अत एव "न वा अरे पत्युः कामाय पतिः प्रियो भवति, आत्मनस्तु कामाय पतिः प्रियो भवति। न वा अरे जायायै कामाय जाया प्रिया भवति, आत्मनस्तु कामाय जाया प्रिया भवति" [बृहदारण्यकोपनिषत् २।४।५] इति च भगवती श्रुतिरेव प्राह। अत एव वैज्ञानिक्यां संस्कृतभाषायाम् उपपूर्वस्य यमधातोर्विवाहार्थे आत्मनेपद एव प्रयोगो व्यवस्थितः।

समञ्जसः। भगवन्! स्त्रीणामन्या गतिर्नास्ति इति विवाहेन स्त्रीणां स्वात्मन एवोपकारो भवतीति भवतु नाम स्त्रीकर्तृकादुपयमेर्विवाहार्थकादात्मनेपदम्, पुरुषाणां पुनः स्वैराचाराणां सर्वथा परस्मैपदमेव युज्यते। अत एव ग्रीक्भाषायामुपयमनार्थक-गम्-धातोः पुरुषकर्तृकत्वे परस्मैपदं ( gamō tina ) नारीकर्तृकत्वे चात्मनेपदं (gamoumai tini) सन्दृश्यते। यवनानां हि परोपकारायैव विवाहे प्रवृत्तिर्भवति, न पुनरात्मनो हिताय। यवनस्त्रीणां पुनः

स्वकार्यसाधनैकपराणां स्वहितानुध्यानेनैव विवाहे प्रवृत्तिर्भवति, अत एव आत्मनेपदं सुसमीचीनम्। अस्माभिरिदानीं स्वाधीने भारते सर्वथा व्याकरणादिनिगडेभ्यो मोचित आत्मा, अत एव पाणिन्यादिषु श्रद्धाजाड्यं परिहाय यदेव युक्तियुक्तं प्रतिभाति तदेवानुस्रियते। अत एव मयात्र परस्मैपदप्रयोग उपासितः।

अध्यापकः। वत्स, न खलु मया यवनानां भाषा समधिगता परं यच्छ्रीमतोच्यते तच्चेत् सत्यं तर्ह्यस्माकमेव समाजव्यवस्था समीचीनतरा, अस्माकमेव शब्दप्रयोगः शोभनतर इत्यवश्यमेवाभ्युपगन्तव्यम्। इदानीन्तनास्तरुणा मन्यन्ते स्त्रिय उपयस्य तासां पितृपितामहादींश्चतुर्दशपुरुषान् रौरवाद् घोरात् समुद्धराम इति। एतत्तु व्यामोहस्य विजृम्भितमिति पृथग् वक्तुं नावश्यकम्। संसारयात्रानिर्वाहो यथा पुरुषेषु तथा स्त्रीष्वप्यायतते, अत एव विवाहः स्त्रीणां वा भवतु पुरुषाणां वा भवतु संस्कारत्वेन निरूपितो मनस्विभिः संस्कारस्तावदात्मन एव गुणाधानम्, अत एव विवाहार्थकस्योपयमेरात्मनेपदित्वमेव सर्वथा समीचीनम्।

प्रयोगश्चायं "पाश्चात्यदेशेष्वेव नार्यो बहुमानपात्रतामासादयन्ति, प्राच्येषु ता दासीनिर्विशेषमेव दृश्यन्ते" इत्यनभिज्ञजनप्रलपितानामपि मूले कुठारमर्पयति।

---

## पुस्तक-परिचयः

**Technical Terms and Technique of Sanskrit Grammar** by Dr. Kshitish Chandra Sastri, M. A., D. Litt. (Vishwanath Chatterjee, 81 Shyambazar Street, Calcutta 4.): मूल्यं रूप्यकदशकम्।

इह निरुक्तेः प्रातिशाख्येषु पाणिनिप्रमुखाणां च वैयाकरणानां ग्रन्थे-

ऽन्तरान्तरा समुपलभ्यन्ते संज्ञाशब्दा ये सत्यापातदृष्ट्या सर्वथार्थ-विरहिता इव प्रतिभासन्ते। तथाहि बाल्ये यदास्माभिर्विद्यालये निम्नश्रेण्यामधीतं तदा छात्रेणैकेन संस्कृताध्यापकः पृष्टः किमिति लट् शब्देन वर्त्तमानकालो व्यपदिश्यते? सर्वथा प्रयतमानेनापि केनापि लट् शब्दस्य कोऽप्यर्थः समुद्भावयितुं न प्राभावि, न वा कदापि प्रभविष्यते इति।

प्रश्नश्रवणसमनन्तरमेवाध्यापकमहोदयस्य वदनकमलाद्विनिर्गतानि सुसंस्कृतानि गालिसहस्राणि। ततश्च कथञ्चित् प्रकृतिमापन्नेनाध्यापकेनोक्तम्, अरे रे चोर मलिम्लुच जाल्म, किं न जानासि त्वं पाणिनेरिच्छैवात्र नियामिका। पाणिनिना लट् शब्देन वर्त्तमानकालो बोधयितुमिष्यते, अत एव लट्-शब्दस्य वर्तमानकालार्थता सम्पन्ना। किं चात्रापरमपेक्ष्यते। किं नास्ति ते श्रद्धालेशोऽपि मुनिप्रवरे पाणिनौ येनैवं प्रलपसि। पाणिनिना चेन्महर्षिणा लटो ढुमघड़ाम् इति संज्ञा व्यधास्यत, क्रोरेट् अफ् पटाश् इति वा सैव सर्वैः शिरःस्वधारयिष्यत। रे अनात्मज्ञ, पुनश्चेत् कदाप्येवमसम्बद्धं प्रलपिष्यसि, गरीयांसं दण्डं त्वयि पातयिष्यामीति। अनया रीत्या प्रबलप्रतापेनाध्यापकेन छात्रस्य तदानीं मुखमुद्रणं विहितम्। बहोः कालादनन्तरं प्रौढभावं भजतामस्माकं मनसि पुनरेव सतीर्थ्यस्य प्रश्नेन कृतं पदम्। किमिति सत्स्वप्यनन्तेषु सार्थकेषु शब्देषु, निरर्थकेषु लडादिशब्देष्वेव महर्षेर्बहुमान इति। तदानीं भूतपूर्वस्याध्यापकमहोदयस्य भ्रूकुटिकुटिलं मुखमण्डलं स्मृतिपथमधिरूढं हासमेव समजनयत्। ततश्च निरन्तरमननबलेन प्रायेण सर्वेषामेव संज्ञाशब्दानां टि-घु-भादीनां कृत्रिमाणां नदी-कारकोपसर्ग-प्रातिपदिक--सर्वनामस्थान—कर्मप्रवचनीयादीनामकृत्रिमाणां च रहस्यमुद्घाटितम्। तच्च Technical Terms and Technique

of Sanskrit Grammar इति पुस्तके विवृतम्। व्याकरणस्य पारिभाषिकशब्दसंयोगेन विनिर्मितानां बहूनां श्लोकानां सन्निवेशेन नीरसतममिमं विषयं सरसतामापादयितुं प्रायतिष्महि। इदानीं पुस्तकमिदं विशेषज्ञानां परितोषकरं चेत् सर्वं नः परिश्रमं सार्थकमाकलयिष्यामः।

## श्रीविक्रमाङ्कमहाराजाधिराज-समुद्रगुप्त-विरचितम् श्रीकृष्णचरितम्।

मूल्यं रूप्यकत्रितयम्।

यद्यपि पुस्तकमिदमामूलान्तं नाधिगतं तथापि यावदधिगतं तावदेव परमोपकारकं विदुषाम्। अत्र पाणिनि-शाङ्खायन-कात्यायन--वररुचि-व्याडि--देवल-पतञ्जलि--भास-वर्धमान-चीनदेव-मिहिरदेव-सुबन्धु-शूद्रक-कालिदास-शूर ( अश्वघोष )-हरिश्चन्द्र-मातृगुप्तावन्तिक-हरिषेणादीनधिकृत्याप्रकाशितचराः श्लोकास्तेषां चातिसमीचीना व्याख्यानविमर्शाः कस्य वा सचेतसश्चेतो नापहरेयुः। अत्र पतञ्जलिमधिकृत्योक्तम्—

विद्ययोद्रिक्तगुणया भूमावमरतां गतः।
पतञ्जलिर्मुनिवरो नमस्यो विदुषां सदा॥
कृतं येन व्याकरणभाष्यं वचनशोधनम्।
धर्मावियुक्ताश्चरके योगा रोगमुषः कृताः॥
महानन्दमयं काव्यं योगदर्शनमद्भुतम्।
योगव्याख्यानभूतं तद्रचितं चित्तदोषहम्॥

इति। अत्र प्रचलितमतमनुवर्तमानेन कविना योगसूत्रकर्त्तुर्महाभाष्यकर्त्तुश्चरकसंहिताकर्त्तुश्चैक्यं प्रतिपादितम्। यथा योगसूत्रकारो महाभाष्यकृतोऽन्य एव तथा प्रतिपादितमस्माभिः "प्रामाणिकप्रवरः पतञ्जलिः" इति प्रबन्धे ( मञ्जूषा, चतुर्थवर्षम् पृः १६८ )। चरकसंहिताविषयेऽपि नचिरात् किमपि विलेखिष्यते। अवश्यं

संग्राह्यमिदं पुस्तकं रसिकानां च प्रत्नतत्त्वानुशीलनपराणां च। रसशाला औषधाश्रमम्, गोन्दाल, सौराष्ट्र इत्यतो लभ्यम्।

**Experiments with Horoscopes** [ Part I. ] by Horaratna R. G. Sapre. Double Crown 50 pp. Price Rupees Five. Rahuri, Dt. Ahmednagar इत्यतो ग्रन्थकारस्य सकाशाल्लभ्यम्।

क्षुद्रे ऽस्मिन् ग्रन्थे ज्योतिर्विद्यानिष्णातेन ग्रन्थकृतोदाहरणमुखेन कतिचिद् भावफलानि विचारितानि। प्रथमतः दशमभावस्थशनेः फलम्, ततश्च दशमभावगतगुरोः फलम्, ततश्च शनेः सप्तमे इउरेनास्ग्रहावस्थितिफलम्, ततश्च स्वप्रयत्नेनाधिगतसमुन्नतिकस्य राशिचक्रम्, ततश्च दशमस्थयोः शनैश्चरेयुरेनसोः फलम्, अन्ते च ग्रहाणां दृष्टिफलम्—एवं षण्णां जातकानां राशिचक्रानुसारेण विचारितम्। प्रसङ्गक्रमेण गोचरफलान्यपि विचारितानि। प्रायेण Alan Leo महोदयस्य मतेनैव विचाराः प्रवर्तिताः, सुचिरं शास्त्रानुशीलनफलेन ग्रन्थकृता स्वयं यदुपलब्धम्, तदप्यत्र सन्निविष्टम्। सर्वथोपकारकमिदमाङ्लभाषामयं पुस्तकं ज्योतिःशास्त्रानुरागिणाम्। यद्यपि मूल्यमस्यात्यधिकमिति प्रतिभाति, तथापि ग्राहकैरस्य प्रथमखण्डस्य कृते समधिकं द्रव्यं वितीर्य्यताम्, उत्तरखण्डानि पुनरतीव स्वल्पमूल्येन लप्स्यन्ते इति ग्रन्थकृता प्रतिश्रुतम्।

---

## हिन्दुधर्मस्य कुत्साकीर्त्तनम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

प्रियवाचकमहाभागाः, इंराजशासनस्यावसानसमये कतिभिश्चिद्भेदनातिकुशलैराङ्लैरिमे हिन्दव एवास्माकं साम्राज्यसमुच्छेदस्य मूलमिति प्रतियद्भिः स्वदेश विदेशेषु च हिन्दुधर्मस्य कुत्साकीर्तने

सहस्रमुखत्वमात्मनः प्रादुष्कृतम्। निमज्जनोन्मुखो जनः कुशं काशं वावलम्ब्यात्मानं रक्षितुं प्रयतते, रक्षणोपायमलभमानश्च स्वात्मना साकमपरानपि निमज्ज्य सान्त्वनमधिगच्छति, अत इंरेजानाममीषामाचरणं सर्वथा गर्हितमपि नाश्चर्यकरम्, एतत्त्वतीवाश्चर्यकरम्, यदस्मद्देशीयैः पुरुषप्रकाण्डैरेतस्य प्रतीकाराय न लेशतोऽपि प्रयास आस्थीयते। इदानीम् इउरोपे आमेरिकायां च सर्वत्रैव हिन्दूनां न्यक्करणे मोहम्मदीयानां च समुन्नमने प्रयत्नः सन्दृश्यते, यथा भारतं वर्षं सर्वेषां दोषाणामाकरः पाकिस्थानञ्च सर्वेषां गुणानामाधार इति भूतलवासिनां निखिलजनानां द्रढीयसी प्रतीतिः स्यात् तदर्थमेव सर्वात्मना प्रयत्यते बहुभिः। नवप्रकाशिते Chambers's Encyclopaedia-ग्रन्थे Mysticism-प्रबन्धे दृश्यते—

The Platonic belief that the soul alone is the real human being whom death liberates from the 'prison-house' of the body is also found in eastern religions and results in a contempt for the body and an excessive asceticim, or on the other hand, as in Hinduism, in a tendency to low moral standards.

आत्मैव पारमार्थिको मानवः, स च मृत्युना शरीरलक्षणाद् बन्धनागारात् प्रमोच्यते—प्लेतोप्रवर्तितं मतमिदं प्राच्येष्वपि धर्मेषु प्रत्यक्षीक्रियते, एतच्चैकतः शरीरेऽवज्ञामादधाति, निरतिशयं च वैराग्यमुपजनयति, अन्यतः पुनः—यथा हिन्दुधर्मे—नैतिकमानसूत्राणामवनमनप्रवणान् विदधाति जनान् इति।

उपनिषत्सु वा गीतायां वा कस्मिन्नध्यात्मशास्त्रे आत्मनोऽविनश्वरत्वप्रतीतिर्नीतिबन्धनानि श्लथयति, नीतिश्चानुन्नतां विदधाति, जनांश्चाधोगतिप्रवणान् संसाधयति, कृपया प्रदर्श्यतां लेखकमहाभागेन, अन्यथा प्रत्याह्रियतां वचनशल्यमिदमिति सनिर्बन्धं ब्रूमः।

## What Scholars think of the Manjusha.

**Dr Suniti Kumar Chatterji**, M.A., D.LIT. (London) Professor, Calcutta University, writes :

This little paper is unique in many respects. Sanskrit is said to be a dead language in India, but it is not yet as dead as many people think (or as some people would like to think !)...

We have still about half-a-dozen Sanskrit journals in India, apart from fairly frequent addresses and dissertations which are published independently. Among these journals, the *Manjusha* which is probably the only one of its kind appearing *regularly* month after month, has made quite a unique place of its own.

The *Manjusha* is run by Dr. Kshitish Chandra Chatterjee of the University of Calcutta, who is one of our most erudite authorities on the technical and other niceties of Sanskrit grammar. He is a student of languages and, in addition, he handles Sanskrit with ease. It has been his love of Sanskrit that has made him carry on the work of editing and bringing out this paper since its inception by himself....Financially it has been a thankless task. It has brought other disadvantages also—the editing and financing of a journal without much wide appeal because of its language has been a source of worry which has had its repercussions on his health. But he has not given in, because he is an incorrigible optimist when he is convinced his cause is noble. Prof. Chatterjee is quite an institution in himself. Then, he has been able to enlist a number of disinterested colleagues who help him with contributions and who are enthusiasts for Sanskrit like himself. And he himself writes. It is a remarkable thing that although he finds joy in unravelling the intricacies of Sanskrit grammar, he is not in his mental make-up a dry-as-dust grammarian. He has a wonderful sense of humour, supported by an inexhaustible fund of anecdotes and stories which he brings out in racy Sanskrit. So the pages of the *Manjusha* at times sparkle with laughter. Comparative linguistics he brings in frequently in his articles, and this is a remarkable "special feature" of this little paper. Further, it does not confine itself to Sanskrit alone. Proverbs, *Bon-mots*, wise sayings, *Mahavakyas*, etc. from different languages, English, French, German, Latin, etc., are rendered appropriately into Sanskrit, demonstrating the capacity of the language of the Gods to keep pace with turns of expression peculiar to various languages. One can say also that there is an "English Section" to this magazine, devoted as it is entirely to the culture of Sanskrit. Thus, the editor himself is bringing out through this magazine, in instalments, his English translation and commentary on the *Mahabhashya*

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*

of Patanjali which, when completed, will be a valuable contribution to the study of Sanskrit grammar through English.

A journal like this deserves a much wider appreciation which is its due. I think our high school students reading Sanskrit will find much of interest, pleasure and profit in it. I would suggest its being taken in all schools, colleges and universities in India where Sanskrit is taught. Prof. Chatterjee has been able to obtain contributions from eminent Sanskritists not only from all over India but also from abroad and that is no negligible achievement. All power to his elbow for the rehabilitation and the glory of Sanskrit, and for re-establishing its popularity among young Indians of today !

The Madhuravani ( Belgaum ) says :

अस्याः पत्रिकायाः सम्पादकमहाभागाः नैकशास्त्रपारङ्गताः गद्यपद्यरचनासु सिद्धहस्ततया प्रथितयशसः। प्रायः संस्कृतपत्रिकासम्पादकेषु अनधिगतस्थानमाङ्ग्लभाषाप्रभुत्वं प्रकृतसम्पादकेषु कनके मणिरिव पुष्यति प्रकाशविशेषम्, येन पाश्चात्यविद्याभिनिविष्टचेतसामपि संस्कृतानुरागोत्पादनकर्मणि प्रभावमाविष्कुर्युः। इतरसंस्कृतपत्रिकासु अनुपलभ्यमानः कोऽपि पद्धतिविशेषोऽपि समेधयत्येतत्पत्रिकासुषमाम्।... तदेवं गुणविशिष्टा अमौल्यलेखरत्नमञ्जूषायमाणा यथार्थनाम्नी मञ्जूषा विपुलार्थकामैः व्युत्पन्नैः विद्वद्भिश्च अवश्यं संगृह्य स्वार्थं सम्पाद्य सरत्नमञ्जूषाप्रदायकाः सम्पादकाः प्रोत्साहनीयाः सविशेषकार्यक्षमतायाम्। ईदृशे सर्वतः प्रतिकूलसमयेऽपि नियतवेलं प्रकाशमानायाः यथाप्रतिज्ञं विषयभासुरायाः मञ्जूषायाः सम्पादकान् सश्लाघं समभिनन्दामस्तमाम्।

Printed and published by Sri Jyotish Chandra Chatterjee, B. A from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्



५म-वर्षे November, 1950 ३य-संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Principal Contents.



## Next Month

Mahābhāṣya with English notes and translation.

Critical observations on the text of Sāyaṇas Commentary on the Rigveda.

Notable contents of the Oriental Journals of the world.

---

Office : 81 Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign : Rupees Eight.

# मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदश्च सभाष्यो मुद्र्यन्ते।

Several complete sets of Vol. IV of the Manjusha are still available for Rs. 6/- and only a few sets of Vols. I-III are available at Rs. 5/12/- for the lot.

श्रीविश्वनाथ चट्टोपाध्यायः।

८१, श्यामबाजार ष्ट्रीट, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone B. B. 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

November, 1950. | १८७२-शाकीयाग्रहायणस्य ५म-वर्षस्य तृतीय-संख्या | Vol. V No. 3

## आभाणकादि ।

१। सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत् स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ महाभारत ।

Hunger is the best sauce.

(ला)· Fames optimum condimentum.

(व) क्षिदेर चेये टाक्ना नाइ ।

क्षुधाभावेऽमृतं भक्ष्यं विषकल्पं भवेद् यतः ।
क्षुधा चेत् तिक्तममृतं क्षुधैव रुचिकारणम् ॥

२। If a man deceives me once, shame on him; if he deceives me twice, shame on me.

यदि कश्चित् सकृन्मामतिसन्दध्यात् धिक् तम्, यदि कश्चिद् द्विर्मामतिसन्दध्याद् धिङ् माम् ।

३। He who stumbles twice over one stone deserves to break his shin.

यो ह्येकस्यां शिलायां द्विः प्रस्खलति स जङ्घाभङ्गमर्हति।

४। (घ) पड़िले मातङ्ग पङ्के भेके प्रहारय।

मातङ्गं पतितं पङ्के दर्दुरः प्रहरत्यपि।

Hares may pull dead lions by the beard.

शशका अपि मृतान् सिंहान् श्मश्रुषु कर्षेयुः।

(ला) Mortuo leoni et lepores insultant.

५। अधोऽधः पश्यतः कस्य महिमा नोपचीयते।

उपर्युपरि पश्यन्तः सर्व एव दरिद्रति॥

It is comparison that makes men happy or miserable.

---

## सीमा-समस्या।

[ श्रीउपेन्द्रनाथ-गङ्गोपाध्यायः ]

समरेश-चतुर्धुरीणस्तावद् आलिपुरावस्थितस्य पौरधर्माधिकरणस्य समुदीयमानानां व्यवहाराजीवानामन्यतमः। स हि विश्वविद्यालयस्य प्रतिभावांश्छात्र आसीत्। पठनावस्थायामसौ पाठशाला-संसदि (College Union) वुर्जोयासम्प्रदायस्य धनतान्त्रिकतायाः प्रातिकूल्येन वितर्कमुदस्थापयत्, सभासमितिषु निर्यातितानां हृतसर्वस्वानां प्राकृतजनानां (प्रोलेटारियाटानां) पक्षमवलम्ब्य भाषणानि प्रदत्तवान्; वृत्तान्तपत्रादिषु च धनसङ्कट-निराजीवसमस्या-समाजनीतिप्रभृतिकमधिकृत्य प्रबन्धान् विलिखितवान्।

व्यवहाराजीववृत्तिसमालम्बनानन्तरं समयस्य सौकर्यस्य च स्वल्पतया विषयेष्वमीषु तस्य कर्मशीलता यद्यप्यनुदिनं ह्रासमुपैति स्म तथापि व्यवहाराजीववृत्तावपि स्वस्यादर्शस्यानुसरणाय तेन बहु

विचिन्त्याभिनवः कोऽप्युपायः प्रादुष्कृतः। वणिक्श्रमिकयोर्भूस्वामि-प्रजयोः प्रभुभृत्ययोरितरेषां चैव विधानां द्वन्द्वानां विवादे स्वनियोगस्य समागतेऽवसरे स नियमेन श्रमिकप्रजाभृत्यादीनामेव पक्षमवलम्बितवान्, न पुनः कदाप्यपरपक्षस्य वीफं स्वीकृतवान्। बुर्जोयासम्प्रदायस्य प्रातिकूल्येन च संग्रामः सर्वेष्वेव देशेषु युग-युगान्तरतः प्रवृत्तः, तत्रातितुच्छमपि साहायकं कृत्वैव स परितृप्तो वर्तते।

एवं वर्तमानस्य तस्य कर्मणि साफल्येन लाभो वा समधिकः संवृत्तो हानिर्वेति वक्तुं दुष्करम्। अत्र च कारणमेतदेव – कामं धनिकसम्प्रदायस्य व्यवहारतः कियताधनांशेनासौ वञ्चितोऽभवत्, तथापि "निर्यातितस्य सुहृद्" इति ख्यातेः साहायकेन पक्षान्तरे तस्य प्रतिष्ठाधिकाधिकं वर्द्धते स्म। तस्य जनपदाधिकरणिकः ( District Magistrate ) श्वशुरः मिष्टार सेन् ( सेन-महोदयः ) स्वप्रभावप्रतिपत्तिबलेनैकदा तं कस्यचन भूस्वामिधुरीणस्य वृत्तिभुजं व्यवहाराजीवं विधातुं प्रयत्नमकरोत्, परं प्रजानां प्रतिकूले कस्मिन्नपि व्यवहारे स नैवोपस्थास्यते इति कल्पस्य समुत्थापनात् सा व्यवस्था वितथीभूता। भूस्वामिना व्रजेन्द्रनारायणेनोक्तम्, क्षम्यतां तावद् धृष्टता, स्यात्, किं न कल्पोऽयम् 'पुरोहितो भविष्यामि देवपूजनं पुनर्नैव विधास्यामि' इति कल्पमनुहरते? इति। सेनमहोदयो वचनस्यास्य निराकरणाय कमपि पन्थानमन्विष्यापि नालभत इति नैतत् पृथग् वक्तुमावश्यकम्।

समरेशस्यैषा नीतिर्न लेशतोऽपि सहधर्मिण्यै वनलतायै स्वदते स्म। अन्तरान्तरा च तस्यास्तर्कस्य ताडनेन समरेशस्तथाविधं निग्रहस्थानमापादितः यत् किल धर्माधिकरणे प्रतिपक्षस्य कमपि साक्षिणं लम्भयित्वा स नूनं परितोषमध्यगमिष्यत्। समरेशस्य धर्माधिकरणगमनानन्तरमद्य द्विप्रहरे तस्यास्तत्र नयनाय पित्रालया-

च्छकटमागतम्। समग्रं दिवसं पित्रालयेऽतिवाह्य यदा तावद्वनलता प्रत्याववृते, ततोऽनतिपूर्वमेव समरेशेन धर्माधिकरणात् प्रतिनिवृत्तम्। स हि प्रायेणैतावच्छीघ्रं न प्रत्यावर्तते, परं वर्द्धमानदिनोत्सवाय* श्व आरभ्य नवदशदिवसानवकाश इत्यद्य सविशेषं किमपि कृत्यं नासीत्, अतः स निर्दिष्टकालात् पूर्वमेव प्रत्यावृत्तः।

धर्माधिकरणं तावन्निरुद्धम्, अत एव कृत्यकक्षं प्रविश्य व्यवहारसंक्रान्तानि पत्राणि गृहीत्वोपवेशनं नावश्यमपेक्षितमासीत्। सन्ध्यायाः समनन्तरं सभाजनप्रकोष्ठे नीचै रेडिओ प्रचलति स्म, तस्यैव सविधे सोपबर्हमासन्दीद्वयं स्वायत्तीकृत्य समरेशो वनलता चोपविश्य स्थितौ। प्रातर्धर्माधिकरणगमनत्वरया तद्दिवसीयाङ्लवृत्तान्तपत्रे प्रकाशितस्य कौतूहलोद्दीपकस्य प्रबन्धविशेषस्य वाचनं न सम्पन्नम्, इदानीं समरेशः साभिनिवेशं तमेव वाचयति, वनलता चालसान्यमनस्कतया मनसोच्चावचानि चिन्ताजालानि वयति स्म। अवसरे चास्मिन्नवसानात् पूर्वमेव सहसा रेडिओ स्तब्धभावमगमत्।

पत्रिकात आननमुन्नमय्य समरेशोऽवदत्, किमिति निरुद्धम्?

वनलतावदत्, कथमपि न रोचत इदानीमेतत्।

पत्रं टेबिलस्योपरि संस्थाप्य समरेशोऽवदत्, तर्हि कथय तव पितृगृहस्य कथाम्, श्रूयते मया। किमिति सहसाह्वानमागतम्। अपि नाम सविशेषं किमपि प्रयोजनमासीत्?

अनुपदमेव वच्मि सर्वां तां कथाम्। ततः पूर्वं तु किमपि पृच्छामि त्वाम्।

किं तत्?

* Christmas festival.

मुहूर्त्तमात्रं प्रतीक्ष्य, मन्ये वक्तव्यविषयं मनसि सम्यक् सज्जीकृत्य वनलतावदत्, ननु, धनिकत्वमपराधेष्वन्यतमम् इति यद् युष्माभिरुच्यते—

न खलु विषयमिममधिकृत्य तर्कगहने प्रवेशः समरेशस्य लेशतोऽप्यभीष्ट आसीत्, अत एवालोचनामिमां संक्षेपयितुं वनलताया वचनमाक्षिप्य तेनोक्तम्—कामं न सर्वत्र। यत्र यत्रार्थलिप्सा दरिद्रं निपीड़यति, विशोषयति, परिवञ्चयति, तत्र तत्र धनिकत्वमपराध एव।

वनलतावदत्, भवतु। अस्मद्विषये तर्हि त्वं किं वक्ष्यसि? अस्माकमर्थसम्पदो यत् परिमाणं तत् त्वमपराधस्य गोचरे पातयिष्यसि बहिर्वा तस्मात् स्थापयिष्यसि?

मुहूर्त्तमेकं विचिन्त्य समरेशोऽवदत्, यद्येवं स्याद् यद् दरिद्रान् परिवञ्च्य, दरिद्रान् विशोष्य सम्पदो न उत्तिष्ठन्ति, तर्हि वक्ष्यामि गोचरे इति, अन्यथा बहिरिति।

यदि वच्मि दरिद्रान् विशोष्यैवोत्तिष्ठन्तीति, किं तर्हि?

तर्हि, गोचर इति वक्ष्यामि। परं कं वा दरिद्रं विशोष्योत्तिष्ठन्ति तदुच्यताम्।

बहून्। प्रथमतस्तावदाकुलुजमादारस्यैव कथां कथयामि। तेन हि नोटिस् प्रदत्तं न खल्वागामिनो मासादियताल्पीयसा वेतनेन प्रभविष्यामि कर्म कर्त्तुमिति।

कियद् वा वेतनमसौ लभते?

प्रतिमासमेका मुद्रा।

कियद् वा प्रार्थयते?

प्रतिमासं पञ्च मुद्राः।

किञ्चिद्भ्रूकुञ्चनसहकारेण समरेशेनोक्तम्—एकमुद्रातः सपदि

पञ्च मुद्राः। किं वा प्रलपत्याकुलुः। न हि, न हि, न खल्वेतावत्, उभयोर्मध्यगतं यत् किञ्चिद्विधीयताम्।

मध्यगतं कियत्? अर्धतृतीया मुद्रा वा तिस्रो मुद्रा वा?

अर्धतृतीयाभिर्मुद्राभिः कर्म कर्त्तुं न सम्मन्यते चेत् अगतिकतया तिस्र एव।

मुहूर्त्तमात्रं तूष्णीमवस्थाय वनलतावदत्, यथाहं पश्यामि तथाऽदूरपञ्चविंशा एव मुद्राः प्रदेयाः।

प्रतिवर्षमिति वदसि।

अकस्मात् खिलखिलारवेण विहस्य वनलतावदत्, नहि भोः नहि। प्रतिमासं पञ्चविंशतिमुद्रा इति वच्मि।

सकौतुकस्मितवदनः समरेशोऽवदत्, उपहासः प्रवृत्तो मामधिकृत्य।

सहसा वदनं गम्भीरीकृत्य वनलतावदत्, नहि, नहि, न खलूपहसामि। ननु पृच्छामि, कथं वा तेन पञ्चविंशतिमुद्रात्मकं वेतनं न लभ्येत। सर्वत उपकारितमः, सर्वतश्च कठिनतमं कर्म करोत्यसावाकुलुजमादारः। मलस्थानं धावयति, जंलनालीः परिष्करोति, अवकरान् सम्मार्ष्टि, ततश्च मलावर्जनादिकं बहिः प्रक्षिप्य सिक्त्वा सम्मृज्य भवनं सुश्लक्ष्णं समुज्ज्वलं विधायासौ परागच्छति। पाचकेऽस्वस्थे, अहमेव पचेयम्, दासीदासादीनामनागमने वर्तनानि संमृज्याम्, वस्त्राणि धावयेयम्, परम् आकुलुश्चेन्नागच्छति तस्य कर्म दासीदासमपि कर्त्तुं न प्रभवति। दिनद्वितयमनागच्छति तस्मिन् गृहं तावन्मलेन दुर्गन्धेन च नरककुण्डं रोगादीनां च डिपो (निकेतनं) सम्पद्यते। यद् एतावत् कठिनमावश्यकं च कर्माकुलुः करोति, तदर्थम् अपि जानासि कियद्वा तेन लभ्यते? न खलु प्रतिदिनमर्धतृतीया अपि ताम्रमुद्राः। अथच त्वं तावदेकस्मिन्नेव व्यवहारा-

जीवनियोगपत्रे स्वाक्षरीकृत्य निमेषेणैकेन दश मुद्रा लीलयैवार्जयसि। भिषगप्येकस्मिन्नेव स्फोटकेऽस्त्रोपचारं कृत्वा पञ्चसप्तानि शतानि अथवा सहस्रमपि हेलयैवार्जयति। सोऽपि पूयशोणिता-लोडनरूपं मलिनमेव कर्म निर्वर्तयति ननु, परं तस्य मलीमलस्य कर्मणः कृते तस्य मूल्यं न ह्रसति, प्रत्युत विवर्धते। ननु पृच्छामि भिषजम् आकुलस्वान्तरा पार्थक्यस्यायं महासमुद्र इतोऽपि कियन्तं कालं व्यवतिष्ठेतेति।

मुहूर्त्तमिव चिन्तामपदिश्य समरेशोऽवदत्, वक्तुं दुष्करम्, तथापि चिरमनवस्थानमेव युज्यते।

वनलतावदत्, मम पुनर्मतेन, आकल्पान्तमेवास्यावस्थानं युज्यते, अवस्थास्यते चायमाकल्पान्तम्। अपि जानासि कति दिनान्यव-स्थास्यते? ( क्रमशः )

---

## व्याकरण-विमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अत्र बहोः कालात् पूर्वम् ( १२।१।१९०६ ) उदयपुरराजकीय-पाठशालाप्रधानसंस्कृताध्यापकेन "संस्कृतचन्द्रिकायां" विलिखितम्--

कैयटरीत्या शतात् पराणीति विग्रहे यद्यपि समासविधायकं विशेषसूत्रं नास्ति तथापि "कर्तृकरणे कृता बहुलमि"ति बहुल-वचनात् "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" [२।१।३९] इति सूत्रस्थेन "शतसहस्रौ परेण" इति वार्त्तिकेन वा समासे परशब्दस्य पूर्वनिपाते च परशतानीत्यवस्थायां पारस्करादित्वकल्पनया सञ्जायमानः सुट् टित्त्वाच्छतशब्दाद्यवयवः। एवञ्च परस् शतानीति दशायां "स्तोः

श्चुना श्चुरि"ति शकारे "अनचि च" इति द्वित्वे च परश्शतानीत्यवस्थायां "झरो झरि" [ ८।४।६५ ] इति चेत् प्रवर्तेत, तदा पक्षे द्विशकारात्मकं पक्षे च त्रिशकारात्मकं रूपं सम्पद्येत न तु कदाचित् सविसर्गमपि।

अत्र यदि कश्चिदेवं ब्रूयात्, ननु परस् शतानीत्यवस्थायां श्चुत्वस्यासिद्धत्वात् पूर्वं रुत्वे "खरवसानयोः" [ ८।३।१५ ] इति विसर्गे "विसर्जनीयस्य" [८।३।३४] इति विसर्गस्य नित्ये सत्वे प्राप्ते तं बाधित्वा "वा शरि" [ ८।३।३६ ] इति विसर्गे परःशतानि। पक्षे च पूर्वत्र साधितं रूपद्वयमिति परःशतानीति सविसर्गपाठोऽपि शुद्धतर इति। तदा स एवं वाच्यो यत् पदान्तस्य सस्य सजुष्शब्दस्य च रुः स्यादित्यर्थकेन "ससजुषो रुः" [ ८।२।६६] इति सूत्रेण पदान्तस्य विधीयमानं रुत्वं शतशब्दाद्यवयवस्य सुटः सकारस्य पदान्तत्वाभावात् कथं स्यादिति। नापि समासान्तर्वर्तिनीं विभक्तिमाश्रित्य परशब्दे पदत्वात् तदन्तत्वाच्च सकारस्य रुत्वं सेत्स्यतीति वाच्यम्, पदान्तशब्दस्य पदसम्बन्ध्यन्त्यावयववाचकत्वेन शतशब्दाद्यावयवसकारे परपदान्त्यावयवत्वाभावात्। अन्यथा कारस्करबृहस्पत्यादिशब्देषु सकारश्रवणं दुर्लभं स्यात्।...

यद्यपि कैयटरीत्या परःशतशब्दे पारस्करादित्वकल्पनया सुटं विधाय सुटः सकारस्य पदान्तत्वाभावाद् रुत्वाप्राप्त्या सविसर्गपाठो दुर्लभः, तथापि शतात् पराणीति विग्रहे पञ्चमीसमासे शतशब्दस्य पूर्वनिपाते प्राप्ते परशब्दस्य पूर्वनिपातार्थं राजदन्तादौ परःशतशब्दपाठस्यावश्यकल्पनीयतया तत्रैव परःशतशब्दपूर्वनिपतितपरशब्दं परस् इति सान्तं प्रकल्प्य तदन्त्यसकारस्य सत्वे विसर्गे च कृते वा शरीति विसर्गपक्षे परःशतानीति सविसर्गोऽपि पाठः शुद्ध एवेति।" इति।

दाधिमथैस्तु निर्णयसागरमुद्रिते महाभाष्ये परिष्कृतम्—एवं च परस्कोटीनि परस्लक्षाणि परसयुतानि इत्येवमेव रूपाणि बोध्यानि। न च 'परोरजसे' इत्यार्षप्रयोगे 'परोरजांसि' इति कविप्रयोगे रुत्वोत्वयोः सिद्धये सुगागम एव किं न कल्प्यते। परश्शतानि इति तु "वा शरि" इत्यस्य वैकल्पिकत्वेन विसर्गाभावे सत्वे श्चुत्वे च सिद्धम् इति परोऽयुतानि परोलक्षाणि परःकोटीनि इत्येवं-रूपाण्येव भवन्तीति वाच्यम्, उपस्कृतादौ विसर्गापत्तिपरिहाराया-वश्यकटित्वस्य "सुट् कात् पूर्वः" [ ६।१।१३५ ] इति सुट एव प्रकृतत्वेन सुकः कल्पनायां निर्मूलत्वापातात्। अत एव "परोक्षे लिट्" [ ३।२।११५ ] इति सूत्रभाष्ये परोक्षपदसिद्धये—

परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम्।
उत्वं वादेः परादक्ष्णः सिद्धं वास्मान्निपातनात्॥

इति प्रकारत्रयाङ्गीकारक्लेशोऽङ्गीकृतः। वैकल्पिकेषु भावानुष्ठानस्यै-वाङ्गीकृतत्वेन सत्वानुपपत्तेः। वैदिके प्रयोगे तु वर्णव्यत्ययेन सकलेष्टसिद्धिः। वैदिकप्रयोगमनुसृत्य प्रयुञ्जानाः कवयस्तु प्रत्यवयन्त्येव। तथाचोक्तम्—'छन्दोवत् कवयः कुर्वन्ति नेष्टिः' इति केचित्। इति।

अत्र महामहोपाध्यायेन रघुनाथशास्त्रिणा टिप्पण्यामुक्तम्—वस्तुतस्तु परोरजआदीनां पृषोदरादित्वकल्पनया निर्वाहः। एवं परोलक्षादीनामपि प्रामाणिकत्वे तथैव इति।

मुद्रितकाशिकायां "स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन" [२।१।३९] इति सूत्रगतवृत्तेरवसाने "शतसहस्रौ परेणेति वक्तव्यम्। शतात् परे परश्शताः। सहस्रात् परे परस्सहस्राः। राजदन्तादित्वात् परनिपातः। निपातनात् सुडागमः।" इत्युपलभ्यते। परमंशोऽयं प्रक्षिप्त इति प्रतिभाति, काशिकाव्याख्यातृभिरनुल्लेखात्। "पारस्कर-

प्रभृतीनि च संज्ञायाम्" [ ६।१।१५७ ] इति सूत्रस्य वृत्तिन्यासपदमञ्जर्यादिष्वपि परःशतशब्दस्योल्लेखो न दृश्यते।

दुर्घटवृत्तौ "पञ्चमी भयेन" [ २।१।३७ ] इत्यत्रोक्तम्—

कथं "नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः" इति कुमारः [ १।३८ ]। उच्यते—पूर्वोक्तबहुलग्रहणात्। तथाच न्यासः—बहुलग्रहणप्रपञ्चोदाहरणान्येतानि" इति। सित इतरो यस्मादिति बहुव्रीहिर्वा। कथं परःशताद्याः इत्यमरः [ ३।१।६१ ] तथा 'आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः परःशताः' [ शिशु १२।५० ] इति माघः ? उच्यते। शतात् परे इति विगृह्य "पञ्चमी" [ २।१।६७ ] इति योगविभागात् समासः। राजदन्तादित्वात् [ २।२।३१ ] परनिपातः। मयूरव्यंसकादित्वात् [ २।१।७२ ] वा। पारस्करादित्वात् सुट्। लोकाश्रयत्वाल्लिङ्गस्य न परवल्लिङ्गता। "स्त्रियाः पुंवत्—" [६।३।३४] इति योगविभागात् पुंवत्त्वम्। एतत् सर्वं "नाज्झलौ [ १।१।१० ] इत्यत्र परःशतानीति व्याचक्षाणेन भाष्यटीकाकृतोक्तम्। पारस्करादिपाठादेतत् सिद्धमित्यन्यः। एवं "परिमाणं शतादूर्ध्वं परःशतमुदाहृतम्" "ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्राः शरदस्तपांसि" [ उत्तररामचरित १।१५ ] इति भवभूतिः। इति।

भाषावृत्तौ "पारस्करप्रभृतीनि च संज्ञायाम्" इत्यत्रोक्तम्—अमूनि नाम्नि यथापाठं साधूनि स्युः। पारस्करो देशः। रथस्पा नदी। किष्किन्ध्यः पर्वतः। किष्कुः। वनस्पतिः। "परःशताद्यास्ते येषां पराः संख्याः शतादिकात्" इति।

शब्दकौस्तुभे नाज्झलावित्यत्रोक्तम्—परःशतादिषु हि रूपद्वयं सिद्धान्तेऽपीष्यते। 'शतात् पराणि' इति विग्रहे, "कर्तृकरणे कृता बहुलम्" इति बहुलवचनाद् वा "सुप् सुपे"ति वा समासे कृते

पारस्करादित्वात् सुटि सकारस्य श्चुत्वम्। ततः "अनचि च" इति द्विर्वचनम्। ननु "शरोऽची"ति, "अनची"ति वा द्वित्वनिषेधोऽस्त्विति चेन्न। तत्र नाज्झलाविति निषेधादिकारेण शकाराग्रहणात्। ततो "झरो झरी"ति लोपविकल्पाद् द्विशकारं त्रिशकारं वा रूपमिति सावर्ण्यनिषेधेऽपि सिध्यत्यवेदं रूपद्वयम्, "अनचि चे"ति द्वित्वस्यापि वैकल्पिकत्वात्। तत्र द्वित्वस्य वैकल्पिकत्वं "यरोऽनुनासिकेऽनुनासिको वा" इत्यतो वेत्यनुवर्तनात्, "सर्वत्र शाकल्यस्य" इति पाक्षिकनिषेधाद् वा; लोपस्य वैकल्पिकत्वं तु "झयो होऽन्यतरस्याम्" [८।४।६२] इत्यतोऽन्यतरस्यां-ग्रहणानुवृत्तेरित्यवधेयम्। तस्मात् सावर्ण्ये सत्यसति वा परश्शता इति द्विशकारकत्रिशकारकरूपयोरविशेषः। "परःशताद्यास्ते येषां परा संख्या शतादिकात्" इत्यमरः। इति।

पारस्करादीनीति सूत्रस्य प्रौढमनोरमायां सिद्धान्तकौमुदीगतम् आकृतिगणोऽयमिति प्रतीकमुपादायोक्तम्—तेन परःशता इत्यादि सिद्धम्। "अधिश्रयन्तीर्जनताः (?) परःशताः" इति माघः। शतात् परा इति विग्रहे पञ्चमी इति योगविभागात् समासः। राजदन्तादित्वात् परनिपातः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। लोकाश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्नता। पारस्करादित्वात् सुडिति दिक्। इति।

वस्तुतस्तु 'पुरः' 'अधः' 'अवः' इव परःशब्दोऽपि सकारान्तमव्ययं वर्तत इति नैतत् परोक्षं वेदज्ञानाम्। स एव परस्-शब्दः परःशत-परःसहस्र-परोरजः-परःश्वः-परोलक्षादिषु प्रथमावयवरूपेण जागर्ति। भाषायां परः-शब्दस्य सुविरलप्रयोगत्वात् सूत्रकारेण "पूर्वाधरावराणामसि पुरधवश्चैषाम्" [५।३।३९] इति सूत्रे परशब्दो नोदलेखि। इदमपि न विस्मरणीयं यत् परशब्दात् प्रथमैकवचने यत् परः-पदं तदाद्युदात्तम्, असिप्रत्ययान्तं पुनः परः-पदं प्रत्यय-

स्वरेणान्तोदात्तम्। अस्य च योगेन प्रायेण तृतीया विभक्तिर्भवति, अन्तरान्तरा च द्वितीया पञ्चमी चापि दृश्यते, सकृच्च सप्तम्युपलभ्यते। इन्द्रं को वीर्या परः [ऋ० सं० १।८०।१५] नहि देवो न मर्त्यो महस्तव क्रतुं परः [ ऋ० सं० १।१९।२ ], परो मात्रया (beyond measure) [ऋ० सं० ७।९९।१ ], अस्मात्...परः [ ऋ० सं० ८।२७।१८ ] इत्यादीन्युदाहरणानि। सायणादिभिर्भाष्यकृद्भिरपि परःशब्दस्याव्ययत्वं बहुत्रोद्घोषितम्। तथाहि परो मात्रयेत्यत्रोक्तम्—पर इति सकारान्तं परस्तादित्यस्यार्थे। परशब्दाच्छान्दसोऽसिप्रत्ययः। परो दिवा पर एना पृथिव्या [ऋ० सं० १०।१२५।८] इत्यत्र यथा। मात्रयेति व्यत्ययेन तृतीया। मात्रायाः* परः परस्ताद्वर्तमानया अपरिमितया। "इन्द्रं को वीर्या परः" [ ऋ० सं० १।८०।१५ ] इत्यत्रापि सायणाचार्येणोक्तम्—पर इत्येतत् सकारान्तमव्ययं वैदूर्यमाचष्टे, "परो दिवा पर एना" इति यथा। "परो दिवा पर एने"त्यत्राप्युक्तम्—पर इति सकारान्तं परस्तादित्यर्थे वर्तते, यथा अध इत्यधस्तादर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। इति।

काठकोपनिषदि 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इत्यत्र परःशब्दस्थाने परमिति पदं विस्पष्टमेवोपनिषदोऽस्य परवर्त्तित्वं प्रतिपादयति।

छान्दोग्यप्रभृतिषु प्राचीनोपनिषत्स्वन्तरान्तराव्ययं परःपदमुपलभ्यत एव। तथाहि—अथ यदतः परो दिवो ज्योतिर्दीप्यते [३।१३।७] इति। अत्राचार्यपादैरुक्तम्—परः परमिति लिङ्गव्यत्ययेन।

तत्रैव "आदित् प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम्। परो यदिध्यते दिवा॥" इत्यृचं [८।६।३०] व्याचक्षाणैराचार्यपादैरुक्तम्—'आदित्' इत्यत्राकारस्यानुबन्धस्तकारोऽनर्थकः, इच्छब्दश्च।...आशब्द

* मुद्रितपुस्तकेषु 'मात्रया' इति पाठः।

उत्सृष्टानुबन्धः पश्यन्तीत्यनेन सम्बध्यते। किं तज्ज्योतिः पश्यन्ति ? वासरम् अहः, अहरिव तत् सर्वतो व्याप्तं ब्रह्मणो ज्योतिः। निवृत्त-चक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधनैः शुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्तीत्यर्थः। परः परमिति लिङ्गव्यत्ययेन, ज्योतिष्परत्वात्। यत् इध्यते दीप्यते दिवि द्योतनवति परस्मिन् ब्रह्मणि वर्त्तमानम्; येन ज्योतिषेद्धः सविता तपति, चन्द्रमा भाति, विद्युद् विद्योतते, ग्रहतारागणा विभासन्ते। इति।"

अत्राचार्यपादैर्लौकिकव्याकरणदृष्ट्यैवमुक्तम्। सायणाचार्यैः पुनर्वेदभाष्य एवं व्याख्यातम्—परः दिवा दिवः परस्तात् द्युलोक-स्योपरि यत् यदा अयमिन्द्रः सूर्यात्मना इध्यते दीप्यते आदित् अनन्तरमेव प्रत्नस्य चिरन्तनस्य रेतसः गन्तुः...इन्द्रस्य सूर्यात्मनः वासरं निवासकं वासरस्य निवासस्य हेतुभूतं वा ज्योतिः द्योतमानं तेजः पश्यन्ति सर्वे जनाः। यद्वा। वासरमिति अत्यन्तसंयोगे द्वितीया। कृत्स्नमहरुदयप्रभृत्यास्तमनं यावज्ज्योतिष्पश्यन्तीत्यर्थः। इति।

सामवेदेऽपि मन्त्रोऽयमुपलभ्यते, तत्र च दिवा इत्येतस्य स्थाने दिवि इत्याचार्यपादस्वीकृतः पाठो वर्त्तते, तत्र माधवेनाचार्यपादानां मतमनुसृत्य व्याख्यातम्, भरतस्वामिना पुनर्वैदिकसरणिः समा-श्रिता। अत्र भरतस्वामिन एव वाक्यान्युद्ध्रियन्ते। इयं वैश्वानर-स्याग्नेः स्तुतिः। वैश्वानरश्च त्रैलोक्यशरीरः परमात्मेत्युपनिषदि स्थितम्। आदिति निपात अनन्तरमित्यस्मिन्नर्थे वर्तते। इदित्ये-वार्थे। आदित् अनन्तरमेवात्मविज्ञानात्। प्रत्नस्य पुराणस्य रेतसः कारणात्मनः स्वरूपभूतम्। ज्योतिः वैश्वानराख्यं सूर्यम्। पश्यन्ति विद्वांसः। वासरं विवासकं तमसाम्। परः परस्तात् इध्यते दीप्यते। दिवि दिव इत्यर्थः। यत् दिवः परस्तादिध्यत

इति सम्बन्धः। अत्र यदतः परो दिवो ज्योतिर्दीप्यते [ छा० उ० ३।१३।७ ] इत्यादि श्रूयते।

भोजदेवेन सरस्वतीकण्ठाभरणे विस्पष्टमेव परस्शब्दोऽभ्युपगतः अत एव गणरत्नमहोदधौ वर्धमानेनोक्तम्—भोजस्तु "परसमानार्थः परः-शब्दोऽव्ययम्। अक्ष्णोः परं* परोऽक्षम्। अव्ययेऽव्ययीभावः" इति (२।१३५ वृत्तिः)। अत एव "प्रतिपरःसमनुभ्योऽक्ष्णः" [५।४।१२३] इति कण्ठाभरणे सूत्रम्। हेमचन्द्रेणापि "प्रतिपरोऽनोरव्ययीभावात्" [७।३।८७] इति सूत्रितम्। उक्तञ्च स्वोपज्ञबृहद्वृत्तौ "परसमानार्थं परस्-शब्दोऽव्ययम्। अक्ष्णोः परं* परोक्षम्। अव्ययेऽव्ययीभावः। अक्ष्णोः समीपमन्वक्षम्। कथं प्रत्यक्षोऽर्थः परोक्षः काल इत्यादेरव्ययीभावस्य सत्त्ववचनता? अभ्रादेराकृतिगणत्वात् अ-प्रत्ययेन भविष्यति। अक्षशब्देनेन्द्रियपर्यायेण सिद्धे प्रत्यादिभ्यः परस्याक्षि-शब्दस्याव्ययीभावे प्रयोगो मा भूदिति वचनम्। इति। (क्रमशः)

---

## कथाकोषः

[ श्रीपञ्चानन-काव्यतीर्थ-ज्योतिर्विनोदः ]

### सौचिक-यादुकरौ

सौचिकः महता दुःखेन दिनपातं करोति, परं यादुकरः खेल-निपुणतया जनान् भृशं तोषयति, परमां च मुदं बहुलं च धनं लभते। एकदा आयासेनापि धनमलभमानं दीनाननं सौचिकं सोऽवदत, यदा ते धनाभाव उपजायेत तदा मदीयेनैव वसुना सुखेन दिनं नय इति। सौचिकः किमपि नावदत्। ततः समतीतेषु

* अत्रार्थः प्रतिपादितो न पुनः समासघटकः शब्दः प्रदर्शित इति परमिति मुद्रितपुस्तकस्थपाठे न कोऽपि दोषः। पर इति पाठे तु कोऽपि सन्देहो नावतरत्येव।

बहुषु दिवसेषु निखिले भूमिभागे धनाभावात् ओदनहानिरजायत। आहारं विना बहवो जना मृताः, यादुकरोऽपि जीविकाभावात् असीदत्। अथ कदा पथि सौचिकमालोकमानः स निजदशां निवेदयामास। सौचिकोऽवदत्, अशनाभावेन पीडिता अपि जना वसनं न जहति। अतः सुखेनैव मे दिनं याति, नाभावमनुभवामि। इति। यादुकरः तां कथाम् अशृणोत्, सौचिकीयं भागधेयं साधुतरं मेने। यः सनातनीं जीविकां जहाति स यादुकर इव सीदति।

## पाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"कर्तुः क्यङ् सलोपश्च" [ ३।१।११ ] इति सूत्रस्य दुर्घटवृत्तौ दृश्यते—"कथं प्रायः पुण्यवता देशे शरदियं प्रावृषायते। क्यङ्, प्रावृष्यत इति हि स्यात्। उच्यते। प्रावृषेति तृतीयान्ते अयवयमयेति अयतिधातोरयत इति। प्रावृषाशब्दोऽयं टाबन्तः। "कालप्रभाता शरदा प्रावृषा तु जलार्णवा" इति कोशः। शरदि वर्षति वासव इति। केचित्तु ('वा ? )क्षरं पठन्ति।" इति।

एतत्तु व्यक्तमेव प्रामादिकम्। यथास्माभिर्दृश्यते तथेत्थं पठनीयम्—

'कथं "प्रायः **पुण्यवतां** देशे शरदि प्रावृषायते" इति, क्यङि प्रावृष्यत इति हि स्यात्। उच्यते। प्रावृषेति **तृतीयान्तम्** अयवयपयमयेति अयतिधातोरयते इति। **अथवा** प्रावृषाशब्दोऽयं टाबन्तः। **कालप्रभातं** शरदा प्रावृषा तु **जलार्णव** इति कोशः। "शरदि वर्षति वासवः" इति **केचिन्नवाक्षरं** पठन्ति' इति।

संक्षिप्तसारव्याकरणे तिङन्तपादस्य "हलिज्भ्यामीयायोरादेः" इति सूत्रस्य वृत्तौ दृश्यते—शरदि प्रावृषायत इति तु प्रावृषा आयते आगच्छतीत्यर्थः। अत्र विस्पष्टमेव शरदीति सप्तम्यन्तः पाठः।

तत्र टीकाकृता गोयीचन्द्रेणोक्तम्—"प्रावृषायते इति अय गतौ आङ्पूर्व इति।

इच्छति भागुरिरन्तमकारं
प्रावृडुशिक्शरदां दरदश्च

इति सिद्धान्तान्तरमन्ये वदन्ति। तथाच 'कालः प्रभातं शरदा प्रावृषा च घनागमः' इति त्रिकाण्डशेषः।" इति। दुर्घटवृत्तौ तु सप्तमाध्याये पुनरपि 'कालप्रभाता शरदा प्रावृषा च जलार्णवा इति संसारावर्त:' इत्युपलभ्यते। श्लोककारेण "शरदा ( nom. sing ) प्रावृषायते"। इति लिखितमिति प्रतिभाति। ( क्रमशः )

---

# अनुवादः

[ श्रीमहालिङ्गशास्त्री ]

वार्तेयं जन्मभाजामिह हि तत इतः प्रभ्रमन्तः पिबन्तः
प्राश्नन्तः प्रोल्लपन्तो रतिविरतिकृतः संग्रहोच्छेदनिघ्नाः।
प्रोन्नीताः पातिताश्च प्रसभमधिकृताः साधयन्तो न किञ्चिद्
ध्वंसन्ते चन्द्रवत्यामिव निशि जलधावुद्गतास्ते तरङ्गाः॥

( Matthew Arnold's *Rugby Chapel* )
"What is the course of the life
Of mortal men on the earth ?—
Most men eddy about
Here and there—eat and drink,
Chatter and love and hate,
Gather and squander, are raised
Aloft, are hurl'd in the dust,
Striving blindly, achieving
Nothing ; and, then they die—
Perish ! and no one asks
Who or what they have been,
More than he asks what waves,
In the moonlit solitudes mild
Of the midmost Ocean, have swell'd,
Foam'd for a moment and gone."

---

# हओम यश्त्

[ I. J. S. Taraporevala ]

| | |
|---|---|
| आअत् मे अएम् पइत्यओख़्त | आत् मेऽयं प्रत्यवोचत |
| हओमो अषव दूरओषो । | सोम ऋतावा दूरौषः |
| अज़ेम् अह्मि ज़रथुश्त्र | अहमस्मि ज़रथुश्त्र |
| हओमो अषव दूरओषो । | सोम ऋतावा दूरौषः |
| आ-माँम् यासङ्‌ह स्पितम । | आ मां याचस्व स्पितम् |
| फ्रा-माँम् हुन्वङ्‌ह ह्वरेतेए | प्र मां सुनुष्व अश्नवे |
| अओइ माँम स्तओमइने स्तूइधि | अभि मां स्तोमनि *स्तुधि |
| यथ मा (अपरचित्) सओश्यन्तो स्तवाँन् । | यथा मा ( *अपरेचित् ) सोष्यन्तः स्तवान् । |

Thereupon ( āat ) this ( aem ) Haoma ( Haomo ), the righteous ( aṣava ), of-far-spreading-radiance ( dūraoṣo ) replied ( paityaoxta ) unto me ( me ) : I ( azəm ) am ( ahmi) O Zaraθus'tra ( Zaraθus'tra ), Haoma ( Haomo ), the righteous ( aṣava ), of-far-spreading-radiance (dūraoṣo). Fix-(thy)-desires earnestly ( ā yāsañuha ) upon me ( mām ), O Spitama ( Spitama ) ; worship ( frā hunvañuha ) me ( mām ) ( in order ) to enjoy ( of me ) ( xvarətəe ); hymn ( aoi stūiδi ) me ( mām ), as the other ( aparacit ) Saos'yants ( Saos'yanto) have ( in the past ) praised ( stavān ) me ( mām ).

आ अत्—Thereupon, आत्, अथ ।

मे – मह्यम् । प्राचीनभाषायामविशेषेणैवान्त्यस्वराणां दीर्घत्वं भवति, अर्वाचीनावेस्तायां पुनरोकारवर्जमन्त्यस्वराणां ह्रस्वत्वं भवति ।

पाइत्यओख़्त—पइति-अओख़्त, इति पाठान्तरम् । प्रतिपूर्ववच-धातोर्लुङि आत्मनेपदप्रथमपुरुषैकवचने रूपम् । संस्कृते प्रत्युक्तवानित्यादिषु सम्प्रसारणं दृश्यते ।

अषव—अषवा, ऋतावा ( ऋतावन्-शब्दः )।

दूरओषो—दूरः ओषः ( ज्योतिर्वा रोगो वा मृत्युर्वा ) यस्य वा यस्मात् वा। दूरविसारिदीप्तिकः, दवयद्रोगो दवयन्मृत्युर्वा। उच्छी विवासे इति धातोर्वा उष दाहे इति धातोर्वा *उष अवसादे इति धातोर्वा ओष-शब्दो निष्पन्नः। प्राचीनटीकाकृतोक्तम्—"दूरमृत्युः। अस्य दूरमृत्युता चेयं यत् मृत्युमात्मनो मनुष्याणां दूरे दधाति।" इति।

अह्मि—प्राकृतभाषास्विवावेस्तायामपि बहुत्र सकारस्य हकारो भवति।

आ यासङ्हु—आयाचस्व। याचधातोरेव सनाभेः कान्तिकर्मणो यासधातो रूपम्। संस्कृत 'अस्व'—आवेस्ता 'अङ्हु'।

स्पितम—ज़रथुश्त्रस्य पूर्वपुरुषस्य नाम। संस्कृते—श्वितम, ( श्वेततम ? )।

फ्रा ष्नुवङ्हु—प्र सुनुष्व। "प्रकृष्टं मां [मम ?] परिसंस्कारं कुरु खादनाय। [आहारार्थं संमार्जय]।"

ख्वरेतए—आवेस्तायां ख्वरधातोरर्थो भोजनं, भोगः। संस्कृते स्वृधातोरर्थः शब्दः। भोजनकाले शब्दो भवति, भोगेऽपि तृप्तिजनितः शब्दः स्वत एव विनिर्गच्छति वदनकमलात् इति धातुद्वयं पर्यवसाने समानार्थकमेव।

स्तओमइने—स्तओमन्-शब्दस्य सप्तम्येकवचने रूपम्। सं—स्तोमनि।

स्तूइधि—स्तुहि। वेदे यद्यपि स्तुधीति पदं नोपलभ्यते, सर्वत्र 'स्तुहि' इत्येव श्रूयते, तथापि श्रुधातोः श्रुधिपदं सुप्रसिद्धमेव ( Gk. kluθi )।

यथ—यथा। अर्वाचीनावेस्तायामन्त्यस्वराणां ह्रस्वो भवतीति पूर्वमेवोक्तम्, प्राकृतेऽपि 'यथ' इति ह्रस्वान्तमेवोपलभ्यते।

अपरचित्—अपरेचित्। संस्कृततोऽप्याविस्तायां बाहुल्येन चिच्छब्दस्य प्रयोगो दृश्यते। अज़ेम्चित्—अहञ्चित्। तएचित—तेचित्।

सओश्यन्तो*—प्रयत्नार्थकात् सु (च्यु) धातोर्लृटः सत्। ये तावदन्तरान्तरा "परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवन्ति युगे युगे॥" त एव सोष्यन्त इति व्यपदिश्यन्ते। यद्यपि भविष्यदर्थकप्रत्ययनिष्पन्नमिदं पदं तथापि अतीतेऽपि य एवंविधाः प्रादुरासन् तेऽपि सोष्यन्त इत्युच्यन्ते।

स्तवान्—स्तुधातोर्लेटि प्रथमपुरुषबहुवचने रूपम्। "लेटोऽडाटौ" इत्याडागमः।

---

# श्रीशिवनाडीहोराशास्त्रम्

[ श्रीपरदेवताऽपरावतारशेषमहामुनिविरचितम्।

अनुवादकः प० द्विवेदि-नारायणशास्त्री ]

( Ellore, West Godavari )

चन्द्रदशायां चन्द्रान्तरफलम्।

सू॥ 'नवमदशमैकादशाधिपयुते लाभस्थे पूर्णचन्द्रे शुभग्रहयुते धनपुत्रमित्रसुवर्णनववस्त्रलाभो भवति।

---

* Saos'yant is the name given to an order of Beings who appear in the world from time to time to fight the evil and to re-establish the law of Aṣa ( Righteousess) in the world. The sense is not restricted to the future alone but may refer to the past as well. Hence the word may be used, as here, in the general sense of "they who work for the gooa of humanity". i.e., Prophets and Teachers of the Law. In d stricter sense, especially when used in the singular, the name denotes a special Teacher who is to appear in the future and re-inaugurate the golden age, somewhat like the *Kalki-avatāra* of the Hindus. The Sos'yant is said to be the seed of Z., who is to be born in the future.

व्या ॥ चन्द्रः भाग्याधिपेन वा राज्याधिपेन वा एकादशाधिपेन वा युतो वा, लाभस्थो वा धनस्थो वा तदधिपयुतो वा पूर्णचन्द्रः शुभग्रहशुभस्थानस्थितो वा धनाभिवृद्धिः पुत्रप्राप्तिः, मित्रप्राप्तिः कलत्रसौख्यं सुवर्णप्राप्तिः नूतनवस्त्रलाभश्च भवेत्। चन्द्र उच्चस्थितो लाभस्थानं गतो वापि द्रष्टा वाऽपि रत्नप्राप्तिं करोति।

चन्द्रदशायां कुजान्तरफलम्।

सू। मङ्गले केन्द्रत्रिकोणस्वोच्चमित्रस्थे धनवसनभ्रातृमित्रशकटवाहनादिसर्वकार्यदिग्विजयो भवति।

व्या। अङ्गारकः केन्द्रस्थो वा त्रिकोणगतो वा मकरराशौ स्थितो वा मित्रस्थाने स्थितो यदि धनवस्त्रभ्रातृमित्रशकटवाहनादीन् बहुशुभलाभान् सर्वकार्यसिद्धिं दिग्विजयश्च करोति।

चन्द्रदशायां राह्वन्तरफलम्।

सू०। राहौ भ्रातृकर्मस्वोच्चस्थिते देवब्राह्मणार्चनाद्यनेकधर्मपरोपकारो भवति।

व्या० ॥ राहुः तृतीयस्थाने वा दशमस्थाने वा उच्चे वा स्थितो यदि ब्राह्मणार्चनं देवताराधनं च, एवमाद्यनेकपरोपकारधर्मकार्याणि आचरेज्जातक इति भावः।

चन्द्रदशायां गुर्वन्तरफलम्।

सू० ॥ स्वक्षेत्रोच्चकेन्द्रस्थो मित्रस्थो बलवान् गुरुः।
ब्राह्मणग्रहसंयुक्तो वाणिज्यादिधनं भवेत् ॥
प्रयाणं बन्धुसम्मानं पशुवृद्धिशुभानि च।
राजव्यापारविजयं गृहे कल्याणमिच्छति ॥
सत्कथाश्रवणप्राप्ति देंवतागारनिर्मितम्।
इत्यादीनि महापुण्यश्रवणानि चरेद्यदि ॥
शतशः पुण्यकार्याणि ; भवेच्छत्रुविनाशनम् ॥

चन्द्रदशायां शन्यन्तरफलम् ।

केन्द्रस्थे कोणगे मन्दे घटे स्वोच्चनवांशके ।
लाभस्थे बलयुक्ते वा शूद्रराजाद्धनागमः ॥
नीचमूलाद्धनप्राप्तिः पुत्रोत्पत्तिर्भविष्यति ।
गृहनिर्माणकं कीर्तिविशेषं धनलाभकम् ॥
चन्द्रस्यान्तर्गते मन्दे करोति मित्रदर्शनम् ॥

चन्द्रदशायां बुधान्तरफलम् ।

स्वक्षेत्रोच्चस्थिते सौम्ये मित्रर्क्षे केन्द्रकोणगे ।
सत्कथाश्रवणं बन्धुदर्शनं ज्ञानवर्धनम् ॥
व्यापारे कार्यसिद्धिः स्यान्नवचस्त्रादिधारणम् ।
देवतोत्सवकार्यादिदर्शनं पापनाशनम् ॥
गृहे शुभं शत्रुनाशं विदेशगमनादिकम् ।
पुण्यतीर्थादि श्रवणं पशुवृद्धिर्भविष्यति ॥

चन्द्रदशायां केत्वन्तरफलम् ।

[केतौ] लाभविक्रमशत्रुस्थे शुभग्रहयुतेऽपि वा ।
तद्दृष्टा केन्द्रकोणस्थे धनलाभः कृषिर्भवेत् ॥
स्वधिकारमनोल्लासव्यापारसिद्धिश्च (?) ।
कर्माभिवृद्धिः स्याद्बन्धुदर्शनं चापि कीर्तितम् ॥
पुण्यश्रवणकार्यादि तीर्थयात्रा फलं लभेत् ।
स्वक्षेत्रमित्रोच्चस्थे नीचमूलाद्धनागमम् ॥
राजस्त्री मोहमाप्नोति रत्नदर्शनलाभदम् ।
देवताब्राह्मणपरत्वं पुण्यतीर्थादि तत्फलम् ।
स्वप्ने सुषुप्तमाप्नोति केतौ चन्द्रमसोऽन्तरे ॥
( सुषुप्तं नाम शुभस्वप्नफलम् )

चन्द्रदशायां शुक्रान्तरफलम् ।

स्वक्षेत्रे स्वोच्चके वाऽपि शुभग्रहसमन्विते ।
वाहनस्थे धनस्थे वा लाभस्थे राज्यकेऽपि वा ॥
पुत्रस्थे वा स्थिते शुक्रे राजमूलाद्धनागमम् ।
पशुमित्रसुकीर्त्यादिलाभजं फलमाप्नुयात् ॥
सङ्गीतवाद्यरसिकः शतस्त्रीगमनादिकम् ।
स्वाधिकाराभिवृद्धिः स्यात् सुलाभश्च भविष्यति ॥
मृष्टान्नभोजनं कुर्याद् वाहनारोहणादिकम् ।
स्वीये गृहे शुभं कुर्यात् प्रयाणं प्रियदर्शनम् ॥
स्वर्णं रौप्यं च धनदं वर्धयेद् बुद्धिमान् नरः ॥
देहसौख्यं पुत्रलाभमुद्यानवनदर्शनम् ।
इत्यादींश्च महायोगाल्लँभते कीर्तिमान्नरः ॥

चन्द्रदशायां रव्यन्तरफलम् ।

जन्मस्थे केन्द्रगे कोणे राज्ये वा मेषकेऽपि वा ।
शुभग्रहसमायुक्ते मित्रराजप्रसादतः ॥
भूग्रामलाभमाप्नोति व्यापारे धनवर्धनम् ।
राज्यलाभं भवेद्राज्ञो गृहे कल्याणमाप्नुयात् ॥
ऋणपीडाविलोपं च अकस्माद्धनलाभकम् ।
देवताचारलाभः स्याद् ब्रह्मवाक्यानुतत्परः (?) ॥
स्वकुलाचारसम्पन्नः सुवर्णकुसुमं लभेत् ।
मनोल्लासं (?) भवेल्लाभश्चन्द्रे हेलिसमान्तरे ॥
इत्यादींश्च महायोगाल्लँभते कीर्तिदायकान् ।
देव्या महाप्रसादेन उद्यानवनवासनम् ॥

इति चन्द्रदशा संपूर्णा ॥

---

## कपटसाधोर्वृत्तम्

कथासरित्सागरतः

अस्ति माकन्दिका नाम नगरी जाह्नवीतटे ।
तस्यां मौनव्रतः कश्चिदासीत् प्रव्राजकः पुरा ॥
स च भिक्षाशनोऽनेकपरिव्राट्परिवारितः ।
आस्ते देवकुलस्यान्तर्मठिकायां कृतस्थितिः ॥
प्रविष्टो जातु भिक्षार्थमेकस्य वणिजो गृहे ।
स ददर्श शुभां कन्यां भिक्षामादाय निर्गताम् ॥
दृष्ट्वा चाद्भुतरूपां तां स कामवशगः शठः ।
हा हा कष्टमिति प्राह वणिजस्तस्य शृण्वतः ॥
गृहीतभिक्षश्च ततो जगाम निलयं निजम् ।
ततस्तं स वणिग् गत्वा रहः पप्रच्छ विस्मयात् ॥
किमद्यैवमकस्मात् त्वं मौनं त्यक्त्वोक्तवानिति ।
तच्छ्रुत्वा वणिजं तं च परिव्राडेवमब्रवीत् ॥
दुर्लक्षणेयं कन्या ते विवाहोऽस्या यदा भवेत् ।
तदा ससुतदारस्य क्षयः स्यात् तव निश्चयम् ॥
तदेतां वीक्ष्य दुःखं मे जातं भक्तो हि मे भवान् ।
तेनैवमुक्तवानस्मि त्यक्त्वा मौनं भवत्कृते ॥
तदेषा कन्यका नक्तं मञ्जूषायां निवेशिता ।
उपरिन्यस्तदीपायां गङ्गायां क्षिप्यतां त्वया ॥
तथेति प्रतिपद्यैतद् गत्वा सोऽथ वणिग् भयात् ।
नक्तं चक्रे तथा सर्वं निर्विमर्शा हि भीरवः ॥
प्रव्राजकोऽपि तत्कालमुवाचानुचरान्निजान् ।
गङ्गां गच्छत तत्रान्तर्वहन्तीं यां च पश्यथ ॥
पृष्ठस्थदीपां मञ्जूषां गुप्तमानयतेह ताम् ।
उद्घाटनीया न च सा श्रुतेऽप्यन्तर्ध्वनाविति ॥

तथेति चागता यावद् गङ्गां न प्राप्नुवन्ति ते ।
राजपुत्रः किमप्येकस्तावत् तस्यामवातरत् ॥
सोऽत्र तां वणिजा क्षिप्तां मञ्जूषां वीक्ष्य दीपतः ।
भृत्यैरानाय्य सहसा कौतुकादुदघाटयत् ॥
ददर्श चान्तः कन्यां तां हृदयोन्मादकारिणीम् ।
उपयेमे च गान्धर्वविधिना तां च तत्क्षणम् ॥
मञ्जूषां तां च गङ्गायां तथैवोर्ध्वस्थदीपिकाम् ।
कृत्वा तत्याज निक्षिप्य घोरं वानरमन्तरे ॥
गतेऽथ तस्मिन् संप्राप्य कन्यारत्ने नृपात्मजे ।
आययुस्तस्य चिन्वन्तः शिष्याः प्रव्राजकस्य ते ॥
ददृशुस्तां च मञ्जूषां गृहीत्वा तस्य चान्तिकम् ।
निन्युः प्रव्राजकस्यैनां सोऽथ हृष्टो जगाद तान् ॥
एकोऽहं साधये मन्त्रमादायैतामिहोपरि ।
अधस्तूष्णीं च युष्माभिः शयितव्यमिमां निशाम् ॥
इत्युक्त्वा तां स मञ्जूषामारोप्य मठिकोपरि ।
स परिव्राड् विवृतवान् वणिक्कन्याभिलाषुकः ॥
ततश्च तस्या निर्गत्य वानरो भीषणाकृतिः ।
तमभ्यधावत् स्वकृतो मूर्तिमानिव दुर्नयः ॥
स तस्य दशनैर्नासां नखैः कर्णौ च तत्क्षणम् ।
चिच्छेद पापस्य कपिर्निग्रहज्ञ इव क्रुधा ॥
तथाभूतोऽथ स ततः परिव्राडवतीर्णवान् ।
यत्नस्तम्भितहासाश्च शिष्यास्तं ददृशुस्तदा ॥
प्रातर्बुद्ध्वा च तत् सर्वं जहास सकलो जनः ।
ननन्द च वणिक् सा च तत्सुता प्राप्तसत्पतिः ॥

## Story of the hypocritical ascetic.

On the banks of the Ganges there is a city named Mākandikā ; in that city long ago there was a certain ascetic who observed a vow of silence, and he lived on alms, and surrounded by numerous other holy beggars, dwelt in a monastery within the precincts of a god's temple where he had taken up his abode. Once when he entered a certain merchant's house to beg, he saw a beautiful maiden coming out with alms in her hand, and the rascal seeing that she was wonderfully beautiful was smitten with love and exclaimed "Ah ! Ah ! Alas !" And that merchant overheard him. Then taking the alms he had received, he departed to his own house ; and then the merchant went there and said to him in his astonishment, "Why did you to-day suddenly break your vow of silence and say what you did ?" When he heard that, the ascetic said to the merchant, "This daughter of yours has inauspicious marks ; when she marries, you will undoubtedly perish, wife, sons and all. So, when I saw her, I was afflicted, for you are my devoted adherent ; and thus it was on your account that I broke silence and said what I did. So place this daughter of yours by night in a basket, on the top of which there must be a light, and set her adrift on the Ganges. The merchant said, "So I will", and went away, and at night he did all he had been directed to do out of pure fear. The timid are ever unreflecting. The hermit for his part said at that time to his own pupils, "Go to the Ganges, and when you see a basket floating along with a light on the top of it, bring it here secretly, but you must not open it, even if you hear a noise inside." They said, "We will do so," and off they went ; but before they reached the Ganges, strange to say, a certain prince went into the river to bathe. Seeing that basket which the merchant had thrown in, with the help of the light on it,

he got his servants to fetch it for him, and immediately opened it out of curiosity. And in that he saw that heart-enchanting girl, and he married her on the spot by the Gandharva ceremony of marriage. And he set the basket adrift on the Ganges, exactly as it was before, putting a lamp on the top of it, and placing a fierce monkey inside it. The prince having departed with that pearl of maidens, the pupils of the hermit came here in the course of their search, and saw that basket, and took it up and carried it to the hermit. Then he being delighted said to them, "I will take this upstairs and perform incantations with it above, but you must lie in silence downstairs this night." When he had said this, the ascetic took the basket to the top of the monastery, and opened it, eager to behold the merchant's daughter. And then a monkey of terrible appearance sprang out of it, and rushed upon the ascetic, like his own immoral conduct incarnate in bodily form. The monkey in its fury immediately tore off with its teeth the nose of the wicked ascetic, and his ears with its claws, as if it had been a skilful executioner and in that state the ascetic ran downstairs and when his pupils beheld him, they could with difficulty suppress their laughter. And early next morning everybody heard the story, and laughed heartily, but the merchant was delighted, and his daughter also, as she had obtained a good husband. And even as the ascetic made himself ridiculous, so too may we possibly become a laughing-stock if we employ deceit and fail after all.

---

## व्याकरणसूत्राणां वैज्ञानिकं व्याख्यानम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सहृदयाः, विदितमेवैतद्भवतां यद्ददातिरुभयपदी, आङ्पूर्वः पुनः स एव धातुरात्मनेपद्येव। किमत्र बीजमिति विचारयन्तो नूनं प्रति-

पद्येरन् भवन्तोऽर्थस्य परिवर्तनमेवेति॥ ददातिर्हि दानार्थकः, दानञ्च स्वकीयाय श्रेयसेऽपि क्रियते, परकीयाय मङ्गलायापि विधीयते। यदाहं स्वहितार्थैव दानं करोमि तदाहं 'सम्प्रददे', यदा प्रेतानां पूर्वजानां पारलौकिकहितकाम्यया दानक्रियामनुतिष्ठामि तदाहं 'सम्प्रददामि'। आङित्यर्वागर्थे इति भगवान् यास्कः प्राह स्म। अर्वाग् नाम स्वाभिमुखम्। अत एवाङ् पूर्वकस्य दाधातोरर्थः स्वाभिमुखे दानम्, स्वस्मै दानम्, ग्रहणमिति यावत्। अत एवात्र नियतमेव क्रियाफलस्य कर्तृगामित्वम्। यथा—

श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि॥

इति भगवान् मनुः [ २।२३८ ] प्राह।

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥

इति रघुश्लोकेऽपि [ १।१८ ] प्रथमतो बले राजगामित्वम्, अत एव क्रियाफलस्य कर्तृगामित्वमव्याहतमेव।

अत एव 'श्वघ्नीव जिगीवाल्लँक्षमादद्र् योऽर्यः पुष्टानि स जनास इन्द्रः' [ ऋ० सं० २।१२।४ ] इत्यत्र पदपाठकारेणावग्रहमसन्निविश्यादत्-पदस्यादधातुनिष्पन्नत्वं संसूचितम्।

मुखव्यादानन्तु प्रायेण कर्तृगामिफलकं न भवतीति तत्र सूत्रमिदं न प्रवर्तते। यथा—

कृष्णेनाम्ब गतेन रन्तुमसकृन्मृद् भक्षिता स्वेच्छया
सत्यं कृष्ण ? क एवमाह ? मुसली, मिथ्याम्ब ! पश्याननम्।
व्यादेहीति, विकासिते च वदने दृष्ट्वा समस्तं जगन्-
माता यस्य जगाम विस्मयपदं पायात् स वः श्रीपतिः॥

इति। वैद्यः स्फोटकं व्याददातीत्यत्र क्रियाफलस्यान्यगामित्वं स्फुटमेव।

एवं पालनार्थस्य भुज्धातोः परस्मैपदित्वं भोगार्थस्य चात्मनेपदित्वमपि सूपपादम्। "पृथिवीं भुनक्ति राजा" इत्यादिकं वाक्यं राज्ञः क्लेशविशेषमेव सूचयति। अत एवोक्तमश्वघोषेण—

यदा च जित्वापि महीं समग्रां वासाय दृष्टं पुरमेकमेव।
तत्रापि चैकं भवनं निषेव्यं श्रमः परार्थे ननु राजभावः॥
आज्ञा नृपत्वेऽभ्यधिकेति यत् स्यान्महान्ति दुःखान्यत एव राज्ञः।
आसङ्गकाष्ठप्रतिमो हि राजा लोकस्य हेतोः परिखेदमेति॥

इति। कविकुलचूडामणिना कालिदासेनाप्युक्तम्—

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥ [ शा० ५।६ ]
भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति।
शेषः सदैवाहितभूमिभारः षष्ठांशवृत्तेरपि धर्म एषः॥ [शा० ५।४]

इति। ( क्रमशः )

---

## पारमार्थिकं गणितज्ञानम्

वत्स, अष्टभिर्गुणिता अष्ट कति भवन्ति ?

षट्-पञ्चाशत्।

नहि नहि, निपुणं विचिन्त्य ब्रूहि।

आर्य्य, षट्पञ्चाशदेव।

भवतु, अष्टकृत्वः अष्ट विलिख्यन्ताम्। एषां योगेन किं वा भवति।

द्विसप्ततिः।

सम्यक्। इत ऊर्ध्वं यदैव संशयः स्यात् तदैवेत्थं विलिख्य द्रष्टव्यम्।

## परम्परया सम्बन्धः

शकटनन्दप्रदेशीयाः प्रायेण कृपणा भवन्ति। एकदैकेन तद्देशीयेन मात्स्यिकस्यापणं प्रविश्योक्तम्। क्षुद्र एकः सामुद्रो मत्स्यो दीयतामिति।

आपणिकोऽपृच्छत्, आर्य, केवलमेक एव ।

अथ किम्? पत्नी मे पीड़िता, भिषजोक्तम्, समुद्रवातेन तस्याः पीडोपशमः स्यादिति । अत एव तस्यै वीजनार्थं मत्स्योऽयमपेक्ष्यते मया ।

---

## पुस्तक-परिचयः

**Sandhya, Visvadeva, Tarpanam etc.** Price Rs. 2-4-0. सन्ध्यावन्दनमन्त्राणां तात्पर्य्यम्, शरीररक्षणविषयः, भोजनशौचादिविषयः, सदाचारप्रतिपादकानि सरलाङ्गलभाषामयाणि परमोपकारकाणि द्विशताधिकसूत्राणि, श्रीसूक्तम्, पुरुषसूक्तम्, कनकधारास्तवः, इदंप्रथमतया मुद्रितं महेशमहिम्नः स्तोत्रं चात्र विलसन्ति । Rasashala Aushadhashram, Gondal, Kathiawad इत्यतो लभ्यः परमोपादेयोऽयं ग्रन्थः ।

**यज्ञफलम् ।** महाकविभास-विरचितं नाटकम् । मूल्यं रूपकपञ्चकम् । इदं नाटकमितराणि च गणपतिशास्त्रिमहोदयेन प्रकाशितानि रूपकाणि प्राचीनमहाकविविरचितानि भवन्तु वा मा वा सर्वेषामेवैषामतिमात्रमनोहरत्वे नास्ति लेशतोऽपि संशयः । अवश्यपाठ्यमिदं यज्ञफलं नाम नाटकं छात्राणां चाध्यापकानां चेतरेषां च । Rasashala Aushadhashram, Gondal, Kathiawad इत्यतो लभ्यम् ।

**दशरूपकम् ।** धनञ्जय-विरचितम् । धनिककृतटीका-सरलाङ्गलानुवादटिप्पण्यादिविभूषितम् । मूल्यं रूप्यकपञ्चकम् । ( Rasashala Aushadhashram, Gondal, Kathiawad.)

साहित्यशास्त्रं प्रविविक्षूणां छात्राणामतीवोपकारकं दशरूपकं दूरूहतया दुरवबोधमासीत् । इदानीं सरलाङ्गलानुवादसाहायकेन छात्रा विनैवायासं नाटकादीनां लक्षणानि सन्धिवृत्तिरताकास्थान-

प्रभृतीनि च विज्ञातुं प्रभवेयुः। यैर्नाटकमधीयते यैश्चाध्याप्यते यैः साहित्यदर्पणस्य षष्ठः परिच्छेदोऽधीयतेऽध्याप्यते वा तैः सर्वैरवश्यमेव संग्राह्यमिदं पुस्तकम्।

**पूर्वपाणिनीयम्।** राजवैद्य-जे के शास्त्रि-विरचितम्। मूल्यमाणकाष्टकम्। रसशाला औषधाश्रमम्, गोन्दाल, सौराष्ट्रदेशः।

अत्र प्राचीनहस्तलिखितपुस्तकसन्दर्शनेन पाणिनेः पूर्ववर्त्तितया प्रसिद्धानि व्याकरणशास्त्रस्य प्रयोजनादिप्रतिपादकानि चतुर्विंशतिः सूत्राणि सम्मुद्रितानि। अत्र च प्राथमिकं सूत्रम्—अथशब्दानुशासनम् इति। सूत्राणां च विचारादिकमतिमात्रं निपुणतया व्यधायि शास्त्रिमहाभागेन। साम्प्रतं या किलाष्टाध्याय्युपलभ्यते तत्र शास्त्रप्रयोजनादिकं न प्रतिपादितम्, एतेन ग्रन्थेन तस्याः पूर्तिर्विहिता। सुमहत् किलोपकृतं विपश्चितां शास्त्रिमहोदयेन पूर्वपाणिनीयमिदं प्रकाशं नयता। अवश्यं संग्राह्यमिदं पुस्तकं संस्कृतज्ञैः।

इतरेषां ग्रन्थानां परिचयो वारान्तरे प्रकाशयिष्यते, उपरि निर्दिष्टानां च ग्रन्थानां विस्तरेणालोचनं यथावसरं विधास्यते।

**संस्कृतनिबन्धसंग्रहः** (संस्कृतपरीक्षोपयोगी)। वागेवाडीकरोपनाम्ना वासुदेवशर्मणा विहितः। मूल्यमाणकाष्टकमात्रम्। ९६ मुरारजी पेठ, सोलापुर इत्यतो लभ्यमिदं पुस्तकम्।

संस्कृतपरीक्षासु प्रबन्धलेखनमावश्यकं भवति। तद्विषये च शोभनानां पुस्तकानामत्यन्तस एवाभावः सन्दृश्यते। अत एव परीक्षार्थिनां छात्राणामुपकारार्थं वासुदेवशास्त्रिमहोदयेन ग्रन्थोऽयं सन्दृब्धः। अतिमात्रमुपकारकोऽयं ग्रन्थः परीक्षार्थिनां चेतरेषां च, मूल्यमप्यस्यातिमात्रमल्पम्। आशास्यते विद्यालयेषु पाठ्यतया पुस्तकमिदं निर्दिश्येत। अत्र सरलया प्रसन्नया च संस्कृतभाषया

रचिताः प्रातःकालः-वसन्तः-धेनुः-नगरपालिका-कृषीवल-वाणिज्यम्-आश्रमः-अहिंसा-अर्थो घटो घोषमुपैति नूनम्-शीलं परं भूषणम्-उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः-गङ्गायमुनयोः सङ्गमः-विद्वान् सर्वत्र पूज्यते-संसर्गजा दोषगुणा भवन्ति-शरीरमाद्यं खलु धर्मसाधनम्-आशावधिं को गतः-अविवेकः परमापदां पदम्-प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते-अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्-दारिद्र्यदोषो गुणराशिनाशी-दुर्भिक्षम्-न कामवृत्तिर्वचनीयमीक्षते-तेजसां हि न वयः समीक्ष्यते-शरदृतुः-साहसे श्रीः प्रतिवसति-कालिदासः-भवभूतिः-भारविः-दण्डी-माघः इति शीर्षकाः प्रबन्धा विराजन्ते।

**Presidential Address by Dr. V. Raghavan, M.A., Ph.D. at the 15th All India Oriental Conference (Classical Sanskrit Section), Bombay, 1949.**

मुम्बापुर्यामभिनिर्वृत्तस्य निखिलभारतीयसंस्कृतमहासम्मेलनस्य पञ्चदशेऽधिवेशने साहित्यशास्त्रनिष्णातस्य सभापते राघवन्-महोदयस्य भाषणमिदं विविधतथ्यभासुरं पठनमात्रेणैवापहरेन्मानसानि सहृदयानाम्। अत्र नातिचिरात् प्रकाशितानां विशिष्टसंस्कृतग्रन्थानां परिचयो वर्तते। अन्ते च संस्कृतभाषायाः सरलीकरणमधिकृत्य भाषणं समुल्लसति। अस्मिंश्चान्तिमे भाषणे राघवन्महोदयेनोक्तम्—The very rise of the non-Paninean schools of grammar is proof of this constant desire to simplify the language अर्थात् अपाणिनीयानां व्याकरणानां प्रादुर्भाव एव भाषाया सरलीकरणस्य सार्वदिक्यामस्यां समीहायां प्रमाणमिति। एतत्तु न समीचीनतया प्रतिभाति। वङ्गदेश एव लीलाभवनमपाणिनीयानां प्रस्थानानाम्। परं कातन्त्रे वा मुग्धबोधे वा तत्प्रत्ययसाहायकेन सुबादीनां निरसनं स्वार्थे णिचः प्रयोगेण

वाख्यातकाठिन्यापसारणं क्वापि न दृष्टम्। संस्कृतभाषायाः सरलीकरणेऽस्माकं लेशतोऽपि वैमत्यं नास्ति, परं सरलीकरणमिदं प्राकृतभाषाणां सरणिमनुसृत्य प्रवर्त्यते चेन्नचिरादेव संस्कृतं प्राकृते विपरिणतं स्यात्*। ततश्च "अन्ते रण्डाविवाहश्चेदादावेव कुतो न सः" इति न्याय आपतेत्। संस्कृतस्यैव राष्ट्रभाषात्वमस्माभिः काम्यते, न पुनः प्राकृतानाम्, सरलीकरणावसर एतन्न विस्मरणीयम्। श्रीभारमहोदयेन यदुक्तं तत्रास्माकं लेशतोऽपि विप्रतिपत्तिर्नास्तीति शम्।

---

* तथाहि माद्राज-पत्तनस्थ-हिन्दु-पत्रे लिखितम्—

Sir,—The Governor of West Bengal is reported to have invited scholars to set up an organisation to simplify Sanskrit. Some 13 years ago, Prof. F. W. Thomas of the University of Oxford made a similar suggestion. There may be others who approve such a proposal.

The idea, however, of applying the pruning knife to the luxuriant growth of Sanskrit cannot but horrify a true lover of that divine language.

Instead of setting up pruning commissions, it would be better if we set an example by producing a work or two in Sanskrit in a simple aud lucid style, to which perhaps no language in the world can so readily lend itseif as Sanskrit can. If one chooses to employ simple words and short sentences, the rumbling compounds and complicated conjugations will not by themselves press their claims to employment.

Sanskrit is a vast garden which abounds in flowers of every hue and fragrance. It will not be decent if, for entering it, we make it a condition precedent to pull out certain varieties of them. It is enough if we leave the marigolds alone if their scent be considered headache-producing: and we can take honeysuckles for our nosegay. If dahlias and magnolias are found to be too gaudy and too big, we need not pluck them, but, instead, we can fill our bouquet with pansies, violets and forget-me-nots.

Further, how can the canal flowing from the Ganges have the same sanctity as the Ganges?

Ootacamund. B. Ch. Chhabra.

# What Scholars think of the Manjusha.

**Dr. Suniti Kumar Chatterji**, M.A., D.LIT. (London) Professor, Calcutta University, writes :

This little paper is unique in many respects. Sanskrit is said to be a dead language in India, but it is not yet as dead as many people think (or as some people would like to think !)...

We have still about half-a-dozen Sanskrit journals in India, apart from fairly frequent addresses and dissertations which are published independently. Among these journals, the *Manjusha* which is probably the only one of its kind appearing *regularly* month after month, has made quite a unique place of its own.

The *Manjusha* is run by Dr. Kshitish Chandra Chatterjee of the University of Calcutta, who is one of our most erudite authorities on the technical and other niceties of Sanskrit grammar. He is a student of languages and, in addition, he handles Sanskrit with ease. It has been his love of Sanskrit that has made him carry on the work of editing and bringing out this paper since its inception by himself....Financially it has been a thankless task. It has brought other disadvantages also—the editing and financing of a journal without much wide appeal because of its language has been a source of worry which has had its repercussions on his health. But he has not given in, because he is an incorrigible optimist when he is convinced his cause is noble. Prof. Chatterjee is quite an institution in himself. Then, he has been able to enlist a number of disinterested colleagues who help him with contributions and who are enthusiasts for Sanskrit like himself. And he himself writes. It is a remarkable thing that although he finds joy in unravelling the intricacies of Sanskrit grammar, he is not in his mental make-up a dry-as-dust grammarian. He has a wonderful sense of humour, supported by an inexhaustible fund of anecdotes and stories which he brings out in racy Sanskrit. So the pages of the *Manjusha* at times sparkle with laughter. Comparative linguistics he brings in frequently in his articles, and this is a remarkable "special feature" of this little paper. Further, it does not confine itself to Sanskrit alone. Proverbs, *Bon-mots*, wise sayings, *Mahavakyas*, etc. from different languages, English, French, German, Latin, etc., are rendered appropriately into Sanskrit, demonstrating the capacity of the language of the Gods to keep pace with turns of expression peculiar to various languages. One can say also that there is an "English Section" to this magazine, devoted as it is entirely to the culture of Sanskrit. Thus, the editor himself is bringing out through this magazine, in instalments, his English translation and commentary on the *Mahabhashya*

of Patañjali which, when completed, will be a valuable contribution to the study of Sanskrit grammar through English.

A journal like this deserves a much wider appreciation which is its due. I think our high school students reading Sanskrit will find much of interest, pleasure and profit in it. I would suggest its being taken in all schools, colleges and universities in India where Sanskrit is taught. Prof. Chatterjee has been able to obtain contributions from eminent Sanskritists not only from all over India but also from abroad and that is no negligible achievement. All power to his elbow for the rehabilitation and the glory of Sanskrit, and for re-establishing its popularity among young Indians of today !

---



---

Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press, 63, Beadon Street, Calcutta—6.

श्रीशिवः शरणम्

७म-वर्षे December, 1950. ४र्थ-संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Principal Contents.



## Next Month



---

**Dr. Berriedale Keith wrote to the Editor :**

"*You always throw welcome light on the topics discussed.*"

---

Office : 81 Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign—Rupees Eight.

# मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचारः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते; तृतीये भागे सानुवादाः पारसीकानां गाथाः, साङ्लानुवादं महाभाष्यम्, ऋग्वेदश्च सभाष्यो मुद्र्यन्ते।

**Several complete sets of Vol. IV of the Manjusha are still available for Rs. 6/- and only a few sets of Vols. I-III are available at Rs. 5/12/- for the lot.**

**श्रीविश्वनाथ चट्टोपाध्यायः।**
८१ श्यामबाजार ष्ट्रीट्, कलिकाता ४।
81, Shyambazar Street, Calcutta 4.
Phone : B. B. 4049.

TECHNICAL TERMS AND TECHNIQUE OF

# SANSKRIT GRAMMAR

## A Critical, Comparative and Historical Study

By

KSHITISH CHANDRA CHATTERJI, SASTRI, M. A., D. LITT.

*Lecturer, Calcutta University,*
*Formerly Editor, Calcutta Oriental Journal,*
*Surabharati, Oriental Literary Digest, etc., etc.*

*Price Rupees Ten only.* *Foreign Rs. 12/-*
*Postage Extra.*

**The Modern Review** (December, 1950) **says :**

"Honour to whom honour is due. Dr. Chatterji has broken entirely new ground in his **Technical Terms and Technique of Sanskrit Grammar** and demonstrated clearly that Bengal, though fallen on evil days, can even now produce works on Indology that invite and bear comparison with the best work prodnced in any part of the world. Who ever thought that all the technical terms admitted of satisfactory explanation and who ever imagined that a work on grammatical terminology could be made as delightful as a novel ? In this volume of nearly 350 pages the technical terms of Sanskrit grammar from the Brahmanas, Nirukta, Pratishakhyas, Panini, Katyayana, Patanjali, down to Prayogaratnamala and Harinamamrita have been considered critically and historically in all their bearings and apparently arbitrary technical terms like *gha*, *bha*, *lat*, *lit*, etc., have been traced to their sources. **We have nothing but admiration for this masterpiece of scholarship and warmly recommend it to our readers.**"

**VISVANATH CHATTERJI**
**81, Shyambazar Street,**
**CALCUTTA—4.**
**Phone : B. B. 4049.**

কলিকাতা বিশ্ববিদ্যালয়ের অধ্যাপক
শ্রীক্ষিতীশচন্দ্র চট্টোপাধ্যায় এম. এ., ডি. লিট্
প্রণীত

# শব্দ-কথা

ইহাতে সরল ও সরসভাবে বাঙ্গালা ভাষার চলতি ভুলগুলির আলোচনা করা হইয়াছে। **সংস্কৃত ব্যাকরণের দিক্ দিয়া, বাঙ্গালা ভাষার দিক্ দিয়া, ভাষাতত্ত্বের দিক্ দিয়া,** বঙ্গদর্শন প্রভৃতি হইতে ভূরি ভূরি উদাহরণ উদ্ধৃত করিয়া শব্দ ও শব্দসমষ্টির শুদ্ধি ও অশুদ্ধি বিবেচিত হইয়াছে। ওতপ্রোতশব্দে বিসর্গ আছে কি না, যদি থাকে প্রথম 'ত'র পর আছে, না দ্বিতীয় ত'র পর আছে, না উভয় ত'র পর আছে, সঠিক শব্দ ঠিক কি না, 'ব্যবহারিক' ব্যবহারযোগ্য কি না, আবশ্যক ও আবশ্যকতার প্রভেদ কি, চন্দ্রমাঃ, পূর্ণিমা ও অমাবস্যা শব্দের ব্যুৎপত্তি কি, লাবণ্যলালিম মুখমণ্ডল কমনীয় কিনা, অনীতা, নমিতা, ইভা, জিগেন্দ্র প্রভৃতি নামগুলির অর্থ কি প্রভৃতি নানা বিষয় আলোচিত হইয়াছে। "সোনার পাথর বাটী" প্রবন্ধে সংস্কৃত, বাঙ্গালায় ইংরাজী, গ্রীক্, লাটিন্, জার্ম্মান প্রভৃতি নানা ভাষার সোনার পাথর বাটী জাতীয় শব্দগুলি সন্নিবিষ্ট হইয়াছে। ক্রিয়াবিশেষণ প্রবন্ধে বাঙ্গালা, ইংরাজী ও ফরাসী ক্রিয়ার বিশেষণগুলির মূল অর্থ বিবেচিত হইয়াছে। সন্ধির কথায় সন্ধির বৈজ্ঞানিক ব্যাখ্যা ও ইংরাজী, লাটিন ও আরবী ভাষার সন্ধি প্রদর্শিত হইয়াছে; সন্ধি, ষত্ব ও ণত্ব সম্বন্ধীয় নিয়মগুলি সরলভাবে বোঝান হইয়াছে ও বাঙ্গালা উপন্যাসাদি হইতে শত শত দৃষ্টান্ত সন্নিবিষ্ট হইয়াছে। বাঙ্গালা, ইংরাজী ও সংস্কৃত ভাষার অধ্যাপক ও ছাত্রের পক্ষে এবং সাহিত্যিক, সাংবাদিক প্রভৃতির পক্ষে এই গ্রন্থ অত্যাবশ্যক।

শব্দশাস্ত্র সম্বন্ধে এরূপ সরস গ্রন্থ, একাধারে চিত্তবিনোদক ও শিক্ষাপ্রদ এই জাতীয় গ্রন্থ, বাঙ্গালা সাহিত্যে অল্পই আছে। **মূল্য দুই টাকা মাত্র।**

# উষার আলো

ইহাতে দেশ বিদেশে প্রচলিত হাস্যরসাত্মক কৌতূহলোদ্দীপক অথচ শিক্ষাপ্রদ শতাধিক ছোট গল্প সন্নিবিষ্ট হইয়াছে। পড়িতে পড়িতে হাসিয়া অস্থির হইতে হইবে। আবালবৃদ্ধবনিতা সকলেরই ভাল লাগিবে। যুগান্তর, অমৃতবাজার পত্রিকা, ভয়েস্ অভ্ ইণ্ডিয়া প্রভৃতি পত্রে উচ্চ প্রশংসিত। আজই একখণ্ড সংগ্রহ করুন। **মূল্য বার আনা মাত্র।**

শ্রীবিশ্বনাথ চট্টোপাধ্যায়
৮১নং, নিউ শ্যামবাজার ষ্ট্রীট, কলিকাতা—৪

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा


| December, 1950. | १८७२-शकीय-पौषस्य<br>५म-वर्षस्य चतुर्थ-संख्या | Vol. V<br>No. 4 |
|---|---|---|


## भारतरत्नसंग्रहः

[ वनपर्व, २८ ]

असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥ २ ॥
क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।
एतन्मे संशयं तात यथावद् ब्रूहि पृच्छते ॥ ३ ॥
तस्मै प्रोवाच तत् सर्वमेवं पृष्टः पितामहः ।
सर्वनिश्चयवित् प्राज्ञः संशयं परिपृच्छते ॥ ४ ॥
न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात विजानीहि द्वयमेतदसंशयम् ॥ ६ ॥
यो नित्यं क्षमते तात बहून् दोषान् स विन्दति ।
भृत्याः परिभवन्त्येनमुदासीनास्तथारयः ॥ ७ ॥
सर्वभूतानि चाप्यस्य न नमन्ते कदाचन ।

तस्मान्नित्यं क्षमा तात पण्डितैरपवर्जिता ॥ ८ ॥
अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम् ।
आदातुञ्चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥ ९ ॥
यानं वस्त्राण्यलंकाराञ् शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ १० ॥
आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्यु र्भर्तृ शासनात् ॥ ११ ॥
न चैनं भर्तृपूजाभिः पूजयन्ति कथञ्चन ।
अवज्ञानं हि लोकेऽस्मिन् मरणादपि गर्हितम् ॥ १२ ॥
क्षमिणं तादृशं तात ब्रुवन्ति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ १३ ॥
अथास्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्त्तन्ते यथाकाममचेतसः ॥ १४ ॥
तथाच नित्यमुदिता यदि नाल्पमपीश्वरात् ।
दण्डमर्हन्ति दुष्यन्ति दुष्टाश्चाप्यपकुर्वते ॥ १५ ॥
एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने दोषानिमान् विद्ध्यक्षमावताम् ॥ १६ ॥
अस्थाने यदि वा स्थाने सततं रजसावृतः ।
क्रुद्धो दण्डान् प्रणयति विविधान् स्वेन तेजसा ॥ १७ ॥
मित्रैः सह विरोधञ्च प्राप्नुते तेजसा वृतः ।
आप्नोति द्वेष्यताञ्चैव लोकात् स्वजनतस्तथा ॥ १८ ॥
सोऽवमानादर्थहानिमुपालम्भमनादरम् ।
सन्तापद्वेषमोहांश्च शत्रूंश्च लभते नरः ॥ १९ ॥
क्रोधाद्दण्डान् मनुष्येषु प्रणयन् पुरुषोऽनयात् ।
भ्रश्यते शीघ्रमैश्वर्यात् प्राणेभ्यः स्वजनादपि ॥ २० ॥

योऽपकर्तृंश्च हन्तृंश्च तेजसैवोपगच्छति ।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ २१ ॥
यस्मादुद्विजते लोकः कथं तस्य भवो भवेत् ।
अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ॥ २२ ॥
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ।
काले-काले तु सम्प्राप्ते मृदुस्तीक्ष्णोऽपि वा भवेत् ॥ २३ ॥
काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ २४ ॥
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसन्त्याज्या यथा प्राहुर्मनीषिणः ॥ २५ ॥
पूर्वोपकारी यस्ते स्यादपराधे गरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ २६ ॥
अबुद्धिमाश्रितानान्तु क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्यं सुलभं पुरुषेण वै ॥ २७ ॥
अथ चेद् बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान् स्वल्पेऽपि तान् हन्यादपराधे तथानृजून् ॥ २८ ॥
सर्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ २९ ॥
अजानता भवेत् कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥ ३० ॥
मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम् ।
नासाध्यं मृदुना किञ्चित् तस्मात् तीव्रतरं मृदु ॥ ३१ ॥
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
नादेशकाले किञ्चित् स्याद् देशकालौ प्रतीक्षताम् ॥ ३२ ॥
तथा लोकभयाच्चैव क्षन्तव्यमपराधिनः ।

एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ॥
अतोऽन्यथानुवर्तत्सु तेजसः काल उच्यते ॥ ३३ ॥

---

# आभाणकादि

१। Never cast dirt into the fountain of which thou hast sometime drunk.

निर्झरस्य जलं यस्य परिपीतं त्वया क्वचित्।
तमुद्दिश्य मलं भद्र मा निक्षिप कदाचन॥

२। Hard with hard makes not the stone wall.
Hard without soft, the wall is nought.

(ला) Durum et durum non faciunt murum.

कठिनं च कठिनं च दृषत्कुड्यं न कुर्वतः।

[कठिन-कोमलयोः संयोगेनैव जागतं कार्यजातमभिनिष्पद्यते। यथाहि केवलं कठिनशिलासंयोगेनाश्मनभित्तिर्न जायते, तदर्थं कोमलं सलिलसेकसुभगं सिकताचूर्णमप्यपेक्ष्यते, तथैव केवलपरुष-व्यवहारेण किमपि साधयितुं न शक्यते। अतोऽस्माभिर्वज्रादपि कठोरैः कुसुमादपि च कोमलैर्भाव्यम्।]

३। (हि) मरद की वात, हाथी का दाँत।

पुरुषाणां वचः, दन्तिनां च दन्तः।

"निर्गत्य न विशेद् भूयो महतां दन्तिदन्तवत्।
कूर्मग्रीवेव नीचानां वच आयाति याति च॥"

४। Look upon your own faults and you will never think of your neighbours'.

(ला) Quando voles alios verbis mordere caninis,
Facta tui cordis respice, mutus eris.

'आत्मच्छिद्रं न जानाति परच्छिद्राणि पश्यति ।
स्वच्छिद्रं यदि जानाति परच्छिद्रं न पश्यति ॥"

५। (च) पाँच आङ्गुल समान हय ना ।

न खलु पञ्चाप्यङ्गुलयः समाना भवन्ति ।

"समौ चिद्धस्तौ न समं विविष्टः
संमातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि
ज्ञाती चित् सन्तौ न समं पृणीतः ॥

ऋग्वेदसंहिता १०।१।१७।६

---

# पाणिनिसूत्रविमर्शः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

अष्टाध्याय्यां द्विष्टिठन्-प्रत्यय उपलभ्यते, तत्र टकारो ङीबर्थः, इकार उच्चारणार्थः, नकारश्च स्वरार्थ इति स्पष्टमेव। "श्राणा-मांसौदनाट्टिठन्," [ ४।४।६७ ] इति सूत्रेण श्राणा-शब्दान्मांसौदन-शब्दाच्च टिठन्-प्रत्ययो विहितः। अत्रत्ययोरुभयोरपि प्रातिपदिकयोर्वृद्धत्वाट्ठञ्-प्रत्ययेनैवेष्टसिद्धौ किं गरीयसा टिठन्कल्पने-नेत्याशङ्क्य जयादित्येनोक्तम्—मांसौदनग्रहणं सङ्घातविगृहीतार्थं केचिदिच्छन्ति। तत्र वृद्ध्यभावो विशेष इति। व्याख्यातश्चेदं न्यासकृता—"केचिदिति वचनात्, विगृहीतवचनं केचिन्नेच्छन्तीत्येतदुक्तं भवति। तन्मते ठञेव वक्तव्यः। टिठन्-वचनं वैचित्र्यार्थं वेदितव्यम्" इति।

चान्द्रे व्याकरणे "ओदनाट्ठट्" [ ३। ४। ६८ ] इति सूत्रमुपलभ्यते। तत्र वृत्तिकृतोक्तम्—कथं श्राणिकः, श्राणिकी, मांसो-

दनिकः, मांसौदनिकी, मांसिकः, मांसिकीति। पूर्वेण [ =उक्ता ] सिद्धम्। स्वरं तु वक्ष्याम इति।

भोजराजेन सरस्वतीकण्ठाभरणे "श्राणामांसमांसौदनौदनेभ्यष्टिकन्" [ ४।४।२६ ] इति सूत्रं प्रणीतम्। तत्र वृत्तिकृतोक्तम्—"श्राणादिभ्यष्ठकैव सिद्धे टिकन्करणं स्वरार्थम्" इति।

संक्षिप्तसारे "श्राणामांसौदनाट्टिकः" "मांसौदनादित्येके" [ तद्धित ७६३-७६४ ] इति सूत्रद्वितयं समुल्लसति। तत्र टीकाकृता गोयीचन्द्रेणोक्तम्—श्राणामांसयोष्टिकविधानं वैचित्र्यार्थम्, पूर्वलक्षणविहितेन टिकेनापि लक्ष्यसिद्धेः। ये तु मांसौदनाट्टिकमिच्छन्ति तेषां लक्षणमेव वैचित्र्यार्थम्। इति।

"कंसाट्टिठन्" [ ५।२।२५ ] इति सूत्रस्य पदमञ्जर्यां हरदत्तमिश्रैरुक्तम्—"प्रक्रियालाघवाय टिठन्नेव वक्तव्यः, तथा तु न कृतमित्येव" इति। अत्रापि चान्द्रे "कंसार्धाट् ठट्" (४।२।२६) इति ठट् प्रत्यय एव विहितः। मद्राजविश्वविद्यालयतः प्रकाशिते सरस्वतीकण्ठाभरणे "कंसार्धाभ्यां टिठन्" इत्यत्र टिठन्नेवोपलभ्यते, परमेतत् प्रामादिकतया प्रतिभासते।

यथा वयं पश्यामस्तथा केवलं छन्दोऽनुरोधेनैव प्राथमिके सूत्रे टिठन्नुपासितः, तथाहि "श्राणामांसौदनाट्टिठन्" इत्यस्यानुष्टुबगतद्वितीयचतुर्थचरणयोरन्यतरत्वं स्फुटमेव। पूर्वं सूत्रं "तदस्मै दीयते नियुक्तम्" इति पठ्यते प्रामाणिकैः। अत्रोपसर्गविसर्जनेन

"तदस्मै दीयते युक्तं श्राणामांसौदनाट्टिठन्।"

इतिश्लोकार्धं सञ्जायते। अत एव भगवता सूत्रकारेण छन्दोबद्धप्राचीनतराद् व्याकरणात् "पक्षिमत्स्यमृगान् हन्ति" प्रभृतिकमिव "श्राणामांसौदनाट्टिठन्" इति सूत्रमपि स्वीकृतमिति प्रतिभाति। "श्राणान्मांसौदनाट्टिठन्" इति पाठे सूत्रमसन्दिग्धं स्यात्।

In Pāṇini's grammar we come across the rather curious secondary suffix *ṭiṭhan*. It occurs in two rules, viz. *s'rāṇāmāṃsaudanāṭ ṭiṭhan* iv. 4. 67 and *kaṃsāṭ ṭiṭhan*. The suffix, of course, is *ika* which is represented by *ṭha* in Pāṇini (*ṭhasyekaḥ* vii. 3. 50). The anubandha *ṭ* at the beginning ensures *ṅīp* in the feminine, *i* has been put in for ease of utterance and the anubandha *n* at the end shows that the word formed with the suffix will be accented on the first syllable. But all these purposes could easily have been served by the generally accepted suffix *ṭhañ*. No doubt the indicatory ñ would lengthen the vowels in the first syllable, but as the first syllables of the words *s'rāṇā* and *māṃsaudana* for which the suffix is prescribed are already Vṛiddhi vowels, that does not cause the slightest inconvenience. If, as some commentators insist, the suffix is to be added to *s'rāṇa, māṃsa* and *odana* then, no doubt, ṭhañ would give the undesirable form *audanikī* instead of the form intended viz. *odanikī*, but it is very doubtful if Pāṇini intended the suffix to apply to *odana*.

The fact is Pāṇini is quoting from one of his metrical authorities and "s'rāṇāmāṃsaudanāṭ ṭiṭhan" is the second or fourth verse of the Anuṣṭup metre. The preceding rule is *tad asmai dīyate niyuktam*. If we drop the upasarga *ni* then we can have a hemistich of the same metre.

It is well known that some rules in the Taddhita section of the Aṣṭādhyāyī and all the rules in the Taddhita section of the Kātantra are metrical. (See *Technical terms and Technique of Sanskrit Grammar*, Part I, pp. 267-269.)

It would appear also that considerations of metre prevented Pāṇini from using the dual form *s'rāṇāmāṃsaudanābhyām* and making his rule free from ambiguity.

It may be mentoined in this connection that Bhoja in his Sarasvatīkaṇṭhābharaṇa has *ṭikan* for *ṭiṭhan*, though the

Madras edition has *tiṭhan* (evidently a mistake) in the second case, (even as the Trivandrum edition has *audanikī* for *odanikī* under iv. 4. 134). This, no doubt, saves the operation of the rule for the substitution of *ika* for *ṭha*, but Pāṇini wanted uniformity and has *ṭha* for *ika* in every case

---

# उत्तमस्य विशेषेण कलङ्कोत्पादको जनः।

(कथासरित्सागरतः)

गङ्गोपकण्ठे कुसुमपुरं नामास्ति यत्पुरम्।
हरस्वामीति कोऽप्यासीत् तीर्थार्थी तत्र तापसः॥
स भैक्षवृत्तिर्विप्रोऽत्र गङ्गातीरकृतोटजः।
तपःप्रकर्षाल्लोकस्य गौरवास्पदतां ययौ॥
कदाचिच्चात्र तं दृष्ट्वा दूराद् भिक्षाविनिर्गतम्।
जनमध्ये जगादैकस्तद्गुणासहनः खलः॥
अपि जानीथ जातोऽयं कीदृक्कपटतापसः।
अनेनैवार्भकाः सर्वे नगरेऽमुत्र भक्षिताः॥
तच्छ्रुत्वा च द्वितीयोऽत्र तत्रावोचत तादृशः।
सत्यं श्रुतं मयाप्येतदुच्यमानं जनैरिति॥
एवमेतदिति प्राह तृतीयोऽपि समर्थयन् ( ? )।
बध्नात्यार्यपरीवादं खलसंवादशृङ्खला॥
तेनैव च क्रमेणैष गतः कर्णपरम्पराम्।
प्रवादो बहुलीभावं सर्वत्रात्र पुरे ययौ॥
पौराश्च सर्वे गेहेभ्यो बलाद् बालान्न तत्यजुः।
हरस्वामी शिशून्नीत्वा भक्षयत्यखिलानिति॥

ततश्च ब्राह्मणास्तत्र सन्ततिक्षयभीरवः ।
सम्भूय मन्त्रयामासुः पुरात् तस्य प्रवासनम् ॥
ग्रसेत कुपितः सोऽस्मानिति साक्षाद् भयान्न ते ।
यदा तस्याशकन् वक्तुं दूतान् विससृजुस्तदा ॥
ते च गत्वा तदा दूता दूरादेव तमब्रुवन् ।
नगराद् गम्यतामस्मादित्याहुस्त्वां द्विजातयः ॥
किं निमित्तमिति प्रोक्ता विस्मितेनाथ तेन ते ।
पुनरूचुस्त्वमश्नासि बालदर्शमिहेति तम् ॥
तच्छ्रुत्वा स हरस्वामी स्वयं प्रत्यायनेच्छया ।
विप्राणां निकटं तेषां भीतित्रस्यज्जनो ययौ ॥
विप्राश्चारुरुहुस्त्रासात्तं दृष्ट्वैव मठोपरि ।
प्रवादमोहितः प्रायो न विचारक्षमो जनः ॥
अथ द्विजान् हरस्वामी तानेकैकमधः स्थितः ।
नामग्राहं समाहूय स जगादोपरिस्थितान् ॥
कोऽयं मोहोऽद्य वो विप्रा अवेक्षध्वं परस्परम् ।
कियन्तो बालकाः कस्य मया कुत्र च भक्षिताः ॥
तच्छ्रुत्वा यावदन्योन्यं विप्राः परिमृशन्ति ते ।
तावत् सर्वेऽपि सर्वेषां जीवन्तो बालकाः स्थिताः ॥
क्रमान्नियुक्ताश्चान्येऽपि पौरास्तत्र तथैव तत् ।
प्रत्यपद्यन्त सर्वेऽपि सविप्रवणिजोऽब्रुवन् ॥
अहो विमूढैरस्माभिः साधुर्मिथ्यैव दूषितः ।
जीवन्ति बालाः सर्वेषां तत् कस्यानेन भक्षिताः ॥
इत्युक्तवत्सु सर्वेषु हरस्वामी तथैव सः ।
सम्पन्नशुद्धिर्नगराद् गन्तुं प्रववृते ततः ॥

दुर्जनोत्पादितावद्यविरक्तीकृतचेतसा ।
अविवेकिनि दुर्देशे रतिः का हि मनस्विनः ॥
ततो वणिग्भिर्विप्रैश्च प्रार्थितश्चरणानतैः ।
कथञ्चित् स हरस्वामी तत्र वस्तुममन्यत ॥
इत्थं सच्चरितावलोकन-लसद्-विद्वेष-वाचालिता
मिथ्यादूषणमेवमेव ददति प्रायः सतां दुर्जनाः ।
किञ्चित् किं पुनराप्नुवन्ति यदि ते तत्रावकाशं मनाग्
द्रष्टुं तज्ज्वलितेऽनले निपतितः प्राज्याज्यधारोत्करः ॥

There is a city on the banks of the Ganges named Kusumapura, and in it there was an ascetic who visited holy places, named Harasvamin. He was a Brahman living by begging ; and constructing a hut on the banks of the Ganges, he became, on account of his surprisingly rigid asceticism, the object of the people's respect. And one day a wicked man among the inhabitants, who could not tolerate his virtue, seeing him from a distance going out to beg, said, "Do you know what a hypocritical ascetic that is ? 'It is he that has eaten up all the children in this town." When a second there who was like him, heard this, he said, "It is true, I also have heard people saying this." And a third confirming it said, "Such is the fact." The chain of villains' conversation binds reproach on the good. And in this way the report spread from ear to ear, and found general credence in the city. And all the citizens kept their children by force in their houses, saying, "Harasvamin carries off all the children and eats them." And then the Brahmans in that town, afraid that their offspring would he destroyed, assembled and deliberated about his banishment from the city. And as they did not dare to tell him face to face, for fear he might perhaps eat them up in his rage, they sent messengers to him. And

those messengers went and said to him from a distance, "The Brahmans command you to depart from this city." Then in his astonishment he asked them, "Why?" And they went on to say, "You eat every child as soon as you see it." When Harasvamin heard that he went near those Brahmans, in order to reassure them, and the people fled before him for fear. And the Brahmans, as soon as they saw him, were terrified and went up to the top of their monastery. People who are deluded by reports are not, as a rule, capable of discrimination. Then Harasvamin standing below called all the Brahmans who were above, one by one, by name, and said to them, "What delusion is this, Brahmans? Why do you not ascertain with one another how many children I have eaten, and whose, and how many of each man's children?" When they heard that, the Brahmans began to compare notes among themselves, and found that all of them had all their children left alive. And in course of time other citizens, appointed to investigate the matter, admitted that all their children were living. And merchants and Brahmans and all said, "Alas in our folly we have belied a holy man; the children of all of us are alive; so whose children can he have eaten?" Harasvamin, being thus completely exonerated, prepared to leave that city, for his mind was seized with disgust at the slanderous report got up against him by wicked men. For what pleasure can a wise man take in a wicked place, the inhabitants of which are wanting in discrimination? Then the Brahmans and merchants, prostrating themselves at his feet, entreated him to stay there, and he at last, though with reluctance, consented to do so. In this way evil men often impute crime falsely to good men, allowing their malicious garrulity full play on beholding their virtuous behaviour. Much more, if they obtain a slight glimpse of any opportunity for attacking

them, do they pour copious showers of oil on the fire thus kindled.

---

# ऋग्वेद-सूक्तानि

[ श्रीमहालिङ्गशास्त्री ]

मरुतः १।८५

विनिर्यान्तः स्त्रीवद्धृतविविधभूषाः सुकृतिनः
सुता रुद्रस्यैते किमपि वलमाना हि मरुतः ।
प्रवीरा विक्षिप्तक्षितिरुहशिलाद्या विदधिरे
शुभं द्यावापृथ्व्योर्दधति च हवे हर्षमधिकम् ॥१॥

प्रवृद्धास्ते शक्त्या धरणिजनुषो रुद्रतनयाः
कमप्युच्चैः स्वेनाश्नुवत महिमानं हि मरुतः ।
स्वकं स्थानं जह्रुर्दिवि मघवतः स्तुत्यभिरता-
स्तदोजः पुष्णन्तः समधिदधिरे भूषणगणम् ॥२॥

धराजन्मानस्ते वपुरलमकुर्वन् मणिगणै-
रथागृह्णन् दीप्तं प्रहरणनिकायं द्युतिभृतः ।
प्रबाधन्ते शत्रून् पथिषु तदमीषां हि बहुधा
स्रवत्यर्णः पूर्णं वितरदभितः सम्पदुदयम् ॥३॥

यदा युङ्ग्ध्वे यूयं सह समितिभिर्मानसजवा
रथेषु स्वीयेषु स्फुटपृषतचित्रा मृगवधूः ।
धृतप्रासा धीराः स्युरिह मरुतो वः किल बलात्
तदा दूरोदस्ता अपि गिरिनगाद्याः स्थितिजुषः ॥४॥

यदा युङ्ग्ध्वे यूयं पृषतरुचिराः स्वेषु हरिणी-
रनःस्वन्नस्यद्भिर् घनपटलमुद्योज्य मरुतः ।

तदानीं स्यन्दन्ते रविसभिभवन्तोऽम्बुनिवहा
　　धरा यैः संक्लिन्ना भवति बत चर्मेव शिथिलम् ॥५॥

अये वाहा ये वस्त इह विवहन्तु प्रजविनः
　　परीप्सन्तस्तूर्णं भवत मरुतो यूयमपि नः ।
अशून्यैर्वो हस्तैरधिकुरुत वेदिं विरचितां
　　कुशास्तीर्णां सोमं पिबत बहु तृप्ताश्च भवत ॥६॥

बलं संबिभ्राणाः स्वकमलमवर्धन्त मरुतो
　　महिम्ना चातस्थुर्दिवमुरु वितत्य स्वसदनम् ।
अमीभ्यः संरक्षत्यथ च मखमारान्मुररिपौ
　　प्रिये बर्हिष्येते विहगवदिह चर्छन्तु वसतिम् ॥७॥

प्रवीरा योद्धारो नर इव यशोमार्गणपरा
　　मृधार्थं सन्नद्धास्त्वरितगतयो ये हि मरुतः ।
जगत्सर्वं तेभ्यः परमिह बिभेति स्वमहसा
　　न शक्यन्ते साक्षान्नृपतय इव द्रष्टुमपि ते ॥८॥

सहस्राश्रिं वज्रं कनकमयमुत्पाद्य चतुरो
　　यदिन्द्राय त्वष्टा व्यतरदथ तत्सौष्ठवयुतम् ।
मृधे कर्तुं शौर्यक्रममभितमादत्त मघवा
　　न्यहन् वृत्रं पूरं प्रतिहतमपामौज्भदधिकम् ॥९॥

नभस्युन्नीयोच्चैर्नुनुदुरवतं स्वेन तरसा
　　शिलासंघातं वा दृढमपि पुरः प्राप्य बिभिदुः ।
वदान्याः स्वां वीणां किमपि रणयन्तो मदपरि-
　　प्लुताः सोमेनैते द्रविणमददुर्भूरि मरुतः ॥१०॥

प्रणुद्यान्धुं तिर्यङ् नभसि विदिशा गोतममुने-
　　स्तृषार्तस्यायच्छञ्जलमथ निपानेऽस्य मरुतः ।

तमेवं चित्रांशुप्रकररुचिरा रक्षणपराः
समागच्छन् कामं खलु सफलयन्तः स्वमहसा ॥११॥
हविर्दत्वा स्तुत्या सदसि भजमानाय ददति
स्वकीयं यच्छर्म स्थितिषु तिसृषु प्राप्यमयि भोः।
भवन्तस्तद्यूयं वितरत धनं दत्त मरुतः
सूतैः साकं वीरैः श्रितफलविधातार इह नः ॥१२॥

---

# हेतु-करण-विवेकः

[ श्रीरामशङ्करभट्टाचार्यः ]

( १ )

करण-शब्दोऽयं बह्वर्थः। अस्ति इन्द्रियवाची, यथा 'न तस्य कार्यं करणं च विद्यते' इति श्वेताश्वतरश्रुतौ, अस्ति कृति-क्रियादि-वाची, यथा 'वत्करणं किमर्थम्' इत्यादिमहाभाष्ये; अस्ति च गात्र-वाची, यथा 'उपमानमभूद् विलासिनां करणं यत् तव कान्तिमत्तया' इति कुमारसम्भवे ( ४।५ )। अत्र तु शब्दशास्त्रप्रसिद्धस्य करण-शब्दस्य ग्रहणं यस्य नामान्तरमुक्तन्त्रव्याकरणे रण इति।

पाणिनिना महर्षिणा "साधकतमं करणम्" (२।४।४२) इति करणस्य लक्षणं विहितम्।

कारकप्रकरणेऽस्य पाठात् 'क्रियासिद्धौ यत् कारकं साधक-तमं तत् करणसंज्ञम्' इत्यर्थः सम्पद्यते। पाणिनीयैः करणविषये यद् विशिष्टं विवरणं दत्तं, तदत्र क्रमशः संगृह्यते। तथाहि—

(क) एतत् क्रियायां जनयितव्यायां साधकभूतम्, अत एवास्य व्याख्याने 'क्रियासिद्धौ', 'क्रियाप्रसिद्धौ', 'क्रियानिष्पत्तौ'—इत्यादीनि वचांसि दृश्यन्ते। क्रियाभेदौ अप्यत्र क्रोडीकृतौ, यथाह हरदत्तः—

सिध्यतः साध्यवतो* वा क्रियात्मनोऽर्थस्य...' इति। अश्रूयमाणां क्रियां प्रत्यपि क्वचित् करणत्वं भवति, यथा 'अलं श्रमेण' इत्यादौ।

(ख) करणव्यापारेण क्रियासिद्धिर्भवति नान्यथा, अत एव तत् साधकतमम् इत्युच्यते। वैयाकरणनिकाये फलं व्यापारश्च क्रियायां परिगणिते, अतः करणं फलसाधनयोग्यं क्रियानिष्पत्तिकारकं चेत्युच्यते।

(ग) अत्र तमबर्थः प्रकर्षः। ( अत एव क्रियानिरूपितातिशयितकारकत्ववत् करणम् इत्येव कथनं युक्ततरं भाति )। स च अव्यवधानेन फल-जनक-व्यापारवत्ता। यथाह हरिः—'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम्॥' इति। अत्र अव्यवधान-पदस्य सार्थक्यं व्याचष्टे श्रीबालकृष्णपञ्चोलिमहोदयः—'अव्यवधानेन इत्यस्य फलं तु, यत्र राजा चक्षुषा चारपुरुषान् शत्रुसैनिकान् द्रष्टुं प्रवर्तयति, तत्र राजा चक्षुषा शत्रुसैनिकान् पश्यति इति प्रयोगवारणम्, चक्षुर्व्यापाराव्यवधानेन दर्शनरूपफलाभावात्। किन्तु राजा चारैः शत्रुसैनिकान् पश्यति इत्येव प्रयोगः' ( वैयाकरणभूषणटीका प्रभा, पृः १६८ )।

(घ) करणमिदं विवक्षाधीनम्, अत एव 'विवक्ष्यते यदा यत्र' इति हरिणाऽपि उद्घोषि। अस्य वैवक्षिकत्वं दृष्टान्तेन स्फोरयति हरदत्तः—'देशकालावस्थादिभेदेन [ यदा ] यस्य क्रियां प्रति उपयोगातिशयेन व्यापारः प्रत्यासीदन् विवक्ष्यते तदा तस्य करणत्वं भवतीति, यथा स्थाली अधिकरणत्वेन प्रसिद्धा, तस्या अपि तनुतरकपालतया प्रकर्षविवक्षायां करणत्वं भवति' इति। स्वच्छीकृतं चैतद् हरिणा

* मुद्रितपदमञ्जर्यां बहुत्राशुद्धाः पाठा उपलभ्यन्ते। अत्र साध्नुवत इति पाठः समीचीनतया प्रतिभाति। मञ्जूषासम्पादकः।

वाक्यपदीये—'वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्। स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥' इति। अत्र वस्तुतः= वस्तुनि*।

(ङ) करणं च कर्त्रधीनम्। एतद्भाष्यकारस्येनावगम्यते—'इह सर्वेषु कारकेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति' (१।४।४२ सू०), अत एव 'करणं खलु सर्वत्र कर्तृव्यापारगोचरः' इति शाब्दिककथनं समीचीनं भवति।

(च) वैयाकरणाः कर्तरि क्रियासिद्धौ च दृष्टिं निक्षिप्य करण-लक्षणं चक्रुः। कार्य-करण-तत्त्वाभिनिविष्टा नैयायिकाः कारण-माश्रित्य करणलक्षणम् अभिदधुः। अत्र तेषां मतमपि संक्षेपेणो-च्यते। तथाहि—'असाधारणं कारणं करणम्' इत्यस्य सामान्यं लक्षणम्। अत्र कारण-पदेन समवाय्यसमवायि-निमित्तकारणानि गृह्यन्ते। अन्येऽत्र 'व्यापारवत्त्वे सति' इति योजयामासुः, अन्यथा तन्तुकपालसंयोगयोः अतिव्याप्तिः स्यादिति वदन्ति। किमिदमसा-धारणत्वमिति? उच्यते—कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यता-निरूपित-कारणताशालित्वम् इति। केचिच्च 'कारकान्तरेऽचरि-तार्थे सति हेतुत्वं कारणत्वम्' इत्युक्त्वा हेतुत्व-कारणत्वयोः सम्बन्धविशेषमपि दर्शयामासुः। अपरे च 'कारकत्वे सति कर्तृव्यापारविषयत्वं करणत्वम्' इत्यभिधाय प्रायेण शाब्दिकसमयं परिजगृहुः।

---

* अत्र केचिद् वदन्ति यत् कर्तृकरणयोः—इति सूत्रे करणग्रहणं सुत्यजं यतो हि हेतुत्वस्य द्रव्यादिसाधारणत्वात् 'हेतौ' इति सूत्रेणैव 'बाणेन हत' इति प्रयोगः सुसधः, 'करणाधिकरणयोश्च' इति सूत्रार्थं करणसंज्ञा तु आवश्यकयेव। विवक्षागरीयस्त्वविषये इदं स्मरणीयं यत् 'शतेन बध्नाति' इत्यत्र करणत्वविवक्षायां हेतुतृतीयाबाधिकां पञ्चमीं बाधित्वा करणतृतीयैव।

(छ) क्वचिच्च साक्षात्करणत्वाभावेऽपि भावनाविशेषेण करणत्वम् आरोप्यते, यथोक्तं काशिकायाम् 'अग्निष्टोमः फलभावनायां करणम्' इति। अस्य सोदाहरणं विवरणं मीमांसादर्शनस्य 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' इत्यधिकरणस्थाध्वरमीमांसाकुतूहलवृत्तौ दर्शनीयम्। 'क्रियतेऽनेनेति करणम्', एषा क्रिया च गौणी मुख्या वैवक्षिकी वा भवितुं योग्या, परन्तु तया क्रियया निष्पत्तिरवश्यम्भाविनी। पाणिनीयशिक्षासूत्रीयं—'येन निर्वृत्यते तत् करणम्' इति वचनममुमेवार्थं विशदीकरोति। अद्रव्यवाचिनामपि करणत्वं दृश्यते यथा "करणे च स्तोक—"[२।३।३३] इति सूत्रे।

(ज) शब्दशक्तिप्रकाशिकायां करणत्वं निगूढं लक्षितम्—'योऽर्थो विकरणाक्तस्य धातोरर्थे तृतीयया। बोध्यते करणं नाम कारकं तदिहोच्यते॥' इति। क्वचिच्चोपाधिभेदमाश्रित्यापि कर्मकरणादयः प्रयुज्यन्ते, यथा प्रयुक्तं कालिदासेन कुमारे—'आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना' इति। क्वचिच्च करणस्य स्वपर-भेदेन द्विधा विभागः कृतः, नात्र पाणिनीयानामाग्रह इति दृश्यते। भरतमल्लिकस्य कारकोल्लासे विभागोऽयमुक्तः।

( २ )

अथात्र हेतुपदार्थो विचार्यते। एनं शब्दं पाणिनिः संज्ञारूपेण अपि व्यवहृतवान्, 'तत्प्रयोजको हेतुश्च' (१।४।५४) इत्यत्र। अत्र तु फलसाधनयोग्यार्थकस्य हेतुशब्दस्य ग्रहणं यमर्थमाश्रित्य 'हेतौ' [२।३।२३] इत्यादिसूत्राणां प्रवृत्तिरस्ति। अत्र लौकिको हेतुर्गृह्यते।

किंस्वरूपकोऽयं हेतुरित्यत्र सिद्धान्तभूतवचांसि संगृह्यन्ते—

(क) फलसाधनयोग्यः पदार्थो लोके हेतुरित्युच्यते

( काशिका ), अन्ये च 'फलमनिष्पादयन्नपि फलसाधनयोग्यः' इत्युक्तवन्तः ( प्रसादटीका )।

(ख) 'योग्यतामात्रयुक्तः अनाश्रितव्यापारोऽर्थः द्रव्य-गुणक्रियाविषयो हेतुः' ( कैयटः )। अत्र टीका — 'व्यापारा-नाविष्टत्वे द्रव्यगुणक्रियाविषयत्वे च हेतुः योग्यतामात्रयुक्तः' इति। हेतुविषये इदमेव विशदतमं लक्षणम्, अन्यैरपि तथैवाभ्युपगमात्, यथा पदमञ्जरीकारो बभाषे—'लोके हि अङ्कुरादिकार्योत्पादने योग्यतामात्रप्रयुक्तोऽनाश्रितव्यापारो द्रव्यगुणक्रियाविषयो बीजादि-र्हेतुः' इति। तथैव हरिरप्याह—'द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्। अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ॥'' इति।

(ग) क्वचिच्च हेतुत्वे सत्यपि तादर्थ्यविषयिणी विवक्षा भवति, यथा 'यूपाय दारु' इति प्रयोगे तादर्थ्यं विवक्षितं, न तु हेतुत्वम् ( यद्यपि तत् सत् )। अतो दारुशब्दात् प्रथमैव।

(घ) क्वचिच्च फलमपि हेतुरित्युच्यते। तदेतत् 'प्रत्ययः' ( ३।१।१ ) इति सूत्रभाष्यस्थे 'विकारागमेषु च...' इति वार्त्तिक-व्याख्याने कैयटेन व्याख्यातम्, उदाहरणमपि दत्तम् 'अध्ययनेन वसती'ति।

(ङ) कौमुद्यां श्रीदीक्षितो हेतौ निर्व्यापारवत्त्वं सव्यापार-वत्त्वं च स्वीकृतवान्, अर्थात् तन्मते द्वारीभूतव्यापारवत् तद्रहितं च हेतुत्वम् इति।

(च) हेतु-शब्दस्य कारणवाचित्वात् ( हेतुर्ना कारणं बीजम् इति कोशात् ) सर्वं कारणं हेतुशब्दवाच्यं भवति। तथैव प्रयोगा दृश्यन्ते यथा—( १ ) 'हेतुः कारणम्, आरम्भकत्वेन प्रकृतिरुच्यते' ( गीताभाष्यम्, शाङ्करम् १३।२० )। हेतुः=प्रत्यय इति बौद्धा मन्यन्ते, प्रत्ययश्च कारणवाची, इति नाविदितं बौद्धागमिनाम्।

'हेतावीर्ष्युः फले नेर्ष्युः' इति चरकवाक्ये हेतुपदं निमित्तवाचि। निमित्त-कारण-हेतु-प्रयोजनादिशब्दाः खलु पर्यायवाचिन इति कैयटो व्याख्यत्।

(छ) न्यायशास्त्रे पञ्चावयववाक्यमध्येऽपि हेतुशब्दः प्रयुक्तः, अत्र हेतुशब्दो लिङ्गवचन इति सम्प्रदायः। अत्र 'हिनोति गमयति इति हेतुः कारणम्' इत्यर्थः करणीयः। न केवलं कारणम्, अपि तु कार्यकारण-पारम्पर्यज्ञानमपि हेतुशब्दवाच्यम्; अत एव हेतुवाद-शब्दः प्रयुक्तो भवति। कार्य-कारण-विषयक-तर्क-परत्वो मानवधर्मे 'हैतुक'-पदेन सूचिता इति दृश्यते, यथा 'हैतुकान् बकवृत्तींश्च वाङ्-मात्रेणापि नार्चयेत्' इत्यत्र। अस्ति च प्रसिद्धः प्रयोगः प्रमाण-वाचिनो हेतुशब्दस्य। ( अस्य कारणमुपरिष्टाद् वक्ष्यते। )

(ज) कारकचक्रे भवानन्दसिद्धान्तवागीशो हेतुं करणं च पृथक्त्वेन लक्षितवान्—"धनेन कुलं, विद्यया यश इत्यादौ तृतीया हेतुत्वे, 'कर्तृकरणयोस्तृतीया' इत्यत्र क्रियासाकाङ्क्षतया निरुक्त-करणत्वे तृतीया, अत्र नामार्थेनापि साकाङ्क्षतया हेतुसामान्ये 'हेतौ' इति सूत्रेण* तृतीया विहितेति भेदः।" इति। अन्ये नैयायिक-देशीयाः कारकीयं करणत्वम्, अकारकीयं करणत्वम् इति

---

* हेतुकरणभेदविषये इदं मतान्तरमपि दर्शितम्—क्रियासाधकतमं यत् तद् व्यापारवत्त्वेन विवक्षितं चेत् करणं, नो चेद् हेतुः, द्रव्यसाधकतमस्य दण्डा-देस्तु व्यापारवत्त्वेऽपि हेतुत्वमेव। एवं च 'रामेण बाणेन हतः' इत्यत्र हनने बाणादिर्निमित्तम्—इत्येतावदेव यदा विवक्ष्यते, तदा 'हेतौ' इत्यनेनैव तृतीया। 'बाण-व्यापार-साध्य-प्राणवियोगाश्रयः' इत्येवं व्यापाराविष्टत्वेन विवक्षायां तु हेतुत्वाविवक्षणात् 'कर्तृकरणयोः—' इति करणे तृतीया आरब्धा इत्याहुः। (तत्त्वबोधिनी २।३।२३)

विवेचितवन्तः, यथा शब्दशक्ति-प्रकाशिकायां जगदीशतर्कालङ्कारः पूर्वोद्धृतकारिकाव्याख्याने *। वर्तते च द्विविधो भेदो हेतुत्वस्य, यथा ज्ञापककारणत्वम्, उत्पादककारणत्वं च, तथापि तस्य ऐकध्यं खलु न्यायसिद्धम्। एतच्च व्यापकत्वेन करणत्वसमानाधिकरणमपि इति कथयितुं शक्यते †।

तत्र हेतोरुदाहरणानि दीयन्ते—

द्रव्यं प्रति हेतुः—दण्डेन घटः। गुणं प्रति हेतुः—पुण्येन ब्रह्मवर्चसम्। क्रियां प्रति हेतुः—पुण्येन हरिदर्शनम्। परन्तु इदं स्मरणीयं यद् 'दण्डेन हन्ति' इति वाक्ये दण्डः करणं भवति (क्रियानिरूपितत्व-व्यापारवत्त्वाभ्याम्)। द्वितीयोदाहरणे यत् किञ्चिद्व्यापारवत्त्वसम्भवेऽपि क्रियानिरूपितत्वाभावात् न करणत्वम्। तृतीये तु क्रियान्वयित्वसम्भवेऽपि व्यापारवत्त्वाभावान्न करणत्वम्, अन्त्योदाहरणद्वये क्रियानिरूपितत्व-व्यापारवत्त्वोभयसम्भवे सति करणत्वमपि स्यात्; न हि हेतुत्वं करणत्वं वा क्वचिद् वस्तुनि व्यवस्थितम् इति वैवक्षिकम् इति प्रागेव उपपादितम्। यदा पुण्यशब्देन पुण्यकर्माभिधीयते, तदा करणत्वं, यदा च परमापूर्वमुच्यते तदा हेतुत्वमेव।

प्राचार्याश्चापि हेतु-करणयोर्भेदं स्वदृष्ट्यनुसारेण व्याख्यातवन्तः। यथाह कश्चित्—'यदधीना कर्तुः प्रवृत्तिः स हेतुः, कर्त्रधीनं करणम्' इति। क्रियायुक्तत्वायुक्तत्वाभ्यामपि भेदो

---

* ज्ञापकत्वलक्षणं हेतुत्वं गौणम्—इति शब्दशक्तिप्रकाशिका-व्याख्यायां निगदितम् (पृ १३८, कलिकातासंस्करणम्)।

† पाणिनीयानां मते करणहेत्वोः वैवक्षिकत्वेऽपि तत्तद्विषयकशाब्दबोधे भिन्नताऽस्त्येव, अत एव 'हेतौ' इति 'कर्तृकरणयोः—' इति द्वे सूत्रे चरितार्थे भवतः।

व्याख्यायते, अत एव 'हेतौ' इति सूत्रस्थानि काशिकोदाहरणानि व्याख्याय हरदत्त उक्तवान् —'उदाहरणेषु क्रियाभावात् करणत्वमनाशङ्कनीयम्'। फल-सिद्धये कर्त्रा यत् आदीयते तत् करणसंज्ञकम्, यत्र तादृशी विवक्षा नास्ति, तत्र येन फलसिद्धिर्भवति स हेतुः इत्येतल्लक्षणं सर्वसाधारणम्॥

अथात्र कोष्ठकेन हेतु-करणभेदो दर्श्यते।

| | करणम् | हेतुः |
|---|---|---|
| १। | क्रिया-साधकम् | द्रव्य-गुण-क्रिया-जनकः। |
| २। | नियमेन व्यापारवत् | व्यापारानाविष्टः, अन्ये तु निर्व्यापारसाधारणोऽयमित्याहुः। |
| ३। | कर्तुरधीनम् | न तथा, यदधीना कर्तुः प्रवृत्तिः सः |
| ४। | | फलवाच्यपि भवति |
| ५। | असाधारणं कारणम् ( न्यायः ) | कारणपर्यायवाची, |
| ६। | क्वचिद् भावनापेक्षः | न तथेति दृश्यते |
| ७। | सदैव निष्पादन-योग्यतावत् | साधनयोग्यतामात्रवान् |
| ८। | इदं कारकविशेषरूपम् | नायं तथा |
| ९। | क्रियासाकाङ्क्षम् | नामार्थसाकाङ्क्षः। |

---

## सीमा-समस्या

### ( २ )

[ श्रीउपेन्द्रनाथ-गङ्गोपाध्यायः ]

"कति दिनानि ?"

"यति दिनानि वंशो वंश एव स्थास्यति, दूर्वा च दूर्वैव स्थास्यते। वंशश्चेत् प्रह्वीभूय दूर्वा च प्रांशूभूयैकस्मिन्नेव स्थाने व्यतिषक्तौ भवेताम्, तर्हि किं स्यादिति प्रभवसि वा वक्तुम्?".

समरेशस्याननं मृदुकौतुकस्मितेन समुद्भासितमभवत्। तेनोक्तम्—किं वा स्यादिति।

"वंशः स्वं गौरवं हारयिष्यति, दूर्वापि लगुडाकारेण परिणता गोबलीवर्दानामुदरपूरणमकृत्वा तेषां पृष्ठानि भङ्क्ष्यति, यथास्माकं पृष्ठानि भञ्जन्तीदानीन्तन-दासदासीसूदव्राताः।"

"भञ्जन्ति ननु?"

"किमिति पृच्छ्यते? अपि न ज्ञायते त्वया? अद्यत्वे दास्यस्तावन्महिलाः सञ्जाताः, दासा भद्रमहोदयाः, सूदाश्च पुरोहितमहोदयाः। अपि जानास्यन्तरान्तरा को वाभिलाषः समुदेति मे मानसे? अभिलाषो मे भवति दास्याः कर्म स्वहस्तेन निर्वर्त्य दासीर्विदलितदर्पा विदध्यामिति।"

कौतुकसंफुल्लाननः समरेशोऽवदत्, अतिमात्रं साधुरयमभिलाषः। भवादृश्यो भद्रमहिलाश्चेदन्तरान्तरा दासीनां कर्मस्वात्मानं व्यापार्य दासीनां कर्म समुन्नतजातिमापादयितुं साहाय्यं विदध्युः, तर्हि बृहज्जातीयमस्माकमुद्देश्यमेकं सिद्धिपथे पदमर्पयेत्। वस्तुतः परिश्रमस्य गौरवं सर्वदा सर्वत्र स्वीकृतं भवत्वित्येवास्माभिः प्रार्थ्यते, किञ्चैकजातीयस्य परिश्रमस्यापरजातीयेन परिश्रमेणासङ्गतो विभेदो न क्रियेतेति। एतेनैतदुक्तं भवति—समाजस्य संस्थानं सुनिर्मित-लोकोमोटिभेञ्जिनवद् ( गमनक्षमवाष्पयन्त्रवद् ) भवेत्, यस्याभ्यन्तरे पिष्टनस्य ( नलदण्डस्य ) महिम्नः सद्भावे तुच्छतमस्येस्क्रुपस्य ( screw—कर्षणी ) गौरवं नावहीयते" इति।

वनलतावदत्, तत्तत्रतीव समीचीनम्, परं तुच्छतमोऽयमिस्क्रुपमहोदयो यद्यावर्तनबन्धनाद् विनिष्क्रम्य पिष्टनमिव लम्फझम्पनानि विदध्यात् तर्हि तपस्विन एञ्जिनस्य का वा समवस्था स्यात्? इति।

लोकोमोटिभेञ्जिनस्योपमाया अभ्यन्तरे प्रतिपाद्यवस्तुनः समाधानं संन्यस्य, समरेशेन चिन्तितम्—स्वपक्षसमर्थने दार्ढ्यं विहितमिति, परमकस्मादिस्क्रुपमावर्तनबन्धनदात्मानं मोचयित्वा यन्त्रं विकलं कर्तुमुपक्रममाणम् अवलोक्य प्रथमतोऽसौ प्रतिपत्तिमूढः सञ्जातः, परक्षणे पुनः समुद्बुद्धमतिरवदत्, इस्क्रुपश्चेदावर्तनबन्धनाद् विनिष्क्रामेत्, तर्हि तदेव बोद्धव्यं यद् इस्क्रुपस्यावर्तनेन साकमिस्क्रुपविवरस्य सामञ्जस्यं नास्तीति।

समरेशस्य वचसा परमां प्रीतिमापन्ना वनलतावदत्, तर्हि यथा सामञ्जस्यं सङ्घटेत तथा विधातव्यम्। वामहस्तो दक्षिणहस्तश्च प्रतिबोधनीयौ, न खलु शिरसे कुपित्वा शिरः समाहत्य शिरसा साम्यमधिगन्तुं शक्यमिति।

प्रत्युत्तरमनुनिशम्य समरेशश्चिन्तामापन्नः। लोकोमोटिभेञ्जिनस्योपमायाः साहाय्येन वादोऽयं न खलु सम्यङ् न प्रचलति स्म, तयोश्चैञ्जिनयन्त्रादिगतज्ञानस्य सङ्कीर्णतावशाच्च तेन पथा वादोऽयं प्रायेण समाप्तिमेवागमत्, परं सहसा वनलता निर्जीवयन्त्रं परित्यज्य सजीवयन्त्रे मानवदेहे भरं चकारेति मन्ये वादोऽयं सुदीर्घं नवीनं पन्थानमन्विष्याविष्कर्तुमवसरमध्यगच्छत्। मानवदेहस्तावन्नितरां जटिलमेव वस्तु, मांसशोणित-मेदमज्ज-शिरोपशिर-प्लीह यकृद्-हृत्पिण्डपुप्फुसप्रभृतीनां तासां तासामुपमानां साहायकेन वादोऽयं तर्कवितर्कयोर्निःसीमे नभसि चेत् पक्षविस्तारं कुर्यात्, को वा तं निरुन्धीत? निरतिशयकौतूहलजनकस्याङ्लभाषामयस्य निबन्धस्य समापनोपयोगी यस्तावदवसरस्तदायत्त आसीत्, तस्य सर्वथा समुच्छेदमकृत्वा वादोऽयं कदापि न विरामं भजिष्यति।

उपमाया यष्टिं परित्यज्य सरलया वङ्गभाषया व्यवहारेण तर्कस्याशु परिसमाप्तिं सङ्घटयितुं प्रयासमातिष्ठेयम्, आहोस्वित्

सव्यदक्षिणहस्तयोरुपमायोः प्रत्युत्तरेण मानवदेहस्यैव सुतरां दुर्निर्णे' किमप्यङ्गम्—आपेण्डिकसं वा फलिकसं वा गृहीत्वा तस्यापरिसंज्ञेयां वृत्तिमधिकृत्य दुर्बोधामुपमां विरचय्य वन. लतां कथञ्चित् प्रशमयेयमित्येव मन्ये समरेशो मनसा विचारयन् स्थितः। अवसरे चास्मिन् भृत्यो हरिपदः समागत्य तं विपदस्त्रातवान्। सोऽवदत्, आ ! कश्चन मक्केलः सम्प्राप्तः; कार्यगृहे तमुपवेश्यागतोऽस्मीति। ( क्रमशः )

---

## पुस्तकपरिचयः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

**व्यासपञ्चाङ्गम्।** संवत् २००७। राजवैद्य-श्रीजीवराम-कालिदासशास्त्रिकृतम्। रसशाला औषधाश्रम, गोण्डाल, सौराष्ट्र, काठीयावाड इत्यतो लभ्यम्। मूल्यं रूप्यकद्वयम्।

ग्रहलाघवानुसारेण सुनिपुणं गणितमिदं सुबृहत् पञ्चाङ्गं गुजरातीभाषामयमप्यन्तरान्तरा संस्कृतश्लोकादिभूषितं दर्शनमात्रेणैवापहरति मनो वाचकस्य। अत्र श्रीजगद्गुरुशङ्कराचार्याणां समयनिर्णयः संस्कृतभाषयैव कृतः, श्रीमज्जगद्गुरवश्च ६०१ कल्यब्देषु समतीतेषु प्रादुर्भूता इति सिद्धान्तितम्। श्रीपाशाशकुनावली नाम संस्कृतभाषामयो ग्रन्थोऽप्यत्र मुद्रितः। वर्षफलं ज्योतिषशास्त्रगतानि सबहूनि वचनानि चात्र सन्निविष्टानि। बहूनां महापुरुषाणां जन्मकुण्डल्योऽप्यत्र विलसन्ति। Dr. Aldo Lavagnini लिखितमाङ्लभाषामयं Horoscope of the New Indian Republic अप्यत्र मुद्रितम्। अवश्यं संग्राह्यमिदं पञ्चाङ्गं ज्योतिषशास्त्रानुशीलिभिरिति शम्।

**ऋग्वेदसंहिता ।** श्रीमत्सायणाचार्यविरचितभाष्यसमेता। (नवम-दशममण्डलात्मकश्चतुर्थो भागः) सोनटक्के इत्युपाह्वः श्रीपादसूनुः नारायणशर्मा काशीकरोपाह्वः गणेशसूनुः चिन्तामणिशर्मा इत्येताभ्यां सम्पादिता। तिलकमहाराष्ट्रविद्यापीठशाखाभूत-वैदिकसंशोधनमण्डलेन प्रकाशिता। (Vaidik Samshodhana Mandala, Tilak memorial, Poona 2)। मूल्यं पञ्चविंशती रूपकाः।

विदितमेवैतत् प्रायेण वाचकमहाभागानां यदृग्वेदसंहिता सायणभाष्यसमलङ्कृता भारते वर्षे विदेशे चासकृत् सम्मुद्रितेति। तत्र माक्समूलरमहोदयेनैव द्विर्मुद्रितेयं सभाष्या संहिता, प्रथममुद्रणे प्रमादानां बाहुल्यमासीत्, द्वितीयमुद्रणे पुनर्बहवः प्रमादाः संशोधिताः। उभयोरेव संस्करणयोर्मुद्रणसौष्ठवं प्रतिपदं प्रकाशमानं संस्कर्तुरनितरसाधारणः परिश्रमः सूक्ष्मेक्षिका च विमोहयत्येव मानसानि सहृदयानाम्। साम्प्रतं पुण्यपत्तनस्थवैदिकसंशोधनमण्डलेन प्रकाशिता सभाष्या ऋग्वेदसंहिता भागचतुष्टयात्मिका पाठान्तरविचारविभूषिता माक्समूलरस्य द्वितीयमुद्रणादपि गुणगणगरीयसी नितरामेवोपादेया संवृत्ता। परमतोऽप्युत्कर्षस्यावकाशो वर्तते। आशास्यते पुनर्मुद्रणावसरे सम्पादकमहाभागैः समधिकः प्रयासः समास्थीयेत संशोधनविषये इति।

अत्र प्रास्ताविके ५०-पृष्ठे दृश्यते "[१०.५] २८२.८.[१] मनो वै देवा मनुष्यस्य जानन्ति, इति कुत्रोक्तम्?" इति। प्रश्नोऽयं श्रुतिशास्त्रपरिशीलनपराणां चेतसि न चमत्कारमातनोति। प्रसिद्धतमस्य शतपथब्राह्मणस्य प्रारम्भे एव सन्दृश्यते "मनो वै देवा मनुष्यस्याजानन्ति" इति। परस्तादप्यसकृदिदमुपलभ्यते। हकारस्य निपातस्य आङश्चोपसर्गस्याधिक्येऽपि शतपथब्राह्मणगतमेव वचनं सायणाचार्यस्याभिप्रेतमिति प्रतिभाति।

५३-पृष्ठे दृश्यते—"व्रियमानाख्यं—त-भ-य। भ-१.२.३.४.७-पुस्तकेषु कियांश्चिदंशो लुप्तः। 'न्' इति दन्त्यवर्णस्य भावात् व्रियुक्तः पाठोऽवद्धः। 'श्मशानाख्यं' इति मक्समुल्लरमहाशयाः संभावयन्ति। तेषां टिप्पणी तै. आ. ६.४.२ च द्रष्टव्यम्" इति।

दशममण्डलान्तर्गतचतुर्दशसूक्तस्याष्टम्यामृचि वर्तते—"हित्वायावद्यं पुनरस्तमेहि" इति। व्याख्यातञ्च सायणेन—"अवद्यं पापं हित्वा परित्यज्य अस्तं व्रियमानाख्यं गृहम् एहि आगच्छ" इति।

Max Müllerमहोदयेन द्वितीयसंस्करणस्य चतुर्थखण्डान्तर्गतपाठान्तरप्रकरण उक्तम्—"व्रियमानाख्यं A. CA. B 4. व्रियामानाख्यं C2; deest in CB. The dental n shows that the mistake lies in व्रि, but I cannot amend it properly. It may be श्मशानाख्यं, or it may refer to the same idea which is expressed in the *varia lectio* of the TA. VI. 4, 2 (7), where we read यत्र भूम्यै वृणसे तत्र गच्छ" इति।

एतदत्रातीव विस्मयकरं यत् Max Müller-मुद्रितात् ग्रन्थादर्धशताब्द्या उत्तरं सम्पादकमहाभागाभ्यामभिनवं किमपि वक्तुं न पारितम्। १९३८-ख्रिस्तीयाब्दे त्रिशिरःपुरतो हरदत्तमिश्रविरचिताश्वलायनगृह्यमन्त्रव्याख्या प्रकाशिता। तत्र दृश्यते—"किञ्च अवद्यं हित्वाय हित्वा पुनः पश्चादस्तं गृहं विमानाख्यम् एहि" इति। अत एव विमानाख्यम् इत्येव पदं सायणाचार्यैर्विलिखितमिति प्रतिभाति। १९४४-ख्रिस्तीयाब्दे कलिकाताविश्वविद्यालयतः प्रकाशितस्य Vedic Selections ग्रन्थस्यान्तेऽस्माभिरपि शोधनपत्रे पाठोऽयं समुल्लिखितः।

अत्र वियमनाख्यमिति पाठोऽपि सम्भवति।

८५-पृष्ठे दृश्यते— "चैत्रमासे तयोरिन्द्रः। किमस्य मूलम्? ऋ. सं. ३.३४.१ मन्त्रे 'चैत्रमासे तपेदिन्द्रः' इति स्मृतिरुद्धृता" इति। ९९पृष्ठे दृश्यते—"चैत्रमासे तपेदिन्द्रः। इति स्मृतिवचनं क्वत्यम्?" इति

"चैत्रमासे तपेदिन्द्रः" इति वचनं श्रद्धालुजनवदनकमल-विहारिण्यादित्यहृदयस्तोत्रे समुपलभ्यते। देवनागरलिप्यां पययोः प्रायेणैकरूप्यात् क्रमेण लिपिकरप्रमादात् 'तपेदिन्द्रः' तयोरिन्द्र-रूपेण विपरिणतः। अत एव दशममण्डले शुद्धः पाठः — "चैत्रमासे तपेदिन्द्रः" इति। १।५०।४ भाष्येऽप्यादित्यहृदयत उद्धृतम् —"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने" इति। तैत्तिरीय-ब्राह्मणेऽपि (२।८।७।३) योजनानामित्युद्धृतम्।

१०।११५।७-मन्त्रभाष्ये मुद्रितं दृश्यते — " 'सुधितार्था-स्तृप्त्यर्थाः' इति काशिकायामुक्तम्।" इति। प्रास्ताविकस्य ८९-पृष्ठे सम्पादकमहोदयाभ्यामुक्तम्—"इदं काशिकायां ( पा. सू. ७।४।४५ ) नोपलभ्यते" इति।

माक्समूलरमहोदयेनोक्तं—The quotation is not in Kāsikā VII. 4, 45, सम्पादकमहोदयाभ्यामपि उक्तम् इदं काशिकायां (पा. सू. ७.४.४५) नोपलभ्यते इति। येषां पुनः काशि-कया साकं लेशतोऽपि परिचयो वर्तते तैरपि ज्ञायते "पूरणगुण-सुहितार्थसदव्ययतव्यसमानाधिकरणेन" [२।२।११] इति सूत्रस्थ-काशिकायां देदीप्यते वचनं "सुहितार्थास्तृप्त्यर्थाः" इति। सायणाचार्यै-र्लिखितम्— "सुधिताः सुहितास्तृप्ताः ... सुहितार्थास्तृप्त्यर्था इति काशिकायामुक्तम्" इति। अत्रापि Max Müller एवानुस्रियते। मूलस्थसुधितशब्दवासितचित्तस्य लिपिकरस्य प्रमादादेव सुधि-तार्थाः स्तृप्त्यर्थाः इति पाठ उद्धृतः।

नवममण्डलस्य ७६-सूक्तस्य प्रथमर्ग व्याख्याने भाष्यकृद्भिरुक्तम्—"'आबाधे च' इति द्विर्भावः। पीड़ा प्रयोक्तृधर्मो नाभिधेयधर्म इत्युक्तम्" इति। माक्स मूलरमहोदयेनात्रोद्धारचिह्नानि न सन्निविष्टानीति पुण्यपत्तनपुस्तकेऽपि तानि न सन्निविष्टानि। माक्समूलरमहोदयेनोद्धृतवाक्यस्याकरो नोल्लिखित इति पुण्यपत्तनपुस्तकेऽपि स नोल्लिखितः। एवञ्च उक्तमिति पदस्य सन्दर्शनेन वाचकाः 'क्वोक्तम्? केनोक्तम्?' इत्यादिकाभिः प्रश्नपरम्पराभिरस्वास्थ्यमेवानुभवन्ति। वस्तुतस्तु "पीड़ा प्रयोक्तृधर्मो नाभिधेयधर्मः" इति काशिकावचनम्। मुद्रितकाशिकायाम् "पीड़ा प्रयोक्तृधर्मः" इत्येवोपलभ्यते, न्यासे च तदेव व्याख्यातम्। "पीड़ा प्रयोक्तृधर्मो नाभिधेयधर्मः" इति पाठः पुनः पदमञ्जरीसम्मतः। सायणाचार्येण स एव पाठः प्रमाणीकृतः।

९।६६।११ भाष्ये दृश्यते—"असृग्रं सोमा ऋत्विग्भिः सृज्यन्ते। सृजेः कर्मणि 'तिङां तिङो भवन्ति' इति झो रमादेशः" इति। अत्रापि Max Müller एवानुस्रियते। पादटिप्पण्यां दृश्यते—"ग-भ१-मु—झेरमादेशः; त१-नोरमादेशः; त२.४.५.६.७—नो इमादेशः" इति। प्रास्ताविके सम्पादकमहोदयाभ्यामुक्तम्—"झो रमादेशः त३भ-१.२.४। झस्यामादेश इति भाष्यम्" इति।

अत्र "झेरमादेशः" इति पाठ एव समीचीनतया प्रतिभाति। तथाहि ९।९६।२२ मन्त्रे "प्रास्य धारा बृहतीरसृग्रन्" इति पादं व्याचक्षाणैर्भाष्यकृद्भिरुक्तम्—"प्र असृग्रन् प्रसृज्यन्ते। सृजेः कर्मार्थे लङि व्यत्ययेन झेरनादेशः। 'बहुलं छन्दसि' इति रुडागमः" इति। ९।९७।३०-मन्त्रस्थासस्रग्रम्-पदमपीत्थं व्याख्यातं भाष्ये—"अससृग्रं विसृज्यन्ते। सृजेर्व्यत्ययेन कर्मार्थे लङि 'बहुलं छन्दसि' इति शपः श्लुः। झेरमादेशश्छान्दसः।" इति।

यथा वयं पश्यामस्तथात्रापि "छेरमादेशः" इत्यस्यानन्तरं "बहुलं छन्दसि" इति रुडागम इत्यासीत्, लिपिकरेण पुनः सम्भावित ं छः स्थाने यदा 'रम्' एवादेशो भवति, तदाजागलस्तनायमानेन रुटा किं प्रयोजनमिति। एवञ्च निष्कासितोऽयं भागः।

१०।५।४-भाष्ये दृश्यते—"वावृधाते वर्धयां चक्रतुः" इति। एवमेवान्यत्र दृश्यते—"दित्सां चकार" इति। ईदृशेषु स्थलेषु सम्पादकमहाभागाभ्यां Max Müller एवानुसृतः। पाणिन्यादिमुनीनां मतेनात्रैकपद्यमेव युक्तम्। अत्र एव वर्धयाञ्चक्रतुः, दित्साञ्चकार इत्येवं रूपेणाव्यवधानेन मुद्रणीयम्।

१०।११।८-भाष्ये दृश्यते—"वीतात् वी गत्यादिषु।... अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। वयय आगमय अस्मभ्यं प्रयच्छेत्यर्थः। Max Mll er-ग्रन्थे दृश्यते—...वयय आगमय। अस्मभ्यं प्रयच्छेत्यर्थः।" इति। अत्रेदमवधेयम्। भाष्यकृद्भिर्विस्पष्टमेवोक्तम्—अन्तर्णीतण्यर्थश्चात्र द्रष्टव्य इति। अत एवार्थप्रदर्शनावसरे तैर्णिजन्तस्यैव वीधातोः प्रयोगः समुपासितः। ण्यन्तस्य च वेतेर्लोटि वाययेति रूपम्, न पुनर्वययेति। किञ्च, वी गत्यादिषु इत्युक्तम्। अत एव 'वायय' इत्यस्यानन्तरम् 'गमय' इत्यपेक्षितम् न पुनरागमयेति। यथा वयं पश्यामस्तथा हस्तलिखितपुस्तके "वयय। गमय" इत्येवासीत्। ततः केनचन लिपिकरेण छेदचिह्नमाकारं सम्भाव्य 'वययागमय' इति पठितं लिखितञ्च। ततः सन्धेर्विश्लेषेण वयय आगमय इति सञ्जातम्। ततः पुनरपि छेददण्डसंयोजनेन "वयय। आगमय" इति प्रादुर्भूतम्। मुद्रिते उद्गीथाचार्यभाष्ये दृश्यते "हे स्थानेऽत्र ताङ्। अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः। वाहय गमयास्मभ्यं देहीत्यर्थः" इति। अत्र "हेः स्थाने तातङ्।...वायय..." इति पठनीयम्।

१०।१७।८ भाष्ये दृश्यते—"प्रपथे यः प्रकृष्टः पन्थास्ति तत्र" इति। "नान्यः पन्था विद्यतेऽयनाय' इति प्रसिद्धतमायां श्रुतौ वकारसान्निध्येन विसर्जनीयस्य स्वर्गलाभः संवृत्तः, वस्तुतस्तु पदमिदं विसर्जनीयान्तम्। अत एव 'पन्थाः अस्ति' इत्यत्र विसर्जनीयस्य लोपे, लोपस्यासिद्धत्वात् 'पन्था अस्ति' इति भाव्यम्। उद्गीथाचार्यभाष्ये दृश्यते—"पथां मध्ये यः प्रकृष्टः पन्थाः तत्र प्रपथे " इति। अतोऽत्रापि "प्रपथे यः प्रकृष्टः पन्थास्तत्र" इति पठनीयमिति प्रतिभाति।

१०।३४।५ भाष्ये दृश्यते—"न दविषाणि न दूषये न परितपामि" इति। अत्रापि Max M ller एवानुसृतः। प्रास्ताविके दृश्यते "न दूषये—त७ *म-मु। न दूये-ग ; दूषये—त-भ। Max Müller-महोदयस्य ग्रन्थे दृश्यते—न दूषये॥ दूषये B.C. दूषय A. इति। अत्रेदं न विस्मर्तव्यं यद् दविषाणि-पदस्यार्थो विलिख्यते भाष्यकृतेति। तत्रादौ दूधातोर्निष्पन्नमिदं पदमिति भङ्ग्या प्रदर्श्यते, ततश्च दिव्धातोर्निष्पन्नत्वमप्यस्य सम्भवतीति व्याख्यायते। अत एव दूषये इति पदमत्र कथमपि न सङ्गच्छते। दैवादिकस्य दूङ् परितापे इति धातो निष्पन्नस्य पदस्य न दूये न परितपामीत्यर्थ-कल्पनमेव युक्तम्।

"न दूये सात्वतीसूनुर्यन्मह्यमपराध्यति।
यत्तु दन्दह्यते लोकमदो दुःखाकरोति माम्॥"
"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये॥"

इत्यादिषु सुप्रसिद्धेषु श्लोकेषु "दूये" इति पदमुपलभ्यते, दूये इति पाठश्च गपुस्तके समुपलभ्यत एव। केवलं Max

Müller-श्रद्धाजाड्येन सम्पादकाभ्यां माक्समूलरानुगतो भ्रान्तः पाठोऽङ्गीकृतः। ०

१०।१४९।२ मन्त्रस्य "अतो द्यावापृथिवी अप्रथेताम्" इति पादस्य भाष्ये दृश्यते—"अतः अस्मादेव सवितुः द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां विस्तीर्णेऽप्यभूताम्" इति।

अत्र 'विस्तीर्णे अभूताम्" इति पाठः समीचीनतया प्रतिभाति। "आदिद् द्यावापृथिवी अप्रथेताम्" [ १०।८२।१ ] इति पादस्य भाष्ये दृश्यते—"आदित् अनन्तरमेव द्यावापृथिवी द्यावापृथिव्यौ अप्रथेतां यथाकामं प्रथिते अभूताम्" इति। यदि १०।१४९।२ इत्यत्र समुच्चयार्थको निपातोऽपेक्षित इति मतम्, तर्हि "विस्तीर्णे चाभूताम्" इति पठनीयम्।

१०।१४९।३ मन्त्रगतस्य—"सुपर्णो अङ्ग सवितुर्गरुत्मान्" इत्यंशस्य भाष्ये दृश्यते—"हे अङ्ग स्तोतः" इति। अत्र 'अङ्ग पूजासम्बोधनयोः' इति वचनमाद्रियमाणेन भाष्यकृता "अङ्ग हे स्तोतः" इति विलिखितमिति प्रतिभाति। तथाहि "अङ्गाग्ने हे अग्ने" ( १।१।६ ), "अङ्ग अश्विना हे अश्विनौ" इत्यादिकं दृश्यते।

सूत्रादीनामाकरनिर्देशोऽपि माक्समुलरमहोदयस्यैव पदाङ्कमनुसरद्भ्यां सम्पादकमहोदयाभ्यां बहुत्र सुप्रसिद्धानां सूत्राणां मूलं महतायासेन प्रदर्शितम्, अप्रसिद्धसूत्रविषये पुनर्लेशतोऽपि प्रयासो नास्थितः। "बहुलं छन्दसि" इति सूत्रमष्टाध्याय्यां बहुत्र सन्दृश्यते, अत एव विशेषत एवात्र सूत्रसंख्योल्लेख आवश्यकः, सम्पादकमहोदयाभ्यां तु प्रायेणात्र संख्यानिर्देशो नैव विहितः। बहुत्र च संख्यानिर्देशे प्रमादोऽपि सन्दृश्यते। तथाहि ४३७ पृष्ठे दृश्यते—'वनां वननीयम्। वा छन्दसि (पा. सू. ६।१।१०६-१०७) इति वचनादमि पूर्वाभावः।" इति। अत्रापि यथापूर्वमनुसृतो Max

Müllerमहाशय एव सम्पादकमहोदयाभ्याम्। "वा छन्दसि" इति सूत्रं ६।१।१०६, "अमि पूर्वः" इति सूत्रं ६।१।१०७। "अमि पूर्वः" इत्यत्र "वा छन्दसि" इत्यनुवर्तत इति त्वन्यदेव।

"वर्धया वाचं जनया पुरन्धिम्" [ ९।९७।३६ ] इत्यस्य भाष्ये दृश्यते—वाचं स्तुतिलक्षणां वर्धय। किंच पुरंधिं बहुधि प्रज्ञानं जनय अस्मभ्यम् उत्पादय इति।

Max Müller मुद्रिताद् ग्रन्थादेतद् गृहीतम्। तेन च पाश्चात्त्य-विदुषा लिखितं—बहुधियं MSS. The mistake of putting बहुधियं as an acc. neut. instead of बहुधि seems to be due to the copyists rather than to the author of the commentary. ( See my Sanskrit Grammar, § 226.) पुण्यपत्तनपुस्तकस्य प्रास्ताविकतोऽवगम्यते—सर्वेषु हस्त-लिखितेषु पुस्तकेषु 'बहुधियम्' इति पाठो वर्तते, मोहमय्यां मुद्रिते ऋग्वेदे च स एव पाठ आदृतः, केवलं Max Müllerएण बहुधि इति पाठः कल्पितः, पुण्यपत्तनस्थपुस्तकस्य सम्पादकमहाभागाभ्यां च स एव समर्थितः। Max Müller महोदयेन वाचकमहाभागाः स्वीय-Sanskrit Grammar पुस्तकदर्शनाय समादिष्टाः, परं कुतो वैतद् भागधेयं परमदरिद्राणामस्माकं यद् व्याकरणरत्नमिदं दृश्येत। महर्षियास्कविरचितं निरुक्तं पुनरस्मत्सविधे वर्तते, तत्र च दृश्यते—पुरन्धिर्बहुधीः [ ६।१३ ] इति। सायणाचार्येण मुनि-प्रवरस्य मतमनुसृत्य विलिखितं 'पुरन्धिं' बहुधियम् इति। बहु-धियमिति पदस्य च पर्यायत्वेन प्रज्ञानमिति योजितम्। न खल्विह बहुधियमिति पदं प्रज्ञानमित्यस्य विशेषणम्। अत एव सर्वेषु हस्तलिखितेषु पुस्तकेषु बहुधियमित्युपलभ्यते। १।११६।७ मन्त्रभाष्ये दृश्यते—पुरन्धिं प्रभूतां धियं बुद्धिम् इति। ( क्रमशः )

## What Scholars think of the Manjusha.

**Dr. Suniti Kumar Chatterji**, M.A., D.LITT. (London) Professor, Calcutta University, writes :

This little paper is unique in many respects. Sanskrit is said to be a dead language in India, but it is not yet as dead as many people think (or as some people would like to think ! )...

We have still about half-a-dozen Sanskrit journals in India, apart from fairly frequent addresses and dissertations which are published independently Among these journals, the *Manjusha* which is probably the only one of its kind appearing *regularly* month after month, has made quite a unique place of its own.

The *Manjusha* is run by Dr. Kshitish Chandra Chatterjee of the University of Calcutta, who is one of our most erudite authorities on the technical and other niceties of Sanskrit grammar. He is a student of languages and, in addition, he handles Sanskrit with ease. It has been his love of Sanskrit that has made him carry on the work of editing and bringing out this paper since its inception by himself. Financially it has been a thankless task. It has brought other disadvantages also—the editing and financing of a journal without much wide appeal because of its language has been a source of worry which has had its repercussions on his health. But he has not given in, because he is an incorrigible optimist when he is convinced his cause is noble. Prof. Chatterjee is quite an institution in himself. Then, he has been able to enlist a number of disinterested colleagues who help him with contributions and who are enthusiasts for Sanskrit like himself. And he himself writes. It is a remarkable thing that although he finds joy in unravelling the intricacies of Sanskrit grammar, he is not in his mental make-up a dry-as-dust grammarian. He has a wonderful sense of humour, supported by an inexhaustible fund of anecdotes and stories which he brings out in racy Sanskrit. So the pages of the *Manjusha* at times sparkle with laughter. Comparative linguistic he brings in frequently in his articles, and this is a remarkble "special feature" of this little paper. Further, it does not confine itself to Sanskrit alone. Proverbs, *Bon-mots*, wise sayings, *Mahavākyas*, etc. from different languages, English, French, German, Latin, etc., are rendered approapriately into Sanskrit, demonstrating the capacity of the language of the Gods to keep pace with turns of expression peculiar to various languages. One can say also that there is an "English Section" to this magazine, devoted as it is entirely to the culture of Sanskrit. Thus, the editor himself is bringing out through this magazine, in instalments, his English translation and commentary on the *Mahabhashya*

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*

of Patañjali which, when completed, will be a valuable contribution to the study of Sanskrit grammar through English.

A journal like this deserves a much wider appreciation which is its due. I think our high school students reading Sanskrit will find much of interest, pleasure and profit in it. I would suggest its being taken in all-schools, colleges and universities in India where Sanskrit is taught. Prof. Chatterjee has been able to obtain contributions from eminent Sanskritists not only from all over India but also from abroad and that is no negligible achievement. All power to his elbow for the rehabilitation and the glory of Sanskrit, and for re-establishing its popularity among young Indians of today !

The Madhuravani ( Belgaum ) says :

अस्याः पत्रिकायाः सम्पादकमहाभागाः नैकशास्त्रपारङ्गताः गद्यपद्यरचनासु सिद्धहस्ततया प्रथितयशसः। प्रायः संस्कृतपत्रिका-सम्पादकेषु अनधिगतस्थानमाङ्ग्लभाषाप्रभुत्वं प्रकृतसम्पादकेषु कनके मणिरिव पुष्यति प्रकाशविशेषम्, येन पाश्चात्यविद्याभिक्लिष्ट-चेतसामपि संस्कृतानुरागोत्पादनकर्मणि प्रभावमाविष्कुर्युः। इतर-संस्कृतपत्रिकासु अनुपलभ्यमानः कोऽपि पद्धतिविशेषोऽपि समेधयत्ये-तत्पत्रिकासुषमाम्।··· तदेवं गुणविशिष्टा अमौल्यलेखरत्नमञ्जूषाय-माणा यथार्थनाम्नी मञ्जूषा विपुलार्थकामैः व्युत्पन्नैः विद्वद्भिश्च अवश्यं संगृह्य स्वार्थं सम्पाद्य सरत्नमञ्जूषाप्रदायकाः सम्पादकाः प्रोत्साहनीयाः सविशेषकार्यक्षमतायाम्। ईदृशे सर्वतः प्रतिकूल-समयेऽपि नियतवेलं प्रकाशमानायाः यथाप्रतिज्ञं विषयभासुरायाः मञ्जूषायाः सम्पादकान् सश्लाघं समभिनन्दामस्तमाम्।

Printed and published by Sri Jyotish Chandra Chatterjee, B. A. from 81, Shyambazar Street, Calcutta—4. Printed at the Elm Press 63, Beadon Street, Calcutta—6.

